यं त्वा जनासो अभि संचरन्ति गाव उष्णमिव व्रजं यविष्ठ ।
दूतो देवानामसि मर्त्यानामन्तर्महाँश्चरसि रोचनेन ॥ २ ॥

यम् । त्वा । जनासः । अभि सम्ऽचरन्ति । गावः । उष्णम्ऽइव । व्रजम् । यविष्ठ ।
दूतः । देवानाम् । असि । मर्त्यानाम् । अन्तः । महान् । चरसि । रोचनेन ॥ २ ॥

**संस्कृतान्वयार्थः**—( यविष्ठ ) हे युवतम सदा युवन् 'अनुत्पन्नत्वात्' बाल्य-वार्द्धक्यरहित परमात्मन् ! ( जनासः-यं त्वा-अभि सञ्चरन्ति ) जना यं त्वामभितः सम्प्राप्नुवन्ति ( गावः- उष्णं व्रजम्-इव ) यथा गावः शीतार्ता उष्णं गोष्ठं गोस्थानं स्व-गृहमभि सम्प्राप्नुवन्ति । ( देवानां मर्त्यानाम् ) मुमुक्षूणां साधारणजनानां च ( दूतः-असि ) प्रेरको दुःखनिवारकश्च त्वं भवसि, यतः ( महान् रोचनेन-अन्तः-चरसि ) महान् सन् स्वप्रकाशमयेन तेजसा सर्वेषामन्तः चरसि व्याप्नोषि ॥ २ ॥

**भाषान्वयार्थ**—( यविष्ठ ) हे युवतम—न उत्पन्न होने वाला होने से बाल्य वार्धक्य से रहित सदा युवा परमात्मन् ! ( जनासः ) जन ( यं त्वा-अभिसञ्चरन्ति ) जिस तुझको सब ओर से सम्प्राप्त करते हुए अपने को तेरे अन्दर विराजमान समझते हैं ( गावः-उष्णं व्रजम्-इव ) जैसे कि गौएं शीतपीड़ित होने पर उष्ण—गरम शीत निवारक गोस्थान—गोशाला को सम्प्राप्त करती हैं, देवानां मर्त्यानाम् ) मुमुक्षुओं और साधारण जनों का ( दूतः-असि ) सन्मार्गप्रेरक दुःखनिवारक है, यतः ( महान् रोचनेन-अन्तः-चरसि ) तू महान् होता हुआ अपने प्रकाशमय तेज से सबके अन्दर व्याप्त है ॥ २ ॥

**भावार्थ**—परमात्मा उत्पत्ति रहित होने से बाल्य और वार्द्धक्य से रहित सदा युवा है । जनमात्र उसकी शरण लेते हैं जैसे शीतपीड़ित गौएँ गोशाला की । परमात्मा मुमुक्षु और साधारण जनों को आगे बढ़ने की प्रेरणा देता है, दुःख का निवारक है, वह प्रभावकारी तेज से सब में व्याप्त है, उसकी उपासना करनी चाहिये ॥ २ ॥

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना ।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः ॥ ३ ॥

शिशुम् । न । त्वा । जेन्यम् । वर्धयन्ती । माता । बिभर्ति । सचनस्यमाना । धनोः ।
अधि । प्रऽवता । यासि । हर्यन् । जिगीषसे । पशुःऽइव । अवऽसृष्टः ॥ ३ ॥

विद्युदात्मनोऽग्नेर्वर्णनमुच्यते—

**संस्कृतान्वयार्थः**—( त्वा ) त्वां विद्युद्रूपमग्निम् ( माता ) एषा सर्वेषां प्राणि-वनस्पतीनां निर्मात्री मातृभूता पृथिवी ( सचनस्यमाना ) स्वस्मिन् समवेतं करिष्यमाणा सती "*षच-समवाये*" [ *भ्वादि* ] 'ततः श्नं विकरणं मध्ये पतितं छान्दसम्', यद्वा चन-

स्यमानैः-अन्नं सेवमानैः प्राणिभिः सह युक्ता–*"चायतेरन्ने ह्रस्वश्च"* [ *उणा० ४ । २००* ] इति चायृधातोरसुनि तदन्तात् क्यचि च चनस्य इनि नामधातुः, "चनस्यतम्-चनस् शब्दात् क्यच्प्रत्यये तदन्तान्नामधातोर्लोटि मध्यमस्य द्विवचने प्रयोगः" [ ऋ. १ । ३ । १ दयानन्दः ] ( जेन्यं शिशुं वर्धयन्ती न बिभर्ति ) जयशीलं प्रभावकारिणं वत्सं शंसनीयं शोभनं वर्धयन्तीव धारयति ( धनोःअधि प्रवता यासि ) त्वं च विद्युद्रूपाग्ने धनोः-अधि-धन्वनि-अन्तरिक्षे सन् 'धनुः-धन्वन्' वैदिक साहित्ये पर्यायत्वं भजेते *"धन्वान्तरिक्षं धन्वन्त्यस्मादापः"* [ *निरु० ५ । ५* ] *"धन्वनाजिं जयेम" "धनुः शत्रोरपकामं कृणोति"* [ *ऋ० ६ । ७५ । २ ।, निरु० ६ । १६* ] प्रवणेन निम्नेन मार्गेण गच्छसि वृष्टिनिपातनद्वारा, किं च ( अवसृष्टः-पशुः-इव ) बन्धनान्मुक्तः पशुरिव ( हर्यन् जिगीषसे ) मेघान् जेतुमिच्छसि-अतस्तान्-गच्छसि *"हर्य-गतिकान्त्योः"* [ *भ्वादि०* ] ॥ ३ ॥

भाषान्वयार्थ—( त्वा ) तुझ विद्युद्रूप अग्नि को (माता ) यह सब प्राणी वनस्पतियों का निर्माण करने वाली माता बनी हुई पृथिवी ( सचनस्यमाना ) अपने में समवेत-संयुक्त करने वाली अथवा अन्न सेवन करने वाले प्राणियों से संयुक्त हुई ( जेन्यं शिशुं वर्धयन्ती न बिभर्ति ) जयशील-प्रभावकारी प्रशंसनीय शोभन वत्स को बढाती हुई के समान धारण करती है ( धनोः-अधि प्रवता यासि ) और हे विद्युद् रूप अग्ने ! तू अन्तरिक्ष में होती हुई वृष्टि गिराने द्वारा निम्न मार्ग से प्राप्त होती है और ( अवसृष्टः-पशुः-इव ) बन्धन से छूटे हुए पशु की भांति ( हर्यन् जिगीषसे ) मेघों को जीतना चाहती है अतः उन्हें प्राप्त होती है ॥ ३ ॥

भावार्थ—प्राणियों की माता पृथिवी जयशील विद्युद्रूप अग्नि को बढ़ावा देती है और वह विद्युद् अग्नि वृष्टि के निमित्त चमकती और कड़कती है ॥ ३ ॥

## अत्र श्लेषिको ऽर्थः परमात्मविद्युतोः—

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन् ॥ ४ ॥

मूराः । अमूर । न । वयम् । चिकित्वः । महिऽत्वम् । अग्ने । त्वम् । अङ्ग । वित्से । शये । वव्रिः । चरति । जिह्वया । अदन् । रेरिह्यते । युवतिम् । विश्पतिः । सन् ॥ ४ ॥

संस्कृतान्वयार्थः—( चिकित्वः ) हे चेतानावन्-चेतयितः ! ( अमूर ) अमूढ ! अस्थिर ! वा ( अङ्ग ) प्रिय ! ( अग्ने ) परमात्मन् ! विद्युद्रूपाग्ने ! वा ( त्वम् ) त्वं खलु ( महित्वं वित्से ) जगतो विस्तारं वेत्सि, मेघं वा प्राप्नोषि ( वयं मूरा न ) वयं अज्ञाः न विद्म ( शये वव्रिः-चरति ) शयनस्थाने जगति मेघे वा ऽन्तर्हितः-व्याप्तः-सन् मेघैरावृतो वा प्रकटीभवति सः ( जिह्वया-अदन् रेरिह्यते जिह्वया–निजग्रहणशक्त्या गृह्णन् *"अत्ता चराचरग्रहणात्"* [ *वेदान्त १ । २ । ६* ] यद्वा ज्वलयन् निजधारया मेघान् खादन् भृशं लेढि

च 'अभ्रंलिहा विद्युत्' ( युवतिं विश्पतिः ) युवतिं भार्यां प्रजापतिः सन्तानपतिर्गृहस्थ इव । अत्र वाचकलुप्तोपमालङ्कारः ॥ ४ ॥

**भाषान्वयार्थ**—( चिकित्वः-अमूर ) हे चेतना वाले परमात्मन् या चेताने वाले विद्युद्रूप अग्नि ! अमूढ या अस्थिर ! ( अङ्ग ) प्रिय ( अग्ने ) परमात्मन् या विद्युद्रूप अग्नि ! ( त्वम् ) तू ( महित्वं विरसे ) विस्तृत जगत् को जानता है या महान् मेघ को प्राप्त होता है ( वयं न ) हम नहीं जानते ( शये वव्रिः चरति ) शयनस्थान जगत् में आवरक—व्याप्त है या मेघ में छिपा हुआ प्राप्त है ( जिह्वया-अदन् रेरिह्यते ) अपनी आदान शक्ति से ग्रहण करता हुआ अपने में चाट जाता है या मेघों को खाता हुआ सा चाट जाता है ( युवतिं विश्पतिः ) जैसे युवती पत्नी को गृहस्थ स्नेह से चाटता है ॥ ४ ॥

**भावार्थ**—परमात्मा सदा सावधान सर्वज्ञ है अतः विस्तृत संसार को जानता है । अल्पज्ञ होने से मनुष्य सारे संसार को नहीं जान सकता है । परमात्मा संसार में व्याप्त रहता है, प्रलय में जगत् को चाट जाता है—अपने अन्दर ग्रहण कर लेता है । एवं विद्युत् चमक कर चेताने वाली है, वह मेघ में छिपी हुई रहती है उसे अपनी तरङ्गों से खा जाती है—चाट जाती है तभी वृष्टि होती है । वृष्टि का कारण विद्युत् है ॥ ४ ॥

**कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः ।**
**अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयन्त मर्ताः ॥ ५ ॥**

कूऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ । पलितः । धूमऽकेतुः । अस्नाता । आपः । वृषभः । न । प्र । वेति । सऽचेतसः । यम् । प्रऽनयन्त । मर्ताः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( कूचित्-धूमकेतुः ) कुत्रचित्-धूमः केतुर्ज्ञापको यस्य तथाभूतोऽग्निः ( सनयासु ) सनातनीषु पुरातनीषु-ओषधिषु शुष्कासु, सना शब्दाद् डयन् छान्दसः प्रत्ययः (जायते ) उत्पद्यते ( वने तस्थौ पलितः-नव्यः ) अथ च कुत्रचित्- उदके स्थितः "वनमुदकम्" [ निघ० १ । १२ ] नवीनः प्रियदर्शनः पलितः शुभ्रः सन् स्थितो भवति विद्युद्रूपः, स च ( अस्नाता-आपः ) अस्नातः, सु स्थाने-आकारादेशश्छान्दसः, अनिमज्जितोऽप्सु भवति, व्यत्ययेन जस् प्रत्ययः । जलप्रभावरहितो भवति ( वृषभः- न प्रवेति ) वृषभः-इव बलवान् सन् मेघे प्रगच्छति ( यं सचेतसः-मर्ताः ) यं प्रज्ञावन्तो जनाः ( प्रणयन्त ) प्रकटयन्ति ॥ ५ ॥

**भाषान्वयार्थ**—( कूचित् ) कहीं ( धूमकेतुः ) धुआं जिसको जताने वाला है ऐसा अग्नि ( सनयासु जायते ) पुरानी सूखी ओषधियों लकड़ियों में उत्पन्न होता है ( वने तस्थौ पलितः-नव्यः ) और कहीं जल में रहता हुआ शुभ्र नया सुन्दर अग्नि-विद्युत् रूप में उत्पन्न होता है, वह ( अस्नाता आपः ) जलों में न बुझने योग्य है ( वृषभः-न प्रवेति ) वृषभ के समान बलवान् मेघ में दौड़ता है ( यं प्रचेतसः-मर्ताः प्रणयन्त ) जिसे प्रज्ञावान् जन प्रकट करते हैं ॥ ५ ॥

भावार्थः—एक पार्थिव अग्नि है जो धुएँ से जानी जाती है–धूमवान् है, सूखी लकड़ियों में उत्पन्न होती है। दूसरी विद्युत् रूप जो शुभ्र–श्वेत है जल में स्थित होकर भी जल से भीगती बुझती नहीं है जिसे प्रज्ञावान् जन उत्पन्न करते हैं। विद्युत् का आविष्कार किया जाना चाहिये उससे अनेक उपयोग लिये जाते हैं ॥ ५ ॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥ ६ ॥

तनूत्यजाऽइव । तस्करा । वनर्गू इति । रशनाभिः । दशऽभिः । अभि । अधीताम् । इयम् । ते । अग्ने । नव्यसी । मनीषा । युक्ष्व । रथम् । न । शचयत्ऽभिः । अङ्गैः ॥ ६ ॥

संस्कृतान्वयार्थः—( अग्ने ) हे अग्ने–पार्थिवाग्ने ! वैद्युताग्ने, वा ( ते ) तव-आविष्काराय ( इयं नव्यसी मनीषा ) इयं नवीना मनीषा विचारणा ऽस्ति तां त्वं प्राप्नुहि ( शुचयद्भिः- अङ्गैः-रथं न युक्ष्व ) ज्वलद्भिरङ्गभूतैः प्रकाशैस्त्वं रथमिवास्मिन् कार्ये युक्तो भव ( तनूत्यजा तस्करा वनर्गू-इव ) स्वदेहत्यागं कुर्वन्तौ चौरौ वनगामिना-विवाहर्निशं कर्मपरौ मन्थानौ ( दशभिः-रशनाभिः ) दशभिरङ्गुलिभिः सह "रशनाः-अङ्गुलिनाम [ निघ० २ । ५ ] ( अभ्यधीताम् ) अभ्यधाताम् धार्यतां बध्यताम् । विद्युदुत्पादने द्वौ तारौ बध्यताम् ॥ ६ ॥

भाषान्वयार्थः—( अग्ने ) हे पार्थिव अग्नि ! या विद्युद्रूप अग्नि ! ( तव ) तेरे आविष्कार करने के लिये ( इयं नव्यसी मनीषा ) अत्यन्त नवीन या प्रशंसनीय विचारसरणी है ( शुचयद्भिः–अङ्गैः–रथं न युक्ष्व) प्रज्वलन रूप अङ्गों–प्रकाशतरङ्गों से इस रथ समान कार्य में युक्त हो जा ( तनूत्यजा वनर्गू तस्करा-इव ) देहत्यागी वन में भाग छिपने वाले चोरों के समान अग्नि-मन्थन दो दण्ड या दो तार अग्नि या विद्युत् निकालकर छोड़ता है। ( दशभिः-रशनाभिः-अभ्यधीताम् ) दशों अंगुलियों सहित बांध दिये जावें। अग्निमन्थन कार्य या विद्युदाविष्करण कार्य में लगा दिये जावें ॥ ६ ॥

भावार्थः—अग्नि या विद्युत् के आविष्करण में नवीन या प्रशस्त विचारधारा से कार्य लेना चाहिए, दोनों भुजाओं को त्याग भाव से उन रस्सियों को दण्डों सहित उस कार्य में बांध दें किसी ऐसे साधन से जिससे विद्युत् का प्रभाव न पहुँचे ॥ ६ ॥

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।
रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वोऽ अप्रयुच्छन् ॥ ७ ॥

ब्रह्म । च । ते । जातऽवेदः । नमः । च । इयम् । च । गीः । सदम् । इत् ।

वर्धनी । भूत् । रक्ष । नः । अग्ने । तनयानि । तोका । रक्ष । उत । नः । तन्वः । अप्रऽयुच्छन् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( जातवेदः ) हे उत्पन्नमात्रस्याग्न्यादिकस्य वेत्तः परमात्मन् ! ( ते ) तुभ्यम् ( ब्रह्म ) मन्त्रचिन्तनमुपासनम् ( च ) तथा (नमः) यज्ञः "यज्ञो वै नमः" [ श. १ । ४ । २ । २४ ] ( इयं गीः ) इयं स्तुतिवाणी (सदम्-इत् ) सदैव ( वर्धनी भूत् ) वर्धिका भवतु, अस्माकमात्मनि त्वां वर्धयेत् ( नः ) अस्माकं ( तनयानि रक्ष ) पुत्रान् रक्ष ( तोका ) तोकान्-पौत्रान् रक्ष ( उत ) अपि (नः-तन्वः) अस्माकमङ्गानि चापि ( अप्रयुच्छन् ) अनुपेक्षमाणः सन् रक्षेत्यर्थः ॥ ७ ॥

**भाषान्वयार्थ**—( जातवेदः ) हे उत्पन्नमात्र अग्नि आदि के ज्ञाता सर्वज्ञ परमात्मन् ! ( ते ) तेरे लिए ( ब्रह्म ) मन्त्र विचार मनन ध्यानोपासन ( च ) और ( नमः ) यज्ञ ( इयंगीः ) यह स्तुतिवाणी ( सदम्-इत् ) सदा ही ( वर्धनी भूत् ) आत्मा को बढ़ाने वाली हो ( नः ) हमारे ( तनयानि ) पुत्रों को ( रक्ष ) सुरक्षित रख ( तोका रक्ष ) पौत्रों को सुरक्षित रख ( उत ) अपि ( नः—तन्वः ) हमारे अङ्गों को ( अप्रयुच्छन् ) विना उपेक्षा के सुरक्षित रख ॥ ७ ॥

**भावार्थ**—परमात्मा सब उत्पन्न अग्नि आदि का जानने वाला है–सर्वज्ञ है उसके लिए मनन उपासन स्तुति यज्ञ आदि करने चाहियें जो हमारे आत्मा में उसके साक्षात् स्वरूप को बढ़ाने वाले हैं और वह परमात्मा हमारी तथा हमारे पुत्र पौत्रों आदि की सदा ही निःसंकोच रक्षा करने वाला है ॥ ७ ॥



# पञ्चमं सूक्तम्

ऋषिः—आप्त्यस्त्रितः ।
देवता—अग्निः ।
छन्दः—१ विराट् त्रिष्टुप्, २-५ त्रिष्टुप्, ६-७ निचृत् त्रिष्टुप् ।
स्वरः—धैवतः ।
विषयः—अत्र सूक्ते अग्निशब्देन परमात्मविद्युत्सूर्या वर्ण्यन्ते ।
इस सूक्त में अग्नि शब्द से परमात्मा, विद्युत् और सूर्य वर्णित किये जाते हैं ।

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥ १ ॥

एकः । समुद्रः । धरुणः । रयीणाम् । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे । सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितम् । पदम् । वेरिति वेः ॥ १ ॥

**संस्कृतान्वयार्थः**—( रयीणाम् ) विविधपोषकधनानामन्नानाम् *"रयिं धेहि पोषं धेहि"* [ काठ. १ । ७ ] *"पुष्टं रयिः"* [ श. २ । ३ । ४ । १३ ] ( समुद्रः-धरुणः-एकः ) समुद्राता-सम्यगुदाता धारकश्चैक एव ( भूरिजन्मा ) बहुप्रकारेण बहुषु वा जन्म प्रसिद्धिः-यस्य सोऽग्निः ( अस्मद्धृदः-विचष्टे ) अस्माकं हृदयभावान् विकासयति ( उपस्थे निण्योः-ऊधः-सिषक्ति ) अन्तरिक्षे *"अपामुपस्थे अपां स्थान अन्तरिक्षे"* [ निरु० ७ । २७ ] अन्तर्हितं गुप्तं रसं जलं सिञ्चति । *"ऊधो दुहन्ति"* [ काठ. २५ । ६ ] *"षच-सेचने"* [ भ्वादिः ] *" सिषक्ति सिञ्चति"* [ ऋ० ४ । २१ । ७ दयानन्दः ] निण्योः-इति=*"निण्यम्-अन्तर्हितनाम* [ निघ० ३ । २५ ] अम् प्रत्ययस्य स्थाने 'ओस्' स च डित् डोस्, *"सुपां सुपो भवन्तीति वक्तव्यम्"* [ अष्टा० ७ । १ । ३९ । वा० ] ( उत्सस्य मध्ये निहितं पदं वेः ) उत्स्रवणशीलस्य मेघस्य मध्ये पदं प्रापणीयं जलरूपं प्राप्नुहि विद्युद्रूप हे अग्ने ! इति प्रत्यक्षेणोच्यते ॥ १ ॥

**भाषान्वयार्थ**—( रयीणाम् ) विविध पोषक धनों-अन्नों का ( समुद्रः-धरुणः-एकः ) सम्यक् उदारदाता तथा धारक एकमात्र ( भूरिजन्मा ) बहुत प्रकार से बहुत स्थानों में उत्पन्न होने वाला अग्नि ( अस्मद् हृदः-विचष्टे ) हमारे हार्दिक भावों को विकसित करता है (उपस्थे निण्योः-

ऊधः-सिषक्ति ) अन्तरिक्ष में गुप्त रस–जल को सींचती है ( उत्सस्य मध्ये निहितं पदं वेः ) बहने के स्वभाव वाले मेघ के अन्दर रखे प्राप्तव्य जलरूप को प्राप्त हुआ विद्युद्रूप अग्नि ।। १ ।।

**भावार्थ**—विविध अन्न धनों का उत्पन्नकर्ता तथा धारक विविध रूप में उत्पन्न हुआ अग्नि है। वह हार्दिक भावों का विकास करता है, अन्तरिक्ष में छिपे सूक्ष्म जल को सींचता है, मेघ में रखे जल को पकड़कर नीचे बिखेरता है। इसी प्रकार विद्युद्रूप अग्नि की तरह विद्वान् ज्ञानामृत की वृष्टि अपने अन्तः स्थल से निकालकर जनसमाज में बिखेरता है। राजा भी विज्ञान-साधनों द्वारा मेघ से तथा कूप आदि द्वारा राष्ट्र में जल पहुंचाकर अन्नादि को उत्पन्न करावे ।। १ ।।

**समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।**
**ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ।। २ ।।**

**समानम् । नीळम् । वृषणः । वसानाः । सम् । जग्मिरे । महिषाः । अर्वतीभिः ।**
**ऋतस्य । पदम् । कवयः । नि । पान्ति । गुहा । नामानि । दधिरे । पराणि ।। २ ।।**

**संस्कृतान्वयार्थः**—( महिषाः ) महान्तः *"महिषः-महन्नाम"* [ *निघ० ३ । ३* ] (वृषणः) पर्जन्याः- मेघाः *"वृषा-पर्जन्यः"* [ *निघं० १ । ६* ] समानं नीळं वसानाः) समान-माश्रयमग्निं वसाना आच्छादयन्तो वर्तन्ते (अर्वतीभिः-संजग्मिरे) ईरणवतीभिः-वेगवतीभि-र्विद्युद्भिः सङ्गताः भवन्ति–संयुक्ता भवन्ति *"अर्वंतु विद्युदादिषु"* [ *यजु० ४ । ३१ दयानन्दः* ] ( ऋतस्य पदं कवयः- निपान्ति ) सत्यस्य-उदकस्य विज्ञानं मेधाविनो रक्षन्ति स्वस्मिन् स्थापयन्ति ( गुहा पराणि नामानि दधिरे ) पराणि-उपरिस्थितानि-उदकानि *"नाम-उदकनाम"* [ *निघ० १ । १२* ] यानि गुहायामिव स्थितानि धारयन्ति ।। २ ।।

**भाषान्वयार्थ**—( महिषा ) महान् ( वृषणः ) पर्जन्य जलभरे मेघ ( समानं नीडं वसानाः ) समान–एक ही आग्नेय–अग्नि तत्त्व को ढांपते हुए–अपने अन्दर रखते हुए ( अर्वतीभिः-संजग्मिरे ) विद्युत् शक्तियों से सङ्गत हो जाते हैं ( ऋतस्य पदं कवयः निपान्ति ) जल के प्रापणीय स्वरूप–लक्षण को वृष्टिवेत्ता मेधावी विद्वान् अपने अन्दर रखते हैं, भली भांति जानते हैं ( गुहा पराणि नामानि दधिरे ) उन उत्कृष्ट मेघस्थ जलों को वे प्राप्त करते हैं बरसा लेते हैं ।। २ ।।

**भावार्थ**—आकाश में मेघ आग्नेय तत्त्व के सहारे ठहरते हैं, जब वे विद्युत् से युक्त हो जाते हैं तब वृष्टि की ओर उन्मुख होते हैं। उनमें जल के स्वरूप को वृष्टिविज्ञान वेत्ता जन स्वरक्षित रखते हैं और जहां चाहते हैं बरसा लेते हैं। इसी प्रकार ज्ञानाग्नि को धारण कर बुद्धि ज्योति से युक्त होकर, ज्ञानामृत की वृष्टि के लक्ष्य को अपने में धारण कर विद्वान् लोग होते हैं और इच्छानुसार उसकी वृष्टि करते हैं ।। २ ।।

**ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।**
**विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तन्तुं मनसा वियन्तः ।। ३ ।।**

ऋतयिनी इत्यृतऽयिनी । मायिनी इति । सम् । दधाते इति । मित्वा । शिशुम् । जज्ञतुः । वर्धयन्ती इति । विश्वस्य । नाभिम् । चरतः । ध्रुवस्य । कवेः । चित् । तन्तुम् । मनसा । विऽयन्तः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( ऋतायिनी ) ऋतायिन्यौ–ऋतमुदकं सन्तानबीजमेतः प्राप्नुत इति ते । णिनिः प्रत्ययः, स्त्रियामृतायिनी "अन्येषामपि दृश्यते" [ अष्टा. ६ । ३ । १३५ ] दीर्घः, *"ऋतम्–उदकनाम"* [ *निघ० १ । १२* ] ( मायिनी ) मायिन्यौ सन्ताननिर्माणे प्रज्ञावन्त्यौ–मातापितरौ ( मित्वा ) शनैः शनैः स्वाहारव्यवहारौ सुपरिमितौ कृत्वा ( सन्दधाते ) यथा गर्भं सन्धत्तः ( शिशुं-जज्ञतुः ) प्रशंसनीयं पुत्रं जनितवत्यौ ( वर्धयन्ती ) वर्धयन्त्यौ तिष्ठतः, एवं (चरतः-ध्रुवस्य विश्वस्य नाभिम् ) द्युलोकस्य गतिं कुर्वतः शुक्रादिकस्य तथा पृथिवीलोकस्य *"एषां लोकानामयमेव" ध्रुवमियं पृथिवी* [ *श० ५ । १ । २ । ४* ] संसारस्य नाभिभूतं *"मध्यं वै नाभिः"* [ *श० १ । १ । २ । ३* ] ( तन्तुं चित् ) सर्वज्ञं प्रजारूपमग्निम् *"प्रजा वै तन्तुः"* [ *ऐ० ३ । ११* ] ( कवेः- मनसा वियन्तः ) कवयः 'व्यत्ययेन' मनोभावेन विशेषतया प्राप्नुवन्तः सेवन्ते ॥ ३ ॥

**भाषान्वयार्थ**—( ऋतायिनी ) सन्तान बीजरूप जल-सम्पन्न ( मायिनी ) सन्तानार्थं बुद्धि वाले माता-पिता ( मित्वा ) अपने आहार व्यवहारों को क्रमशः समुचित माप से सेवन करके ( सन्दधाते ) गर्भ को संस्थापित करते हैं—गर्भसन्धान करते हैं, पुनः ( शिशुं जज्ञतुः ) जैसे बालक को जनते हैं ( वर्धयन्ती ) उसे बढ़ाते हैं, ऐसे ही ( विश्वस्य चरतः ध्रुवस्य नाभिम् ) समस्त गतिशील शुक्रादिमय द्युलोक तथा पृथिवीलोक के मध्य में ( तन्तुं चित् ) पुत्र समान अग्नि को (कवेः) कवि-विद्वान् जन ( मनसा वियन्तः ) मन से विशेष जानते हुए सेवन करते हैं ॥ ३ ॥

**भावार्थ**—द्युलोक और पृथिवी लोक का पुत्ररूप अग्नि है उसे विद्वान् सुरक्षित करते हैं—लाभ लेते हैं, पुत्रोत्पति चाहने वाले माता पिता उचित आहार व्यवहार द्वारा अपने अन्दर सन्तति बीज रस को बनावें और अपनी प्रबल शुभ भावना से गर्भाधान करें तो उत्तम पुत्र की प्राप्ति होती है ॥ ३ ॥

**ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते ।**
**अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ ४ ॥**

ऋतस्य । हि । वर्तनयः । सुऽजातम् । इषः । वाजाय । प्रदिवः । सचन्ते । अधीवासम् । रोदसी इति । वावसाने इति । घृतैः । अन्नैः । वावृधाते इति । मधूनाम् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( ऋतस्य हि ) सृष्टियज्ञस्य खलु ब्रह्माण्डस्य मध्ये ( वर्तनयः-प्रदिवः-इषः ) वर्तमानाः-*"वर्तनिः-वर्तमानाः"* [ *ऋ० १ । १४० । ३ दयानन्दः* ] प्रकाशमानाः प्रजारूपा नक्षत्रादयः *"प्रजा वा इषः"* [ *श० १ । ७ । ३ । १४* ] ( वाजाय सुजातं सचन्ते )

सुप्रसिद्धमग्निं सूर्यरूपं सेवन्ते ( रोदसी ) द्यावापृथिव्यौ द्युलोकः पृथिवीलोकश्च "रोदसी-द्यावापृथिवीनाम" [ निघ० ३ । ३ ] ( अधीवासं वावसाने ) उपरिवस्त्रमिवाच्छादयन्तौ ( मधूनाम् ) मनुष्याद्याः प्रजाः, व्यत्ययेन द्वितीयास्थाने षष्ठी "प्रजा वै मधुः" [ जै० १ । ८८ ] ( घृतैः-अन्नैः-वावृधाते ) तेजोभिरन्नैश्च सूर्यात् प्राप्य वर्धयतः ॥ ४ ॥

भाषान्वयार्थ—( ऋतस्य हि ) सृष्टियज्ञ-ब्रह्माण्ड के मध्य में ( वर्तनयः-प्रदिवः-इषः ) वर्तमान प्रकाशमान ग्रहनक्षत्रादि लोक ( वाजाय सुजातं सचन्ते ) गति बल प्राप्ति के लिए सुप्रसिद्ध सूर्यरूप अग्नि को सेवन करते हैं ( रोदसी ) द्युलोक पृथिवीलोक ( अधीवासं वावसाने ) ऊपर वस्त्र समान आच्छादन करते हुए ( घृतैः-अन्नैः-मधूनाम्-वावृधाते ) सूर्य से प्राप्त तेजों और अन्नों द्वारा प्रजाओं को बहुत बढ़ाते हैं ॥ ४ ॥

भावार्थ—सृष्टि या ब्रह्माण्ड में वर्तमान पिण्ड ग्रह आदि सुप्रसिद्ध अग्निरूप सूर्य से बल पाते हैं, द्युलोक और पृथिवी लोक दोनों अपने ऊपर धारण करते हैं । तेजों अन्नों—तेजशक्ति अन्नशक्ति को प्राप्त कर मनुष्यादि प्रजाओं को समृद्ध करने के लिए द्युलोक सूर्य से तेज शक्ति को लेता है पृथिवीलोक सूर्य से अन्न शक्ति को लेता है । ऐसे ही प्रतापी गुणवान् राजा प्रजाओं को ज्ञानप्रकाश प्रदान करने की व्यवस्था तथा भोजन की व्यवस्था करे ॥ ४ ॥

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥

सप्त । स्वसॄः । अरुषीः । वावशानः । विद्वान् । मध्वः । उत् । जभार । दृश । कम् । अन्तः । येमे । अन्तरिक्षे । पुराऽजाः । इच्छन् । वव्रिम् । अविदत् । पूषणस्य ॥ ५ ॥

संस्कृतान्वयार्थः—( विद्वान् ) वेद्यमानो ज्ञायमानो ऽग्निः, कर्मणि कर्तृप्रत्ययो व्यत्ययेन ( सप्त स्वसॄः-अरुषीः-वावशानः ) सप्त संख्याकाः सप्तवर्णास्तमांसि सु सम्यक् क्षेप्त्रीः "स्वसा सु-असा" [निरु० ११ । ३२ ] आरोचमानाः–रश्मीन् भृशं प्रकाशयन् ( दृशे ) संसारं दर्शयितुम् ( मध्वः-उज्जभार कम् ) मधुमयात्-जलमयाकाशादुद्भावितान् करोति ( अन्तरिक्षे-अन्तः ) अन्तरिक्षस्याभ्यन्तरे (पुराजाः) पूर्वप्रसिद्धः सूर्यः (येमे) तान् रश्मीन् नियन्त्रयति ( पूषणस्य वव्रिम्-इच्छन्-अविदत् ) पृथिव्याः-रूपं=प्रकाशमिच्छन्निव पृथिवीं प्राप्तवान् ॥ ५ ॥

भाषान्वयार्थ—( विद्वान् ) जानने योग्य अग्निसूर्यरूप ( सप्त स्वसॄः-अरुषीः-वावशानः ) सात रंगवाली अन्धकार को सम्यक् रूप से हटाने वाली आरोचमान रश्मियों को बहुत प्रकाश देता हुआ ( दृशे ) संसार को दिखाने—दृष्ट करने के लिए ( मध्वः-उज्जभार कम् ) जलमय आकाश से उभारता है ( अन्तरिक्षे-अन्तः-पुराजाः ) जो अन्तरिक्ष के अन्दर पूर्व से प्रसिद्ध होता है । ( येमे ) उन रश्मियों को नियन्त्रित रखता है ( पूषणस्य वव्रिम्-इच्छन्-अविदत् ) पृथिवी के रूप—स्वरूप को प्रकाशित करने की इच्छा करते हुए जैसा ॥ ५ ॥

**भावार्थ**—सूर्य अपनी सात रंगवाली किरणों को जगत् को दृष्ट कराने के लिए जलमय आकाश से बाहर निकालता या उभारता है जो जलमय आकाश में स्वयं प्रथम गुप्त रहता है पुनः पृथिवी को भी स्वरूप देता है, जल को शोषित कर तथा बहाकर जलमय आकाश में बाहर दृष्ट कराता है। इसी प्रकार सूर्य समान राजमान राजा सप्त व्यवस्थाओं को राष्ट्र में प्रचारित कर उनसे राष्ट्र को चमकावे, सब प्रकार से पुष्ट करे ॥ ५ ॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । एकाम् । इत् । अभि । अंहुरः । गात् । आयोः । ह । स्कम्भः । उपऽमस्य । नीळे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥ ६ ॥

**संस्कृतान्वयार्थः**—( कवयः ) मेधाविनः-अनूचानः-ऋषयः *"कवि मेधाविनाम"* [ *निघ० ३ । १५* ] *"ये वा-अनूचानस्ते कवयः"* [ *ऐ० २ । २* ] *"ऋषयः कवयः"* [ *मै० ४।१०३* ] (सप्त मर्यादाः) जीवनयात्राया अनुल्लङ्घनीया मर्यादाः-व्यवस्थाः (ततक्षुः) चक्रुः तक्षन्ति कुर्वन्ति ताश्च यास्कोक्ताः—*"स्तेयं, तल्पारोहणं, ब्रह्महत्या, भ्रूणहत्या, सुरापानं, दुष्कृतस्य कर्मणः पुनः पुनः सेवा, पातकेऽनृतोद्यमिति"* [ *निरु० ६ । २७* ] तासाम्-एकाम्-इत् ) तासामेकामपि ( अभि-अगात् ) अभिक्राम्येत् यः ( अंहुरः ) सः अंहस्वान् पापी भवति ( ह ) परन्तु तद्भिन्नः पुण्यात्मा ( आयोः-स्कम्भः ) ज्योतिषः स्कम्भः— पूर्णज्योतिर्मयः परमोऽग्निः परमात्मा तस्य *"आयोर्ज्योतिषः"* [ *निरु० १० । ४१* ] (उपमस्य नीडे) उपमन्तुं योग्यस्यान्तिकतमस्य नीडे-गृहे-शरणे-मोक्षे *"नीडं गृहनाम"* [ *निघ० ६ । ४* ] ( पथां विसर्गे) यत्र संसारयात्रायाः पन्थानो विसृज्यन्ते त्यज्यन्ते तत्र प्राप्तव्यस्थाने (धरुणेषु तस्थौ) प्रतिष्ठासु-उच्चस्थितिषु *प्रतिष्ठा धरुणम्"* [ *श० ७ । ४ । २ । ५* ] तिष्ठति विराजते ॥ ६ ॥

**भाषान्वयार्थ**—( कवयः ) मेधावी आप्त ऋषिजन ( सप्त मर्यादाः-ततक्षुः ) सात मर्यादाएँ सीमाएंजीवन की बनाते हैं, उनका लङ्घन न करें-उन पर न पहुँचें जो कि निरुक्त में प्रदर्शित हैं— चोरी—डाका, गुरुपत्नी से सम्भोग, ब्रह्महत्या, गर्भपात, सुरापान, पापकर्म की पुनरावृत्ति, पाप करके झूठ बोलना—पाप को छिपाना, ( तासाम्-एकाम्-इत ) उन इनमें से एक को भी ( अभि-गात् ) पंहुचे—अपने में आरोपित करे, तो वह ( अंहुरः ) पापी होता है। ( ह ) इन से पृथक् पुण्यात्मा ( आयोः-स्कम्भः ) ज्योति का स्कम्भ—ज्योतिष्पुञ्ज महान् अग्नि परमात्मा है, उस ( उपमस्य ) समीप वर्तमान के ( नीडे ) घर में—शरण में मोक्ष में ( पथां विसर्गे ) जहां जीवन यात्रा के मार्गों का विसर्जन—त्याग होता है ऐसे प्राप्तव्य स्थान में ( धरुणेषु तस्थौ ) प्रतिष्ठाओं—ऊंची स्थितियों में स्थिर हो जाता है ॥ ६ ॥

**भावार्थ**— ऋषि जन जीवन यात्रा की सात मर्यादाएं—सीमाएं प्रतिबन्धरेखाएं=चोरी आदि, बनाते हैं जिनकी ओर जाना नहीं चाहिये, उनमें से किसी एक पर भी आरूढ हो जाने पर मनुष्य

पापी बन जाता है। उनसे बचा रहने वाला ऋषिकल्प होकर, जीवनयात्रा के मार्गों का अन्त जहां हो जाता है ऐसी प्रतिष्ठाओं—ऊंची स्थितिओं में रमण करता हुआ परम प्रकाशमान के आश्रय—मोक्ष में विराजमान हो जाता है ॥ ६ ॥

**असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे ।**
**अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ ७ ॥**

असत् । च । सत् । च । परमे । विऽओमन् । दक्षस्य । जन्मन् । अदितेः । उपऽस्थे । अग्निः । ह । नः । प्रथमऽजाः । ऋतस्य । पूर्वे । आयुनि । वृषभः । च । धेनुः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अदितेः-उपस्थे ) अखण्डितायाः-अविनाशिन्याः प्रकृतेः-उपाश्रये: *"अदितिः- अविनाशिनी प्रकृतिः"* [ *ऋ० ५ । ४४ । ११ दयानन्दः* ] ( दक्षस्य जन्मन् ) प्रवृद्धस्य जगतो जन्मनि प्रादुर्भावे सति *"दक्ष-वृद्धौ"* [ *भ्वादिः* ] तस्मिन् ( सत्-च ) नित्यं चेतनतत्त्वं *' 'सत्-नित्यम्"* [ऋ० ६ । १८ । ४ *दयानन्दः* ] ( असत्-च ) अनित्यं जडं वस्तु च *"असत्-अनित्यम्"* [ *अथर्व १० । ७ । १० ऋग्वेदादि-भाष्यभूमिकायां दयानन्दः* ] ( परमे व्योमन् ) परमे व्यापके परमात्मनि खल्वास्तां ते उभे प्रकटीभवतः, स च परमो व्योमा ( प्रथमजाः-अग्निः-ह ) अस्माकं प्रथमप्रसिद्धः परमात्मा-अग्निः ( ऋतस्य पूर्वे आयुनि ) कारणस्य प्रकृतेः *"ऋतम्-कारणम्'* [ *ऋ० १ । १०५ । ५ दयानन्दः* ] जीवने सृष्टिप्रादुर्भावकाले ( वृषभः-धेनुः ) वीर्यसेचकः पिता, स धेनुर्धात्री माता भवति *"माता धेनुः"* [ *श०* २ । २ । १ । २१ ] ॥ ७ ॥

**भाषान्वयार्थ**—( अदितेः-उपस्थे ) अविनाशी प्रकृति के उपाश्रय में ( दक्षस्य जन्मन् ) प्रवृद्ध जगत् के प्रादुर्भाव होने पर ( सत्-च-असत्-च ) नित्य चेतनतत्त्व और अनित्य जड़ वृक्षादि ( परमे व्योमन् ) परम व्यापक परमात्मा के अधीन प्रकट होते हैं, वह परम व्यापक ( नः-प्रथमजाः-अग्निः ) हमारा इष्टदेव—प्रथम प्रसिद्ध अग्नि—परम अग्नि अग्रणायक परमात्मा ( ऋतस्य पूर्वे-आयुनि ) प्रकृतिः के प्रारम्भिक विकृति जीवन में ( वृषभः-धेनुः ) वीर्यसेचक पिता और धात्री—पालने वाली माता भी है ॥ ७ ॥

**भावाथ**—प्रकृति से प्रवृद्ध जगत् बना, इसमें चेतनतत्त्व मनुष्यादि और जड़ वृक्षादि हैं जो परमव्यापक परमात्मा के अधीन हैं। वह प्रथम प्रसिद्ध महान् अग्नि-अग्रणायक परमात्मा प्रकृति से विकृति होने पर आदिसृष्टि के जीवन में पिता—रक्षक जनक और धात्री माता भी होता है, आरम्भसृष्टि में परमात्मा ही माता पिता का कार्य करता है। सदा उसकी उपासना करनी चाहिए और उसी की शरण लेनी चाहिए। इसी प्रकार राष्ट्र में राजा भी सब मनुष्यादि और वनस्पतियों के पालन करने की व्यवस्था करे, बैल आदि चार पैर वाले सवारी के योग्य पशुओं तथा दूध देने वाली गौ आदि की ॥ ७ ॥

———

# षष्ठं सूक्तम्

ऋषिः—आप्त्यस्त्रितः ।

देवता—अग्निः ।

छन्दः—१ आर्ची स्वराट् त्रिष्टुप् । २ विराट् पंक्तिः । ३ निचृत् पंक्तिः । ४, ५ विराट् त्रिष्टुप् । ६ पंक्तिः । ७ पादनिचृत् त्रिष्टुप् ।

स्वरः—१, ४, ५, ७ धैवतः । २, ३, ६ पञ्चमः ।

विषयः—पूर्ववत् ।

अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥ १ ॥

अयम् । सः । यस्य । शर्मन् । अवःऽभि । अग्नेः । एधते । जरिता । अभिष्टौ ।
ज्येष्ठेभिः । यः । भानुऽभिः । ऋषूणाम् । परिऽएति । परिऽवीतः । विभाऽवा ॥ १ ॥

संस्कृतान्वयार्थः—( यस्य-अग्नेः-शर्मन्-अवोभिः ) यस्य ह्यग्ने परमात्मनः शरणे-उपासने सति विविधरक्षणप्रकारैः (जरिता ) स्तुतिकर्त्ता जनः *"जरिता स्तोतृनाम" [ निघ० ३/१६ ]* ( अभिष्टौ ) निजाभिकांक्षाप्राप्तौ सत्याम् ( एधते ) समृद्धो भवति ( सः-अयम् ) सो ऽयं परमात्मा ऽस्ति ( यः ) यश्च (ज्येष्ठेभिः-भानुभिः ) श्रेष्ठैर्निर्भ्रान्तैर्ज्ञानप्रकाशैः *"भानुभिः-विद्याप्रकाशैः" [ यजु. १२/३२ दयानन्दः ]* ( परिवीतः ) परिपूर्णः ( विभावा ) विशिष्टप्रकाशवान् ( ऋषूणां पर्येति ) ऋषून्-ऋषीन्-अग्न्यादीन् परमर्षीन् *"ऋषूणां मन्त्रार्थविदां व्यत्ययेन-इकारस्थान उत्वं षठी च [ ऋ. १ । २५ । १ दयानन्दः ]* सर्वभावेन प्राप्नोति ॥ १ ॥

भाषान्वयार्थ—( यस्य-अग्नेः-शर्मन् ) जिस अग्रणायक परमात्मा के शरण में–उपासन में ( अवोभिः ) विविध रक्षणविधानों द्वारा ( जरिता ) स्तुतिकर्त्ता–उपासक जन ( अभिष्टौ ) निज अभिकांक्षा–प्राप्ति हो जाने पर ( एधते ) समृद्ध हो जाता है अभ्युदय और मोक्ष पा लेता है ( सः-अयम् ) वह यह परमात्मा ( यः ) जो ( ज्येष्ठेभिः-भानुभिः ) श्रेष्ठ भ्रान्तिरहित ज्ञानप्रकाशों से ( परिवीतः ) परिपूर्ण है ( विभावा ) विशेष प्रकाशवान् ( ऋषूणां पर्येति ) मन्त्रसाक्षात्कर्त्ता अग्नि आदि परम ऋषियों को आरम्भ सृष्टि में सर्वभाव से प्राप्त होता है ॥ १ ॥

**भावार्थ**—परमात्मा की उपासनारूप शरण में उपासक की रक्षा करने वाले परमात्मा के बहुत से प्रकार हैं जिनसे उसकी कार्यसिद्धि हो जाने पर उपासक समृद्ध हो जाता है, अभ्युदय और मोक्ष को प्राप्त कर लेता है। परमात्मा सृष्टि के आरम्भ में अग्नि आदि परम ऋषियों के अन्दर साक्षात् प्राप्त होकर उन्हें निर्भ्रान्त ज्ञान प्रकाश—वेद को देता है ॥ १ ॥

**यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः ।**
**आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥ २ ॥**

यः । भानुऽभिः । विभाऽवा । विऽभाति । अग्निः । देवेभिः । ऋतऽवा । अजस्रः । आ । यः । विवाय । सख्या । सखिऽभ्यः । अपरिऽह्वृतः । अत्यः । न । सप्तिः ॥ २ ॥

**संस्कृतान्वयार्थः**—( यः-अग्निः-विभावा ) यः परमात्मा सूर्यो वा विशिष्टप्रकाशमानः ( भानुभिः-देवेभिः-विभाति ) स्वप्रकाशैर्विशिष्टं प्रकाशते तथा सूर्यो ऽन्यान् लोकांश्च प्रकाशयति ( ऋतावा ) सत्यनियमवान् (अजस्रः) अनुपक्षीणः-अबाध्यः-एकरसः ( यः सखिभ्यः सख्या-आविवाय ) यः परमात्मा मुमुक्षुजीवात्मभ्यः समानख्यानेन "*द्वा सुपर्णा सयुजा सखायः*" [ *ऋ० १।१६४।२०* ] उक्तत्वात्, तथा द्युस्थानकेभ्यश्च समानस्थानभावेन विशिष्टं प्राप्नोति ( अपरिह्वृतः-न अत्यः सप्तिः ) अकुटिलः सरलगतिकः सततगमनशीलो ऽश्व इव ॥ २ ॥

**भाषान्वयार्थ**—( यः—अग्निः—विभावा ) जो परमात्मा विशेष प्रकाशमान ( भानुभिः—देवेभिः—विभाति ) अपने प्रकाशों द्वारा मुक्त आत्माओं के साथ तथा सूर्य ग्रहों के साथ विशेष प्रकाशमान हो रहा है ( ऋतावा—अजस्रः ) सत्यनियम वाला और एकरस अविनाशी ( यः सखिभ्यः सख्या—आविवाय ) जो समान ख्यान वाले उपासक आत्माओं के लिए समान ख्यान मित्र भाव से तथा सूर्य ग्रहों के लिए समानस्थान भाव से विशेष प्राप्त होता है ( अपरिह्वृतः—न—अत्यः सप्तिः ) सरलगामी सततगतिशील घोड़े के समान ॥ २ ॥

**भावार्थ**—परमात्मा अपने प्रकाश से मुक्तात्माओं के साथ रहता है, वह सत्यज्ञानवान् एकरस है, उपासक आत्माओं का मित्र है उन्हें सरलरूप से प्राप्त होता है। ऐसे ही सूर्य भी आकाश में वर्तमान हुआ अपने प्रकाश से ग्रहों के साथ मित्र सा बना रहता है ॥ २ ॥

**ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ ।**
**आ यस्मिन्मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥ ३ ॥**

ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः । उषसः । विऽउष्टौ । आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( यः-विश्वस्याः-देववीतेः-ईशे ) यो ऽग्निरग्रणायकः परमात्मा सकलाया दिव्यभोगप्राप्तेः *"देववीतये दिव्यानां भोगानां प्राप्तये"* [ *यजु० १।२२ दयानन्दः* ] ईष्टे स्वामित्वं करोति-स्वामी खल्वस्ति ( विश्वायुः- व्युष्टौ-उषसः-ईशे ) विश्वं पूर्णमायुर्यस्मात् सः परमात्मा *"विश्वमायुर्यस्मात् सः"* [ *यजु. १।२२ दयानन्दः* ] तथा बुद्धेर्विकासे च स परमात्मा स्वामी खल्वस्ति ( यस्मिन्-अग्नौ ) यस्मिन्नग्रणायके परमात्मनि ( मना-हवींषि ) मननीयानि स्तुति प्रार्थनोपासनवचनानि देयानि समर्प्याणि समर्प्यन्ते सः ( अरिष्टरथः ) उपासकानामहिंसनीयरमणाधारः ( शूषैः-आस्कभ्नाति ) स्वकीयबलैः *"शूषं बलनाम"* [ *निघ . २।९* ] सकलं दिव्यं सुखं ज्ञानं जगच्च स्वाश्रये धारयति ॥३॥

**भाषान्वयार्थ**—( यः-विश्वस्याः-देववीतेः-ईशे ) जो अग्रणायक परमात्मा सकल दिव्यभोगप्राप्ति का स्वामित्व करता ( विश्वायुः–उषसः–व्युष्टौ–ईशे ) पुर्ण आयु जिससे–जिसकी शरण से स्तुति प्रार्थना उपासना द्वारा प्राप्त होती है ऐसा वह परमात्मा बुद्धि के विकास में स्वामी है ( यस्मिन्-अग्नौ ) जिस परमात्मा में ( मना-हवींषि ) मननीय या मन से स्तुति प्रार्थनोपासना रूप वचन भेंट किये जाते हैं ऐसा वह परमात्मा ( अरिष्टरथः ) उपासकों का अहिंसनीयरमणाधार है ( शूषैः–आस्कभ्नाति ) अपने बलों से दिव्यभोगों, ऊंची बुद्धि और जगत् को अपने में आश्रय देता है ॥ ३ ॥

**भावार्थ**—अग्रणायक परमात्मा उपासकों के लिए दिव्यभोगों और प्रकाशमय बुद्धि को प्रदान करने में समर्थ है, उसकी स्तुति प्रार्थना उपासना करने वालों को वह पूर्ण आयु देता है ॥ ३ ॥

**शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।**
**मन्द्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥ ४ ॥**

शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छ । रघुऽपत्वा । जिगाति । मन्द्रः । होता । सः । जुह्वा । यजिष्ठः । सम्ऽमिश्लः । अग्निः । आ । जिघर्ति । देवान् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( सः-अग्निः ) सो ऽग्रणायकः परमात्मा ( अर्कैः-जुषाणः ) अर्चनीयैर्मन्त्रैः *" अर्को मन्त्रो भवति यदनेनार्चन्ति "* [ *निरु० ५।४* ] प्रियमाणः सेव्यमानो वा विद्वद्भिरुपासकैः ( शूषेभिः-वृधः ) स्वबलैःप्रवृद्धः सन् ( देवान् ) तान् विदुष उपासकान् ( रघुपत्वा ) लघुना समयेन शीघ्रतया यो याति सः शीघ्रगामी सद्यः प्रापणशीलः रघूपधात् 'पत्' धातोः' क्वनिप् प्रत्ययः *"अन्येभ्योऽपि दृश्यन्ते"* [ *अष्टा० ३।२।७५* ] सः ( अच्छा जिगाति ) अच्छाभिमुखमप्रतिबन्धेन प्राप्नोति *"जिगाति गतिकर्मा "* [ *निघ. २।१४* ] तथा ( मन्द्रः-होता ) स्तुत्यः–आदाता स्वीकारकर्त्ता ( जुह्वा यजिष्ठः ) आत्मना *"आत्मा वै जुहूः "* [ *मै. ४।१।१२* ] अतिशयेन यजनीयः, कर्मणि कर्तृप्रत्ययो व्यत्ययेन

( सम्मिश्लः ) स्वस्मिनुपासकान् सम्यक्-मिश्रयति सः *"कपलिकादीनामिति वक्तव्यम्"* [अष्टा० ८।२।१८ वा०] इति रेफस्य लत्वम् (देवान् आजिघर्ति) तानुपासकान्-आनन्दामृतेन सिञ्चति *"घृतमुदकनाम जिघर्त्तेः सिञ्चतिकर्मणः"* [ निरु० ७।२४ ] ॥ ४॥

**भाषान्वयार्थ—**( सः-अग्निः ) वह अग्रणायक परमात्मा ( अर्कैः-जुषाणः ) अर्चन करने वाले मन्त्रों द्वारा प्रसन्न होने वाला या प्रसन्न किया जाने वाला ( शूषैः-वृधः ) अपने बलों से प्रवृद्ध बढा-चढा हुआ ( देवान् ) उपासक विद्वानों को ( रघुपत्वा ) लघु—अत्यल्प समय या शीघ्र—तुरन्त प्राप्त होने वाला ( अच्छ जिगाति ) सीधा बिना किसी रुकावट के प्राप्त होता है ( मन्द्रः-होता ) वह स्तुति करने योग्य उपासकों को अपना बनाने वाला ( जुह्वा यजिष्ठः ) आत्मा के द्वारा अतीव यजनीय सङ्गमनीय ( सम्मिश्लः ) अपने में उपासकों को मिलाने वाला तल्लीन करने वाला ( देवान्-आ जिघर्ति ) उपासकों को आनन्दामृत से सींचता है ॥ ४ ॥

**भावार्थ—**परमात्मा उपासकों की अर्चनाओं से प्रसन्न होता है, उन पर कृपा करता है, वह उन्हें शीघ्र प्राप्त होता है—स्वीकार करता है या अपनाता है । वह परमात्मा आत्मा द्वारा सङ्गमनीय है, उपासकों को आनन्दामृत से सींच देता है ॥ ४ ॥

**तमुस्रामिन्द्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वम् ।**
**आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥ ५ ॥**

तम् । उस्राम् । इन्द्रम् । न । रेजमानम् । अग्निम् । गीःऽभिः । नमःऽभिः । आ । कृणुध्वम् । आ । यम् । विप्रासः । मतिऽभिः । गृणन्ति । जातऽवेदसम् । जुह्वम् । सहानाम् ॥ ५ ॥

**संस्कृतान्वयार्थः—**( यं जातवेदसं सहानां जुह्वम् ) यं खलु जातस्योत्पन्नमात्रस्य वेत्तारं, सहस्वतां बलवतां स्वाभ्यन्तरे ग्रहीतारं परममात्मानम् *"आत्मा वै जुहूः"* [ मै. ४।१।१२ ] ( विप्रासः ) ऋषयः *"विप्राः-यहषयः"* [ श. ६।४।२।७ ] ( मतिभिः-आ गृणन्ति ) वाग्भिः समन्तादुपदिशन्ति *'वाग्वै मतिः [ श. ८।१।२।७ ]* ( तमुउस्राम् ) तं सुखस्योत्स्राविणम् *"उस्रा उत्स्राविणोऽस्यां भोगाः"* [ निरु. ४।१९ ] उत् स्रु गतौ ततो डः प्रत्ययः कर्त्तरि पुनः "अम् प्रत्यये पूर्वरूपाभावश्छान्दसः उपसर्गस्य तकारलोपश्चापि छान्दसः, यद्वा स्वस्मिन् वासयितारम् अथवा वस् धातोः-रक छान्दसो दीर्घः, यद्वा स्वाभ्यन्तरे वासदातारं 'वस धातोः क्विपि भावे-उस्, उसं-वासं ददाति यः उस्राः, तम् "सम्प्रसारणाभावश्छान्दसः" ( इन्द्रं न रेजमानम्-अग्निम् ) इन्द्रो विद्युद्रूपोऽग्निस्तमिव कम्पायमानमग्रणायकं परमात्मानम् (गीर्भिः-नमोभिः आ कृणुध्वम्) स्तुतिभिरध्यात्मयज्ञैश्च *"यज्ञो वै नमः [ श० २।४।२।२४ ]* साक्षात्कुरुतम्-यूयमुपासका इति शेषः ॥ ५ ॥

**भाषान्वयार्थ—**( यं जातवेदसं सहानां जुह्वम् ) जिस उत्पन्न मात्र के वेत्ता तथा बलवाले, शक्तिशाली वायु विद्युत् आदि को अपने अन्दर ग्रहण करने वाले महान् आत्मा परमात्मा का ( विप्रासः-मतिभिः-आ गृणन्ति ) आदि ऋषि महानुभाव वाणियों से समन्तरूप से उपदेश करते रहे

( तम्-उस्राम् ) उस सुखस्रावी या अपने अन्दर वास देने वाले ( इन्द्रं न रेजमानम्- अग्निम् ) विद्युत् के समान दुष्ट को कंपा देने वाले अग्रणायक परमात्मा के ( गीर्भिः-नमोभिः-आकृणुध्वम् ) स्तुतिवाणियों द्वारा और अध्यात्मयज्ञों–योगाभ्यासों द्वारा हे उपासकजनो ! उसे साक्षात् करो ॥५॥

**भावार्थ**—उत्पन्नमात्र संसार का ज्ञाता–सर्वज्ञ, शक्तिशाली विद्युत् वायु आदि को अपने अधीन रखने वाला जिसका आदि ऋषि महानुभाव उपदेश करते रहे उस सुखदाता, दुष्टों को दण्ड देने वाले परमात्मा की स्तुति उपासना करनी चाहिये और योगाभ्यासों द्वारा साक्षात् करना चाहिये ॥ ५ ॥

**सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवन्त एवैः ।**
**अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥ ६ ॥**

सम् । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः । सप्तिऽवन्तः । एवैः । अस्मे इति । ऊतीः । इन्द्रवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥ ६ ॥

**संस्कृतान्वयार्थः**—( यस्मिन् ) यस्मिन्नग्रणायके परमात्मनि ( विश्वा वसूनि सञ्जग्मुः ) सर्वाणि वासयोग्यानि धनादीनि समवेतानि वर्तन्ते यद्वा यस्मिन् प्राप्ते सर्वाणि धनानि प्राप्तानि भवन्तीति मान्यतासम्भवः 'यस्मिन् विज्ञाते सर्वं मदं विज्ञातं भवतीतिवत्', ( वाजे न सप्तीवन्तः-अश्वाः-एवैः ) बलपूर्णे संग्रामे *"वाजे संग्रामनाम"* [ *निघ० २ । १७* ] यथा वायुवन्तः–वायुबलवन्तो ऽश्वाः अयनैर्गतिक्रमैः सञ्चरन्ते *"वायुः सप्तिः"* [*तै० १।३।६।४*] *"एवैः अयनैः"* [ *निघ० २।२५* ] ( अग्ने ) एतादृश हे-अग्रणायक परमात्मन् ! त्वम् ( अस्मे ) अस्मभ्यम् 'अस्मद् शब्दात् 'शे' *"सुपां सुलक्पूर्व-सवर्णाच्छे ....[ अष्टा० ७।१।३९ ]* इति शे प्रत्ययः, *"शे"* [ *अष्टा० १।१।१३* ] प्रगृह्यसंज्ञात्वात् प्रकृतिभावः ( ऊतीः ) रक्षाप्रीतितृप्तीः ( इन्द्रवाततमाः ) अतिशयेन विद्युद्वातयुक्ताः ( अर्वाचीनाः ) अस्मदभिमुखाः ( आ कृणुष्व ) आकारय-प्रेरय ॥ ६ ॥

**भाषान्वयार्थ**—( यस्मिन् ) जिस अग्रणायक परमात्मा में ( विश्वा वसूनि सञ्जग्मुः) बसाने वाले समस्त धन भोग सुख सङ्गत हैं, जिसके पा लेने पर सब धन भोग सुख प्राप्त हो जाते हैं (वाजे न सप्तीवन्तः-अश्वाः-एवैः) जैसे बलों से पूर्णस्थल–संग्राम में गतिक्रमों से वायुबल वाले घोड़े पहुंचे हुए या प्राप्त होते हुए ( अग्ने ) अग्रणायक परमात्मन् ! तू ( अस्मे ) हमारे लिये–हमारे में या हमारे अन्दर ( इन्द्रवाततमाः-ऊतीः )विद्युत् वायुवाली शक्ति और जीवन देने वाली रक्षा प्रीति तृप्तियों को ( अर्वाचीनाः-आकृणुष्व ) इधर की ओर प्रेरित कर ॥ ६ ॥

**भावार्थ**—परमात्मा की प्राप्ति सब सुखों की प्राप्ति है जैसे बलपूर्ण संग्राम में अश्वबल आदि सब बल प्राप्त होते हैं ऐसे ही परमात्मा हमारे अन्दर सब बल और जीवन देने वाली रक्षा प्रीति तृप्तियों को प्रेरित करता है अतः उसकी शरण और उपासना आवश्यक है ॥ ६ ॥

अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ ।
तं ते देवासो अनु केतमायन्नधावर्धन्त प्रथमास ऊमाः ॥ ७ ॥

अध । हि । अग्ने । मह्ना । निऽसद्य । सद्यः । जज्ञानः । हव्यः । बभूथ । तम् । ते । देवासः । अनु । केतम् । आयन् । अध । अवर्धन्त । प्रथमासः । ऊमाः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन् ! ( अध हि ) तव कृपायाः अनन्तरमेव (मह्ना ) त्वं स्वमहत्त्वेनोदारभावेन ( सद्यः ) तत्कालम् ( निषद्य ) हृदयं प्राप्य ( हव्यः-जज्ञानः-बभूथ ) प्रकाशमानानां स्तुत्यो भवसि ( ते ) तव ( तं-केतुम् ) तं प्रकाशमयस्वरूपम् ( देवासः ) उपासकाः ( अनु-आयन् ) अनुभवन्ति ( अध ) अथ च ( प्रथमासः-ऊमाः-अवर्धन्त ) ते श्रेष्ठाः-प्राप्तरक्षादिकाः-उपासका वर्धन्ते ॥ ७ ॥

**भाषान्वयार्थ**—( अग्ने ) हे अग्रणायक परमात्मन् ! ( अध हि ) तेरी कृपा के अनन्तर ( मह्ना ) तू अपनी महत्ता से ( निषद्य ) मेरे हृदय में प्राप्त होके ( हव्यः-सद्यः-जज्ञानः-बभूथ ) तू स्तुत्य हो जाने पर तुरन्त साक्षात् हो जाता है ( ते देवासः ) तेरे उपासक महानुभाव ( तं-केतुम्-अनु आयन् ) उस स्वरूप को अनुभव करते हैं ( प्रथमासः-ऊमाः-अध-अवर्धन्त ) वे श्रेष्ठ उपासक रक्षादि प्राप्त हुए तुरन्त बढते हैं–समृद्ध हो जाते हैं ॥ ७ ॥

**भावार्थ**—जो उपासक परमात्मा की कृपा में रहकर, उसका रक्षण प्राप्तकर उसके स्वरूप का ज्ञान करते हैं वे सदा उन्नति को प्राप्त होते हैं ॥ ७ ॥



# सप्तमं सूक्तम्

ऋषिः—आप्त्यस्त्रितः ।

देवता—अग्निः ।

छन्दः—१, ३, ५, ६ निचृत् त्रिष्टुप् । २, ४ त्रिष्टुप् । ७ विराट् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अत्र सूक्तेऽग्निशब्देनाग्रणायकः परमात्मा प्रतिपाद्यते ।
इस सूक्त में अग्नि शब्द से अग्रणायक परमात्मा कहा जाता है ।

स्वस्ति नो दिवो अंग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥ १ ॥

स्वस्ति । नः । दिवः । अग्ने । पृथिव्याः । विश्वऽआयुः । धेहि । यजथाय । देव ।
सचेमहि । तव । दस्म । प्रऽकेतैः । उरुष्य । नः । उरुऽभिः । देव । शंसैः ॥ १ ॥

संस्कृतान्वयार्थः—( अग्ने देव ) हे अग्रणायक परमात्मदेव ! ( यजथाय ) जीवनसम्पादनाय, श्रेष्ठकर्मकरणाय, दानाय ( नः ) अस्मभ्यम् ( दिवः ) द्युलोकात् ( स्वस्ति ) कल्याणं कल्याणकरं वर्षं वृष्टिजलम् ( पृथिव्याः ) पृथिवीतः ( विश्वायुः ) सर्वान्नम् *"आयुः-अन्ननाम"* [ निघ० २।७ ] ( धेहि ) धापय-प्रापय ( दस्म देव ) हे दर्शनीय देव ! *"दस दर्शने"* [ चुरादि० ] ( सचेमहि ) वयं त्वयि समवेता भवेम *"षच समवाये"* [ *भ्वादि०* ] ( तव शंसैः-उरुभिः- प्रकेतैः-नः-उरुष्य ) तव प्रशंसनीयैर्बहुभिर्ज्ञानप्रकाशैरस्मान् रक्ष *"उरुष्यति रक्षाकर्मा"* [ *निरु० ५।२३* ] ॥ १ ॥

भाषान्वयार्थ—( अग्ने देव ) हे अग्रणायक परमात्मदेव ! ( यजथाय ) जीवनसम्पादन, श्रेष्ठ कर्म करने तथा दान करने के लिए ( नः ) हमारे लिए ( दिवः स्वस्ति ) द्युलोक–आकाश से कल्याणकर वृष्टिजल को ( पृथिव्याः ) पृथिवी से ( विश्वायुः ) सब प्रकार के अन्न को ( धेहि ) धारण करा–प्राप्त करा ( दस्म देव ) हे दर्शनीय देव ! (सचेमहि) हम तेरे अन्दर समवेत हों–तेरी सङ्गति करें ( तव शंसैः-उरुभिः-प्रकेतैः-नः-उरुष्य ) तेरे अपने प्रशंसनीय बहुत ज्ञानप्रकाशों से हमारी रक्षा कर ॥ १ ॥

भावार्थ—परमात्मा आकाश से वृष्टिजल और पृथिवी से विविध अन्नों को हमें शुभ जीवन यात्रा के लिए देता है साथ ही वह अपने प्रशंसनीय ज्ञानप्रकाशों द्वारा हमारी रक्षा करता है अतः उसकी सङ्गति और उपासना करनी चाहिये ॥ १ ॥

**इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणन्ति राधः ।**
**यदा ते मर्तो अनु भोगमानड् वसो दधानो मतिभिः सुजात ॥ २ ॥**

इमा । अग्ने । मतयः । तुभ्यम् । जाताः । गोभिः । अश्वैः । अभि । गृणन्ति । राधः । यदा । ते । मर्तः । अनु । भोगम् । आनट् । वसो इति । दधानः । मतिऽभिः । सुऽजात ॥ २ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन् ! ( इमाः-मतयः ) एताः-मनुष्यप्रजाः-उपासकजनाः *"प्रजा वै मतयः"* [ तै० आ० ५।६।८ ] ( तुभ्यम् ) त्वदर्थम् ( गोभिः-अश्वैः-जाताः ) इन्द्रियैराशुगमनशीलैर्मनोबुद्धिचित्ताहङ्कारैः सुसम्पन्नाः ( राधः-अभिगृणन्ति ) राधनीयं स्तुत्यं वचनं स्तुवन्ति ( यदा ते मर्तः ) यदा तव मनुष्यः-उपासक-जनः ( भोगम्-अनु-आनट् ) आनन्दरसेन सह व्याप्नोति ( वसो ) हे वासयितः ! ( सुजात मतिभिः-दधानः ) हे सुप्रसिद्ध परमात्मन् ! अस्माभिरुपासकप्रजाभिर्धार्यमाणः सन् प्राप्तो भव ॥ २ ॥

भाषान्वयार्थ—( अग्ने ) हे अग्रणायक परमात्मन् ! ( इमाःमतयः ) ये मनुष्य प्रजाएं (तुभ्यम् ) तेरे लिए ( गोभिः-अश्वैः-जाताः ) इन्द्रियों आशुगामी पवित्र अन्तःकरणों–मनबुद्धिचित्त अहंकारों से सुसम्पन्न हुए ( राधः-अभिगृणन्ति ) आराधनीय स्तुत्यवचन को पुनः पुनः कहते–जपते हैं ( यदा ते मर्तः ) जब तेरे उपासक जन ( भोगम्-अनु-आनट् ) आनन्दरस के साथ व्याप्त हैं ( वसो ) हे बसाने वाले ( सुजात मतिभिः-दधानः ) हे सुप्रसिद्ध परमात्मन् ! हम उपासक प्रजाओं द्वारा धारण किया गया–उपासना में लाया हुआ तू हमें प्राप्त हो ॥ २ ॥

भावार्थ—जो जन संयत इन्द्रियों और पवित्र अन्तः करणों से सम्पन्न होकर परमात्मा के लिये आराधनीय स्तुतिवचन समर्पित करते हैं उन ऐसे जनों द्वारा वह साक्षात् किया जाता है, ऐसे जन ही उसके आनन्दरस में विभोर होते हैं ॥ २ ॥

**अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायम् ।**
**अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥ ३ ॥**

अग्निम् । मन्ये । पितरम् । अग्निम् । आपिम् । अग्निम् । भ्रातरम् । सदम् । इत् । सखायम् । अग्नेः । अनीकम् । बृहतः । सपर्यम् । दिवि । शुक्रम् । यजतम् । सूर्यस्य ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अग्निं पितरं सदम्-इत्-मन्ये ) अग्रणायकं परमात्मानं सदैव पितरं मन्ये-भावयामि ( अग्निम्-आपिम् ) अग्रणायकपरमात्मानं सम्बन्धेन प्राप्तं सम्बन्धिनं सदैव भावयामि ( अग्निं भ्रातरम् ) अग्रणायकपरमात्मानं भ्रातरं भावयामि ( सखायम् ) तथा मित्रं भावयामि ( दिवि बृहतः सूर्यस्य-अग्नेः ) द्युलोके स्थितस्य महतः सूर्यरूपस्याग्नेः ( अनीकं शुक्रं यजतं सपर्यम् ) सेनानीरिव नायकं संस्थापकम् *"सेनाया वै सेनानीरनीकम्"* [ *श० ५ । ३ । १ । १* ] प्रकाशकं यजनीयं सङ्गमनीयं परमात्मानं परिचरेयम्-स्तूयाम् *"सपर्यति परिचरणकर्मा"* [ *निघ० ३ । ५* ] ॥ ३ ॥

**भाषान्वयार्थ**—( अग्निं पितरं सदम्-इत्-मन्ये ) अग्रणायक परमात्मा को पिता मानूं-पिता रूप में अपनाऊँ ( अग्निम् आपिम् ) अग्रणायक परमात्मा को प्राप्त सम्बन्धी मानूं-अपनाऊं ( अग्नि-भ्रातरम् ) अग्रणायक परमात्मा को भ्राता मानूं-अपनाऊं ( सखायम् ) मित्ररूप में मानूं-अपनाऊं ( दिवि बृहतः सूर्यस्य-अग्नेः ) द्युलोक में स्थित महान् सूर्यरूप अग्नि के ( अनीकं शुक्रं यजतं सपर्यम् ) सेनानी जैसे नायक, संस्थापक, प्रकाशक, सङ्गमनीय परमात्मा की उपासना करूं ॥ ३ ॥

**भावार्थ**—अग्रणायक परमात्मा हमारा पिता भ्राता सखा सम्बन्धी है । उसे ऐसा ही मानना चाहिये-अपने अन्दर भावित करना चाहिये तथा संसार के महान् अग्निपिण्ड सूर्य का भी जो नायक तथा समस्त जगत् को प्रकाशित करने वाला है उस परमात्मा को उपकारक जानना और मानना चाहिए ॥ ३ ॥

**सिध्रा अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता ।**
**ऋतावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥ ४ ॥**

सिध्राः । अग्ने । धियः । अस्मे इति । सनुत्रीः । यम् । त्रायसे । दमे । आ । नित्यऽहोता । ऋतऽवा । सः । रोहित्ऽअश्वः । पुरुऽक्षुः । द्युऽभिः । अस्मै । अहऽभिः । वामम् । अस्तु ॥ ४ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन् ! ( अस्मे ) अस्माकम् ( धियः सनुत्रीः-सिध्राः ) स्तुतिवाचः *"वाग्वै धीः"* [ *का० श० ४ । २ । ४ । १* ] त्वया सह त्वत्सङ्गत्या वा सम्भक्त्यस्त्वत्र समागमं प्राप्तवत्यः सिद्धाः सफलाः सन्ति, सन्तु वेति शेषः ( दमे नित्यहोता यम्-आ त्रायसे ) हृदये प्रतिदिनोपास्यः सन् त्वं यमुपासकं समन्तात् त्रायसे निजाश्रयं ददासि ( सः-ऋतावा ) स खलु सत्यवान् जीवनयज्ञं सफलं कृतवान् भवति, तथा ( रोहिदश्वः ) तेजस्वीन्द्रियाश्ववान् *"इन्द्रियाणि हयानाहुः"* [ *कठो० व० ३ । ४* ] ( पुरुक्षुः ) बह्वन्नादिभोगवान् भवति *"क्षु-अन्ननाम"* [ *निघ० २ । ७* ] ( अस्मै द्युभिः-अहभिः- वामम्-अस्तु ) अस्मै खलूपासकाय प्रकाशमयैर्दिनैः सह वननीयं सुखं भवतु-भवति ॥ ४ ॥

**भाषान्वयार्थ**—( अग्ने ) अग्रणायक परमात्मन् ! ( अस्मे ) हमारी (धियः सनुत्रीः-सिध्राः) स्तुतियां तेरे साथ या तेरी सङ्गति से तेरे समागम को प्राप्त हुई सिद्ध सफल हों (दमे नित्यहोता यम्-आ त्रायसे ) हृदय घर में समन्तात् नित्य उपास्य हुआ तू जिसकी सुरक्षा करता है—निज आश्रय देता है ( सः ऋतावा ) वह सत्यवान्–जीवनयज्ञ को सफल किया हुआ, तथा ( रोहिदश्वः ) तेजस्वी इन्द्रियों वाला, शुद्ध इन्द्रियों वाला ( पुरुक्षुः ) बहुत अन्नादि भोग वाला हो जाता है ( अस्मै ) इस उपासक के लिये ( द्युभिः-अहभिः-वामम् अस्तु ) प्रकाशमान दिनों के द्वारा वननीय सुख प्राप्त होता है ॥४॥

**भावार्थ**—जो प्रतिदिन परमात्मा की स्तुति करता है उसकी स्तुतियां सफल हो जाती हैं वह तेजस्वी और अच्छे दिनों वाला होता है ॥ ४ ॥

**द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारम् ।**
**बाहुभ्यामग्निमायवोऽजनन्त विक्षु होतारं न्यसादयन्त ॥ ५ ॥**

द्युऽभिः । हितम् । मित्रम्ऽइव । प्रऽयोगम् । प्रत्नम् । ऋत्विजम् । अध्वरस्य । जारम् । बाहुऽभ्याम् । अग्निम् । आयवः । अजनन्त । विक्षु । होतारम् । नि । असादयन्त ॥ ५ ।

**संस्कृतान्वयार्थः**—( द्युभिः-हितम् ) ज्ञानज्योतिभिः सम्पन्नम् ( मित्रम्-इव प्रयोगम् ) मित्रसदृशं प्रकृष्टं योगकर्तारम्–सहयोगदातारम् ( प्रत्नम् ) शाश्वतिकम् ( अध्वरस्य जारम्-ऋत्विजम् ) अहिंसनीयस्याध्यात्मयज्ञस्य स्तोतव्यम् *"जरति-अर्चतिकर्मा"* *[ निघ० ३ । १४ ]* ( बाहुभ्याम्-आयवः-अग्निम्-अजनन्त ) उपासकजनाः *"आयवः-मनुष्य-नाम" [ निघ० २ । ३ ]* बाहुभ्यामिव-अभ्यासवैराग्याभ्यामग्रणायकं परमात्मानं साक्षात्कृतवन्तः ( विक्षु होतारं न्यसादयन्त ) समस्तप्रजासु होतृत्वेन विराजमानं जीवनदातारं तमुपासका जनाः स्वात्मनि निष्ठापयन्ति ॥ ५ ॥

**भाषान्वयार्थ**— (द्युभिः-हितम् ) ज्ञान ज्योतियों से सम्पन्न ( मित्रम्-इव प्रयोगम् ) मित्र समान प्रकृष्ट सहयोगकर्त्ता ( प्रत्नम् ) शाश्वतिक ( अध्वरस्य जारम्-ऋत्विजम् ) अहिंसनीय अध्यात्म-यज्ञ के अर्चनीय ऋत्विक्–सम्पादक को ( बाहुभ्याम्-आयवः-अग्निम्-अजनन्त ) उपासक जन बाहुओं के समान अभ्यास-वैराग्य द्वारा अग्रणायक परमात्मा को अपने अन्दर साक्षात् प्रकट करते हैं ( विक्षु होतारं न्यसादयन्त ) समस्त प्रजाओं में जीवन-दाता के रूप में विराजमान परमात्मा को स्वात्मा में बिठाते हैं ॥ ५ ॥

**भावार्थ**— ज्ञान-ज्योतियों से युक्त, मित्रसमान, अध्यात्म-यज्ञ के सम्पादक, समस्त प्रजाओं में व्यापक परमात्मा को अभ्यास वैराग्य द्वारा उपासक जन साक्षात् अपने अन्दर बिठाते हैं ॥ ५ ॥

स्वयं यजस्व दिवि देव देवान् किं ते पाकः कृणवदप्रचेताः ।
यथायज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥ ६ ॥

स्वयम् । यजस्व । दिवि । देव । देवान् । किम् । ते । पाकः । कृणवत् । अप्रऽचेताः । यथा । अयजः । ऋतुऽभिः । देव । देवान् । एव । यजस्व । तन्वम् । सुऽजात ॥ ६ ॥

**संस्कृतान्वयार्थः**—( देव ) हे परमेष्टदेव ! ( दिवि देवान् स्वयं यजस्व ) द्युलोके वर्तमानान् सूर्यादीन् *"देवो-द्युस्थानो भवतीति वा"* [ *निरु० ७ । १५* ] त्वं स्वयं सङ्गमय सम्यक् गुणवतः कृत्वा संस्थापय प्रेरय च–सङ्गमयसि–संस्थापयसि प्रेरयसि च ( अप्रचेताः-पाकः-ते किं कृणवत् ) यः खल्वप्रकृष्टचेताः-अल्पज्ञस्त्वया च पक्तव्यो ज्ञानदानेन *"पाकः पक्तव्यो भवति"* [ *निरु० ३ । १२* ] जीवात्मा तव किं साहाय्यं कुर्यात् ? न किमपि कर्त्तुमर्हति, यद्यपि जीवात्माऽपि त्वद्वन्नित्यश्चेतनश्चास्ति ( देव ) हे-उपास्यदेव परमात्मन् ! ( यथा-ऋतुभिः- देवान्-अयजः ) यथा खलु त्वमृतुभिः-उचितकालैस्तान् दिव्यगुणान् देवान् तत्तद्गुणैः समसृजत्-संसृजति ( एव ) एवम् ( सुजात तन्वं यजस्व ) हे सुप्रसिद्ध परमात्मदेव ! स्वतनूं मामात्मानं यजस्व योग्यं सम्पादय ज्ञानदर्शनदानेन *"वृणते तनूं स्वाम्"* [ *मुण्डकोप० ३ । ३* ] *"आत्मा वै तनूः"* [ *श० ६ । ७ । २ । ६* ] ॥ ६ ॥

**भाषान्वयार्थ**— ( देव ) हे परम इष्टदेव परमात्मन् ! ( दिवि देवान् स्वयं यजस्व ) द्युलोक में वर्तमान सूर्यादि को तू स्वयं सङ्गत कर–सङ्गत करता है–सम्प्रेरित करता है ( अप्रचेताः- पाकः-ते किं कृणवत् ) अप्रकृष्ट ज्ञानवाला–अल्पज्ञ मुझ से ज्ञान पाकर पक्का बनने वाला जीवात्मा तेरी क्या सहायता कर सकता है ? कुछ भी नहीं कर सकता, यद्यपि जीवात्मा तेरे जैसा नित्य, चेतन और सृष्टि के देवों-सूर्य आदि से पूर्व वर्तमान होता है (देव) हे उपास्यदेव परमात्मन् ! (यथा- ऋतुभिः-देवान्-अयजः ) तू जैसे उस उसके कालों से सूर्यादि देवों को स्वस्व दिव्यगुणों से संसृष्ट करता है ( एव ) इसी प्रकार ( सुजात तन्वम् यजस्व ) हे सुप्रसिद्ध परमात्मन् ! अपने अङ्गरूप मुझ आत्मा को गुणों से संसृष्ट कर ॥ ६ ॥

**भावार्थ**—परमात्मा ने आकाश के सूर्य आदि पदार्थों को उन-उन गुणों से युक्त उन-उन के समयानुसार रचा यद्यपि जीवात्मा उनके रचने से पूर्व वर्त्तमान रहता है परन्तु वह अल्पज्ञ- अल्पशक्ति होने से उनके रचने में उसका सहायक नहीं बन सकता अपितु परमात्मा अपनी कृपा से ज्ञान दर्शन देकर जीवात्मा को गुणवान् और कर्म करने में समर्थ बनाता है ॥ ६ ॥

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वोऽ अप्रयुच्छन् ॥ ७ ॥

भव । नः । अग्ने । अविता । उत । गोपाः । भव । वयःऽकृत् । उत । नः ।

वयः॒ऽधाः । रा॒स्व । च॒ । नः॒ । सु॒ऽम॒हः॒ । ह॒व्यऽदा॑तिम् । त्रा॒स्व । उ॒त । नः॒ । त॒न्वः॑ । अप्र॑ऽयुच्छन् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन् ! त्वम् ( नः-अविता-उत-गोपाः-भव ) अस्माकं बाह्यभयाद् रक्षकस्तथाऽऽन्तरिकरोगादपि रक्षको भव ( नः ) अस्माकम्—अस्मासु ( वयस्कृत्-उत वयोधाः-भव ) प्राणस्य कर्ता तथा प्राणस्य धारयिता भव *"प्राणो वै वयः"* [ ऐ० १ । २८ ] ( सुमहः ) हे सुमहनीय परमात्मन् ! ( हव्यदातिं रास्व ) हव्यानां समर्प्याणां स्तुतिवचनानां दानयोग्यतां देहि ( उत-नः ) तथा अस्माकम् ( तन्वः-अप्रयुच्छन्-त्रास्व ) शरीराणि-अप्रमाद्यन्-अनुपेक्षमाणः सन् त्रायस्व ॥ ७ ॥

**भाषान्वयार्थ**—( अग्ने ) हे अग्रणायक परमात्मन् ! तू ( नः-अविता-उत-गोपाः-भव ) हमारा बाहरी भय से रक्षा करने वाला तथा भीतरी रोग से भी रक्षा करने वाला हो ( नः ) हमारा—हमारे में ( वयस्कृत्-उत वयोधाः-भव ) प्राण का सम्पादक तथा प्राण का धारण कराने वाला हो ( सुमहः ) हे उत्तमप्रशंसनीय परमात्मन् ! तू ( हव्यदातिं रास्व ) तेरे प्रति समर्पण योग्य स्तुतिवचनों के देने की योग्यता को प्रदान कर ( उत नः ) और हमारे ( तन्वः-अप्रयुच्छन्-त्रास्व ) शरीरों की उपेक्षा न करता हुआ रक्षा कर ॥ ७ ॥

**भावार्थ**—अग्रणायक परमात्मा के प्रति स्तुतिवचनों को अर्पित करने से वह बाहरी भयों से और रोगों से बचाता है तथा वही परमात्मा प्राण सञ्चालन करने वाला व प्राणशक्ति धारण कराने वाला है और वह ही शरीर का भी नियतरूप से त्राण करने वाला है ॥ ७ ॥



# अष्टमं सूक्तम्

ऋषिः—त्रिशिरास्त्वाष्ट्रः

देवता—१-६ अग्निः, ७-९ इन्द्रः।

छन्दः—१, २, ५-७, ९ निचृत् त्रिष्टुप् । ३, ४, ८ पादनिचृत् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अस्मिन् सूक्तेऽग्निशब्देन लोकत्रये वर्तमानस्याग्नितत्त्वस्य वर्णनं क्रियते । इन्द्रशब्देन च परमात्मोपास्यत्वेन वर्ण्यते ।

इस सूक्त में तीनों लोकों में वर्तमान अग्नितत्त्व का वर्णन किया जाता है । और इन्द्र शब्द से परमात्मा उपासनीय वर्णित किया है ।

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥ १ ॥

प्र । केतुना । बृहता । याति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति । दिवः । चित् । अन्तान् । उपऽमान् । उत् । आनट् । अपाम् । उपऽस्थे । महिषः । ववर्ध ॥ १ ॥

**संस्कृतान्वयार्थः**—( अग्निः ) महान्-अग्निः ( बृहता केतुना ) महता ज्ञापकेन प्रकाशेन ( रोदसी ) द्यावापृथिव्यौ-द्यावापृथिवीमयं जगत् प्रति ( प्र याति ) प्रगच्छति-प्राप्नोति, तत्र विभाग उच्यते ( वृषभः-रोरवीति ) पृथिव्यामग्निरूपेण प्रज्वलन् सन् वृषभ इव भृश शब्दयति वायुमिश्रितः ( दिवः-अन्तान्-उपमान्-चित् ) द्युलोके सूर्यरूपेण द्युलोकस्य प्रान्तभागानुपाश्रितान् पिण्डरूपान् खल्वपि ( उदानट् ) उपरि सन् व्याप्नोति ( अपाम्-उपस्थे ) अन्तरिक्षस्य *"आपोऽन्तरिक्षनाम"* [ *निघ० १ । ३* ] मध्ये यद्वा-अपां जलानामुपरिस्थाने-अन्तरिक्षे विद्युद्रूपेण ( महिषः-ववर्ध ) एवं महान् सन् वृद्धिमाप्तोऽस्ति ॥ १ ॥

**भाषान्वयार्थ**—( अग्निः ) महान् अग्नि ( बृहता केतुना ) महान् ज्ञापक प्रकाश से ( रोदसी ) द्यावापृथिवीमय जगत् के प्रति (प्रयाति) प्राप्त हो रहा है । विभाग से कहते हैं-(वृषभः-रोरवीति) पृथिवी पर अग्निरूप से जलता हुआ वायुयोग से वृषभ समान शब्द करता है (दिवः-अन्तान्-उपमान्-चित् ) द्युलोक के प्रान्तभागों को भी तथा उपाश्रित पिण्डों को भी ( उदानट् ) ऊपर

**संस्कृतान्वयार्थः**—( घृतस्नू ) हे तेजसो जलस्य च सम्भाजयितारौ *"घृतस्नूर्घृतसानिन्यः"* [ निरु. १२ । ३६ ] ( रोदसी ) रोधसी रोधस्वतौ संरक्षकौ *"रोदसी रोधसी रोधः कूलं निरुणद्धि स्रोतः"* [ निरु. ६ । १ ] ( द्यावाभूमी ) सूर्यपृथिव्याविव (पितरा) मातापितरौ ज्ञानप्रकाशजीवनरसप्रदातारौ ( वाम्-अर्चामि ) युवां स्तौमि—इत्यत्र त्वामग्निं परमात्मानं सूर्यरूपं भूमिरूपं मातृरूपं पितृरूपं ज्ञानप्रकाशदातारं जीवनरसदातारं त्वां स्तौमि ( अपः-वर्धाय ) कर्मक्षेत्रस्य जीवनस्य वर्धनाय *"अपः कर्मनाम"* [ निघ० २ । १ ] 'मतुब्लोपश्छान्दसः' ( मे शृणुतम् ) मम प्रार्थनावचनं शृणु ( यत्-अहा द्यावः ) यतो हि दिनानि द्युसंलग्नत्वादत्र रात्रयोऽपेक्ष्यन्ते रात्रयश्च ( असुनीतिम्-अयन् ) प्राणनयनशक्तिं जीवनशक्तिं प्राप्नुवन्तु *"असुनीतिरसून् नयति"* [ निरु० १० । ३९ ] ( अत्र ) अस्मिन् जीवने ( नः ) अस्मभ्यम् ( मध्वा शिशीताम् ) निजमधुरसुखानि 'मध्वा' इत्यात् प्रत्ययः [ अष्टा० ७ । १ । ३९ ] दत्तम्—देहि *"शिशीतिर्दानकर्मा"* [ निरु० ५ । २३ ] ॥ ४ ॥

**भाषान्वयार्थ**—( घृतस्नू ) हे तेज और जल के सम्भाजन कराने वाले ( रोदसी ) अनर्थों से रोधने—रोकने वाले संरक्षको ( द्यावाभूमी ) सूर्य और पृथिवी के समान ( पितरा वाम्-अर्चामि ) मातापिताओ ! तुम्हारी अर्चना स्तुति करता हूं—तुझ माता और पिता रूप परमात्मा की स्तुति करता हूं ( अपः-वर्धाय ) कर्मक्षेत्र या कर्मसाधन जीवन की वृद्धि के लिए ( मे शृणुतम् ) मेरे प्रार्थना-वचन को सुनो ( यत् ) यतः-कि ( अहा द्यावः ) दिन और रातें ( असुनीतिम्-अयन् ) प्राणनयन शक्ति—जीवन शक्ति की ओर चलावें प्राप्त करावें ( अत्र ) इस जीवन में ( नः ) हमारे लिए ( मध्वा शिशीताम् ) निज मधुर सुखों को प्रदान करें ॥ ४ ॥

**भावार्थ**—माता—पिता बालक को संरक्षण पोषण स्नेह से पालते हैं, परमात्मा भी माता—पिता के समान या सूर्य पृथिवी के समान प्रकाश और स्निग्धरस—दूध पिलाता है। दिन रात का विभागकर्ता वही परमात्मा है ॥ ४ ॥

**किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।**
**मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥ ५ ॥**

किम् । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति । व्रतम् । चकृम । कः । वि । वेद । मित्रः । चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । याताम् । अपि । वाजः । अस्ति ॥ ५ ॥

**संस्कृतान्वयार्थः**—( राजा नः किं स्वित्-जगृहे ) ज्ञानप्रकाशेन राजमानः परमात्माऽस्माकं किं हि खलु स्तुतिवचनं स्वीकुर्यात् ( अस्य कत्- व्रतम्-अतिचकृम ) अस्य किं कथम्भूतं व्रतं कर्म विधानं शासनं वयमत्यन्तं सेवेमहि, इति ( कः-विवेद ) कश्चन भाग्यशाली धीरो विविच्य वेत्तुमर्हति ( जुहुराणः ) आहूयमानः ( मित्रः-चित्-हि-स्म ) स तु मित्र इव हि खलु ( श्लोकः-देवान् न याताम् ) स स्तुतिश्रवणसमर्थः सत्यस्तुतिसंयुक्तः *"श्लोकः शृणोतेः"* [ निरु० ९ । ६ ] *"श्लोकः सत्यवाक्संपृक्तः"* [ यजु० ११ । ५

दयानन्दः ] न सम्प्रत्यर्थे, अस्मान्-उपासकान् मुमुक्षून् प्राप्नोति ( वाजः-अस्ति ) मुमुक्षूणां वाजोऽमृतभोगोऽस्ति *"अमृतोऽन्नं वै वाजः"* [ *जै० २ । १९३* ] ॥ ५ ॥

**भाषान्वयार्थ**—( राजा ) ज्ञानप्रकाश से राजमान परमात्मा ( नः ) हमारे ( किं स्वित्-जगृहे ) किस ही स्तुतिवचन को ग्रहण कर सके—स्वीकार कर सके ( अस्य कत्-व्रतम् ) इसके किस कर्मविधान शासन को ( अतिचक्रम ) हम अत्यन्त सेवन करें, यह ( कः-विवेद ) कोई भाग्यशाली धीर विवेचन करके जान सकता है ( जुहुराणः ) बुलाया जाता हुआ—प्रार्थित किया जाता हुआ ( मित्रः-चित्-हि-स्म ) वह तो मित्रसमान ही ( श्लोकः-देवान्-न याताम् ) स्तुति सुनने में समर्थ सत्यस्तुति से संयुक्त हुआ हम उपासक मुमुक्षुओं को प्राप्त होवे (वाजः-अस्ति) मुमुक्षुओं का अमृतभोग है ॥ ५ ॥

**भावार्थ**—परमात्मा को कौनसा स्तुतिवचन स्वीकार होता है तथा उसके किस कर्मशासन आदेश—उपदेश का आचरण या पालन करना चाहिए यह तो उपासक वीर मुमुक्षु जान सकता है। वह ऐसे मुमुक्षु उपासक का बुलाने स्मरण करने योग्य मित्र है स्तुति को सुनने वाला, स्तुति सुनने में समर्थ, अमृत भोग देने वाला उन्हें प्राप्त हो जाता है ॥ ५ ॥

**दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति ।**
**यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥ ६ ॥**

दुःऽमन्तु । अत्र । अमृतस्य । नाम । सऽलक्ष्मा । यत् । विषुऽरूपा । भवाति । यमस्य । यः । मनवते । सुऽमन्तु । अग्ने । तम् । ऋष्व । पाहि । अप्रऽयुच्छन् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( यद्-अत्र ) यदाऽस्मिन् जन्मनि ( सलक्ष्मा नाम विषुरूपा भवाति ) समानलक्षणा मानवी बुद्धिः खलु विषुरूपा तद्भिन्नरूपा विलक्षणा दैवी बुद्धिः सुसूक्ष्मा भवेत् *"लिङर्थे लेट्"* [ अष्टा० ३ । ४ । ६ ] *"विषुरूपः प्राप्तविद्यः"* [ ऋ० ५ । १५ । ४ *दयानन्दः* ] तदा ( अमृतस्य यमस्य ) अमृतस्वरूपस्य जगन्नियन्तुस्तव परमात्मनः ( सुमन्तु दुर्मन्तु यः-मनवते ) सुगमतया मन्तव्यं दुर्गमतया—कठिनतया मन्तव्यं स्वरूपं निश्चिनोति सः ( ऋष्व-अग्ने ) हे महान् परमात्मन् । ( तम्-अप्रयुच्छन् पाहि ) त्वमप्रमाद्यन्—निरन्तरं तं रक्ष—रक्षसि ॥ ६ ॥

**भाषान्वयार्थ**—( यद्-अत्र ) जब इस जन्म में ( सलक्ष्मा नाम विषुरूपा भवाति ) समानलक्षणा मानवी बुद्धि उससे भिन्न विलक्षण दैवी मुमुक्षुजनवाली सुसूक्ष्मा बुद्धि हो जावे तो ( अमृतस्य यमस्य ) अमृतस्वरूप जगन्नियन्ता तुझ परमात्मा के ( सुमन्तु दुर्मन्तु ) सुगमता से मानने योग्य तथा कठिनता से मानने योग्य स्वरूप को ( यः-मन्वते ) जो निश्चय कर लेता है, वह ( ऋष्व अग्ने ) हे महान् परमात्मन् ! ( तम्-अप्रयुच्छन् पाहि ) उसकी निरन्तर रक्षा करता है ॥ ६ ॥

भावार्थ—उपासक इसी जन्म में अपनी मानवी बुद्धि को दैवी बुद्धि सुसूक्ष्मा बनाकर अमृतस्वरूप परमात्मा के लोकप्रसिद्ध तथा गुह्यस्वरूप को जान लेता है उसकी परमात्मा रक्षा करता है ॥ ६ ॥

यस्मिन्नदेवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्ये ज्योतिरदधुर्मास्य१क्तून्परि द्योतनिं चरतो अजस्रा ॥ ७ ॥

यस्मिन् । देवाः । विदथे । मादयन्ते । विवस्वतः । सदने । धारयन्ते । सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिम् । चरतः । अजस्रा ॥ ७ ॥

संस्कृतान्वयार्थः—( देवाः ) मुमुक्षवो विद्वांसः ( यस्मिन् विदथे ) यस्मिन् वेदने वेदनीये स्वात्मवेदनं यदाश्रयं तस्मिन् वा ज्ञानप्रकाशस्वरूपे परमात्मनि *'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि निष्पद्यते"* [ *छान्दो० ८ । ३ । ४* ] इत्युक्तं यथा ( मादयन्ते ) हर्षमाप्नुवन्ति–आनन्दन्ति तं च ( विवस्वतः-सदने धारयन्ते ) मनुष्यस्य *"विवस्वन्तो मनुष्याः"* [ *निघ० २ । ३* ] शरीरे निवसते–आत्मनो हृदयगृहे धारयन्ति, यश्च परमात्मा ( सूर्ये ज्योतिः-अदधुः ) सूर्ये ज्योतिः–प्रकाशमदधात्–दधाति, 'व्यत्ययेन बहुवचनम्', पूजार्थं वा ( मासि-अक्तून् ) मासयति मासश्चन्द्रमाः *"एषः-चन्द्रमाः-मासः"* [ *जै० २ । ३* ] तत्र चन्द्रमसि तद्विरुद्धमन्धकारमन्धकारे दृश्यमानानि व्यक्तानि नक्षत्राणि दधाति ( द्योतनिम्-अजस्रा परिचरतः ) तौ सूर्याचन्द्रमसौ तं स्वद्योतयितारं निरन्तरं स्वव्यवहारकर्तारौ परितः–आश्रयतः ॥ ७ ॥

भाषान्वयार्थ—( देवाः ) मुमुक्षु विद्वान् जन ( यस्मिन्-विदथे ) जिस वेदनीय-अनुभवनीय में या स्वात्मरूप जिसके आश्रय पर अनुभव करते हैं उस ऐसे ज्ञानप्रकाशस्वरूप परमात्मा में ( मादयन्ते ) हर्ष आनन्द को प्राप्त करते हैं उसे ( विवस्वतः-सदने धारयन्ते ) मनुष्य के शरीर में में बसने वाले आत्मा के हृदयगृह में धारणकरते हैं, जो परमात्मा (सूर्ये ज्योतिः-मासि-अक्तून्-अदधुः) सूर्य में प्रकाश चन्द्रमा में अन्धकार–अन्धकार में व्यक्त होने वाले नक्षत्रतारों को धारण करता है, उस ( द्योतनिम्-अजस्रा परिचरतः ) अपने प्रकाशित करने वाले परमात्मा को सूर्य चन्द्रमा निरन्तर परिपूर्णरूप आश्रय कर रहे हैं ॥ ७ ॥

भावार्थ—परमात्मा में ममुक्षुजन आनन्द प्राप्त करते हैं, उसे अपने हृदय में धारण करते हैं । वह सूर्य में प्रकाश चन्द्रमा में अन्धकार एवं चमकने वाले तारों को आश्रित करता है । सूर्य और चन्द्रमा निरन्तर परमात्मा के आश्रय में रहते हैं । इसी तरह परमात्मा द्वारा उपासक हृदय में प्रकाश तेज और मन में शान्ति प्राप्त करता है ज्ञानविकास करता है ॥ ७ ॥

यस्मिन्देवा मन्मनि संचरन्त्यपीच्ये३न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ८ ॥

यस्मिन् । देवाः । मन्मनि । सम्ऽचरन्ति । अपीच्ये । न । वयम् । अस्य । विद्म । मित्रः । नः । अत्र । अदितिः । अनागान् । सविता । देवः । वरुणाय । वोचत् ॥ ८ ॥

**संस्कृतान्वयार्थः**—( यस्मिन् मन्मनि-अपीच्ये ) यस्मिन् हि मननीये *"मन्मभिः-मननीयैः" [ निरु० १० । ६ ]* अपीच्ये – अपचिते प्रशंसां प्राप्ते हृदयान्तर्हिते वा *"अपीच्यमपचितमपिहितमन्तर्गतं वा" [ निरु० ४ । २५ ]* परमात्मनि ( देवाः-सञ्चरन्ति ) मुमुक्षवो विद्वांसः सम्यक् चरन्ति सम्यग् विहरन्ति–सङ्गच्छन्ते ( वयम्-अस्य न विद्म ) वयं साधारणजनाः–अस्य परमात्मनः स्वरूपं न विद्म, सः ( अत्र ) अस्मिन् जन्मनि ( मित्रः ) संसारे कर्मकरणाय प्रेरकः सखा ( अदितिः ) अविनाशिनी माता ( सविता ) उत्पादकः–पिता ( देवः ) ज्ञानदाता गुरुः ( वरुणाय ) 'वरुणः' मोक्षार्थं वरयिता बन्धुः, 'व्यत्ययेन प्रथमास्थाने चतुर्थी' ( नः-अनागान्-वोचत् ) अस्मान् पापसम्पर्करहितान् पुण्यवत आध्यात्मिक जनान् स्वं कल्याणवचनं वदेत्–उपदिशेत् ॥ ८ ॥

**भाषान्वयार्थ**—( यस्मिन् मन्मनि-अपीच्ये ) जिस मननीय प्रशंसाप्राप्त तथा हृदयान्तर्हित परमात्मा में ( देवाः- सञ्चरन्ति ) मुमुक्ष आत्माएं सङ्गत होते हैं–समागमलाभ करते हैं ( अस्य वयं न विद्म ) इसके स्वरूप को हम साधारण जन नहीं जान पाते हैं, वह ( अत्र ) इसी जन्म में ( मित्रः ) कर्मार्थ प्रेरित करने वाला सखा ( अदितिः ) अविनाशी माता ( सविता ) उत्पादक पिता ( देवः ) ज्ञानदाता गुरु ( वरुणाय ) 'वरुणः' मोक्षार्थ वरने वाला बन्धु भ्राता ( नः-अनागान् वोचत् ) हम पापरहितों पुण्यात्मा हुओं को बुलाता है, कल्याणवचन कहता है ॥ ८ ॥

**भावार्थ**—मुमुक्षु आत्माएं मननीय स्तुति करने योग्य हृदयस्थित परमात्मा में समागम करते हैं । साधारण जन उसे नहीं जान पाते हैं । इसी जन्म में वह कर्मार्थ प्रेरक सखा अविनाशी माता उत्पादक पिता ज्ञानदाता गुरु मोक्षार्थ वरने वाला बन्धु हम पापरहितों पुण्यात्माओं को बुलाता है, कल्याणवचन सुनाता है ॥ ८ ॥

**श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।**
**आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥**

गत एष मन्त्रः पूर्वसूक्तान्ते, तद्वत् संस्कृतार्थभाषार्थभावार्था विज्ञेयाः ॥ ९ ॥



# त्रयोदशं सूक्तम्

ऋषिः—विवस्वानादित्यः ।

देवता—हविर्धाने ।

छन्दः—१ पादनिचृत् त्रिष्टुप् । २, ४ निचृत् त्रिष्टुप् । ३ विराट् त्रिष्टुप् । ५ निचृज्जगती ।

स्वरः—१-४ धैवतः । ५ निषादः ।

विषयः—अत्र सूक्ते हविर्धानाभ्यां द्यावापृथिवीभ्यां मिषेण वरवध्वो-र्गार्हस्थ्यचर्या विधीयते, अनन्तरं वनगमनं च ।
इस सूक्त में हविर्धान-द्युलोकपृथिवीलोक के मिष से वरवधू की गृहस्थचर्या का विधान है, उसके पश्चात् वनगमन का भी ।

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १ ॥

युजे । वाम् । ब्रह्म । पूर्व्यम् । नमःऽभिः । वि । श्लोकः । एतु । पथ्याऽइव । सूरेः । शृण्वन्तु । विश्वे । अमृतस्य । पुत्राः । आ । ये । धामानि । दिव्यानि । तस्थुः ॥ १ ॥

**संस्कृतान्वयार्थः**—( वाम् ) युवाभ्यां हविर्धानाभ्यां हविषां धानमाधानं ययोर्याभ्यां वा ते द्यावापृथिव्यौ *"द्यावापृथिवी वै देवानां हविर्धाने"* [ *ऐ० १ । २९* ] तद्वन्मनुष्याणां हविर्धाने स्त्रीपुरुषौ, भार्यापती, वधूवरौ, विवाहकाले याभ्यां मिलित्वा हविषामाधानं क्रियते—इति ताभ्यां पुरोहितो ब्रवीति ( पूर्व्यं ब्रह्म ) शाश्वतिकं मन्त्रविधानम् ( नमोभिः ) यज्ञैर्यज्ञाङ्गैः *"यज्ञो वै नमः"* [ *श० ७ । ४ । १ । २०* ] यज्ञानाश्रित्य ( युजे ) युनज्मि प्रयुञ्जे-उच्चारयामि—उपदिशामि ( सूरेः श्लोकः पथ्या-इव वि-एतु ) सर्वोत्पादकस्य परमात्मनः *"सूङः क्रिः"* [ *उणा० ४ । ६४* ] श्रवणीय आदेशः *"श्लोकः शृणोतेः"* [ *निरु० ९ । ९* ] पथ्यापथ्यया पथ्याभिर्वा मार्गदिग्भिः-विविधतया विशिष्टतया सर्वत्र गच्छतु यथा तम् ( अमृतस्य विश्वे पुत्राः शृण्वन्तु ) अमरस्य परमात्मनः सर्वे पुत्राः श्रोतारः शृण्वन्तु ( ये दिव्यानि धामानि-आ तस्थुः ) येऽत्र यज्ञियानि स्थानानि समातिष्ठन्ति

"सुवर्गो लोको दिव्यं धाम" [ तै० २।६।७।६ ] "स्वर्गो वै लोको यज्ञः" [ कौ० १४।१ ] ॥ १ ॥

भाषान्वयार्थ—( वाम् ) तुम हविर्धान-हवियों का, धान-आधान जिनके द्वारा हो वे द्युलोक पृथिवीलोक की भांति स्त्री–पुरुष, वर और वधू विवाहकाल में जो हवियों का आधान करते हैं ऐसों के लिए पुरोहित कहता है ( पूर्व्यं ब्रह्म ) शाश्वतिक मन्त्रविधान को ( नमोभिः ) यज्ञों के द्वारा–यज्ञों का आश्रय लेकर ( युजे ) मैं प्रयुक्त करता हूं, उच्चारण करता हूं–उपदेश करता हूं ( सूरेः श्लोकः पथ्याइव वि-एतु ) सर्वोत्पादक परमात्मा का श्रवणीय आदेश मार्ग–दिशाओं से विशेषता से सर्वत्र प्राप्त हो, जैसे उसको ( अमृतस्य विश्वे पुत्राः शृण्वन्तु ) अमर परमात्मा के सब श्रोतापुत्र सुनें ( ये दिव्यानि धामानि-आ तस्थुः ) जो यहां यज्ञीय स्थानों में समासीन हैं ॥ १ ॥

भावार्थ—गृहस्थ आश्रम में प्रवेश करने वाले वर–वधुओं का विवाह पुरोहित द्वारा वेदमन्त्रों से होना चाहिए। इस विवाह प्रसङ्ग में उच्चारित किये वेदमत्रों को वेदि पर बैठे हुए समस्त जन सुनें, मानो विवाह के साक्षी बनें ॥ १ ॥

यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः ।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ २ ॥

यमे इवेति यमेऽइव । यतमाने इति । यत् । ऐतम् । प्र । वाम् । भरन् । मानुषाः । देवऽयन्तः । आ । सीदतम् । स्वम् । ऊँ इति । लोकम् । विदाने इति । स्वासस्थे इति सुऽआसस्थे । भवतम् । इन्दवे । नः ॥ २ ॥

संस्कृतान्वयार्थः—( यमे-इव यतमाने यत्-ऐतम् ) हे वधूवरौ ! युवां यथा मातुरुदराद् बहिरागमनं कुरुतो द्वे कन्ये तथा यतमानौ परस्परं बन्धनबद्धौ यतो वेदीं प्राप्नुतम् तदा ( मानुषाः-देवयन्तः-वां प्रभरन् ) देवं परमात्मानमिच्छन्तः-आस्तिका जनाः युवां प्रकृष्टं भरन्ति पुष्णन्ति–अनुमोदयन्ति ( स्वं लोकम्-उ-आसीदतम् ) विवाहानन्तरं स्वगृहं खलु समन्तात् प्राप्नुतम्, तत्र गत्वा च ( विदाने स्वासस्थे ) स्वात्मनि ज्ञापयन्त्यौ द्यावापृथिव्यौ सुप्रतिष्ठिते–इव प्रतिष्ठितौ ( नः-इन्दवे भवतम् ) अस्माकं यज्ञाय श्रेष्ठकर्मसाधनाय सहयोगिनौ भवतम् ॥ २ ॥

भाषान्वयार्थ—( यमे-इव यतयाने यत्-ऐतम् ) हे वधूवरो ! तुम जैसे माता के उदर से दो युगलकन्यायें परस्पर बन्धन में बद्ध होकर उत्पन्न होती हैं वैसे तुम वेदी पर प्राप्त होओ ( मानुषाः देवयन्तः वां प्रभरन् ) तब परमात्मा को चाहते हुए आस्तिक जन तुम्हारा प्रकृष्टरूप से भरण–पोषण और अनुमोदन करते हैं ( स्वं लोकम्-उ-आसीदतम् ) अतः तुम विवाह के अनन्तर अपने घर को भलीभांति प्राप्त होओ; और वहां जाकर ( विदाने स्वासस्थे ) स्वात्मा में द्युलोक और पृथिवीलोक जैसे प्रतिष्ठित हुए अपने को समझो ( नः-इन्दवे भवतम् ) हमारे यज्ञ–श्रेष्ठकर्म को साधने के लिए सहयोगी होओ ॥ २ ॥

भावार्थ—विवाह हो चुकने पर गृहस्थ बन्धन में जब स्त्री–पुरुष बंध जावें तो आस्तिक जन उनका अनुमोदन करें और वे अपने घर में गृहस्थ को चलाने के लिए जैसे द्युलोक पृथिवीलोक संसार को चलाते हैं ऐसे अपने को समझकर स्थिर रहें। इस प्रकार अन्य गृहस्थ आश्रमियों की भांति यज्ञादि श्रेष्ठकर्म करते रहें ॥ २ ॥

पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन।
अक्षरेण प्रति मिम एतामृतस्य नाभावधि सं पुनामि ॥ ३ ॥

पञ्च। पदानि। रुपः। अनु। अरोहम। चतुःऽपदीम। अनु। एमि। व्रतेन। अक्षरेण। प्रति। मिमे। एताम्। ऋतस्य। नाभौ। अधि। सम्। पुनामि ॥ ३ ॥

संस्कृतान्वयार्थः—( रुपः पञ्च पदानि-अनु-अरोहम् ) शरीरे विमोहं प्राप्तोऽहं जीवः "रुप विमोहने" [ दिवादि० ] इदानीं गार्हस्थ्यान्निवृत्तो विरक्तो वनस्थोऽनुभवामि यत्–शरीरस्य पञ्चकोशात्मकानि रूपाणि खल्वनुक्रान्तवान् ( व्रतेन चतुष्पदीम्-अन्वेमि ) सद्व्रतेन योगाभ्यासेन जाग्रत्स्वप्नसुषुप्ततुरीयावस्थासु तुरीयावस्थामप्यनुभवामि, तदा ( एताम्-अक्षरेण-प्रतिमिमे ) एतामवस्थां 'ओ३म' इत्याख्येन–अविनाशिना ब्रह्मणा सह सायुज्यं सादृश्यं नयामि, एवम् ( ऋतस्य नाभौ अधि सम् पुनामि ) अध्यात्मयज्ञस्य मध्ये स्वात्मानं सम्यग् निर्मलीकरोमि ॥ ३ ॥

भाषान्वयार्थ—( रुपः-पञ्च पदानि-अनु-अरोहम् ) शरीर में विमोह को प्राप्त हुआ मैं गृहस्थाश्रम से निवृत्त-विरक्त हुआ अपने को वानप्रस्थ अनुभव करता हूं, अत एव शरीर के पांच कोशों को मैं लांघ चुका हूं–लांघता हूं ( व्रतेन चतुष्पदीम्-अन्वेमि ) योगाभ्यास रूप सद्व्रत के द्वारा जागृतस्वप्नसुषुप्तितुरीय अवस्थाओं में तुरीय अवस्था को अनुभव करता हूं, तब ( एताम्-अक्षरेण प्रतिमिमे ) इस अवस्था को 'ओ३म्' इस अक्षर अर्थात् अविनाशी ब्रह्म के साथ संयोग–सादृश्य को प्राप्त होता हूं, इस प्रकार ( ऋतस्य नाभौ-अधि सम् पुनामि ) अध्यात्मयज्ञ के मध्य में अपने स्वात्मा को सम्यक् निर्मल करता हूं ॥ ३ ॥

भावार्थ—मानव को गृहस्थ आश्रम पूरा करने के पश्चात् वैराग्यवान्–वानप्रस्थ होकर पांचकोशों का अनुभव करना चाहिए तथा जागृत–स्वप्न–सुषुप्ति और तुरीय अवस्थाओं में भी चलते हुए योगाभ्यास के द्वारा 'ओ३म्' अविनाशी ब्रह्म के साथ अपनी सङ्गतिरूप अध्यात्म यज्ञ के अन्दर अपने को पवित्र करना चाहिए ॥ ३ ॥

देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत।
बृहस्पतिं यज्ञमकृण्वत ऋषिं प्रियां यमस्तन्वं१ प्रारिरेचीत् ॥ ४ ॥

देवेभ्यः। कम। अवृणीत। मृत्युम। प्रऽजायै। कम। अमृतम्। न। अवृणीत। बृहस्पतिम। यज्ञम्। अकृण्वत। ऋषिम। प्रियाम्। यमः। तन्वम। प्र। अरिरेचीत् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( देवेभ्यः कं मृत्युम्-अवृणीत ) बृहस्पतिः 'उत्तरार्द्धितः' वेदवाचः स्वामी परमात्मा मुमुक्षुभ्यः कतमं मृत्युं स्वीकरोति ? न कमपि, स्वाभाविकं जरानन्तरभाविनमेव सकृन्मृत्युं-अवृणीत-स्वीकरोति ते देवास्तु खल्वमृतभागिनः ( प्रजायै कम्-अमृतं न-अवृणीत ) प्रजायमानायै देवेभ्यो भिन्नायै केवलं जन्मधारणयोग्यायै कमपि खल्वमृतं न स्वीकरोति सा तु जन्मनि भोगरता, कुत एवं यत् ( बृहस्पतिम्-ऋषिं यज्ञम्-अकृण्वत ) वेदस्वामिनं सर्वद्रष्टारं परमात्मानं सङ्गमनीयं ते कुर्वन्ति-आश्रयन्ति तेभ्यो मुमुक्षुभ्यः कमपि मृत्युं न कृत्वा तान् स अमृतान् करोति, अथ तद्विपरीतानां प्रजायमानानां नास्तिकानां प्रेयमार्गे प्रवृत्तानाम् ( प्रियां तन्वं यमः प्रारिरेचीत् ) प्रियां तनुं-प्रियं देहं यमः-कालः प्राणरहितं करोति ॥ ४ ॥

भाषान्वयार्थ—( देवेभ्यः कं मृत्युम्-अवृणीत ) बृहस्पति परमात्मा मुमुक्षुजनों के लिए किस मृत्यु को स्वीकार करता है अर्थात् किसी भी मृत्यु को नहीं किन्तु स्वाभाविक जरानन्तर होने वाली मृत्यु को स्वीकार करता है क्योंकि देव तो अमर होते हैं ( प्रजायै कम्-अमृतं न-अवृणीत ) देवों से भिन्न प्रजायमान केवल जन्म धारण करने योग्य प्रजा के लिए किसी भी अमृत को नहीं स्वीकार करता । वह तो जन्म में भोगरत है, यह कैसे ? ( बृहस्पतिम्-ऋषिं यज्ञम्-अकृण्वत ) वेदस्वामी सर्वज्ञद्रष्टा परमात्मा को जो सङ्गमनीय बनाते हैं उसे आश्रित करते हैं उन मुमुक्षुओं के लिए किसी मृत्यु को न करके उन्हें अमृत बनाता है और उनसे विपरीत पुनः पुनः प्रजायमान नास्तिकों-प्रेयमार्ग में प्रवृत्त हुओं की ( प्रियां तन्वं यमः प्रारिरेचीद ) प्यारी देह को काल प्राणरहित कर देता है ॥ ४ ॥

भावार्थ—सर्वज्ञ अन्तर्यामी परमात्मा उपासना करते हुए मुमुक्षुओं के लिए जरा के अनन्तर ही मृत्यु को करता है मध्य में नहीं और उनसे भिन्न नास्तिक जनों की देह को काल प्राणों से रिक्त कर देता है उनको अमृत की प्राप्ति नहीं होती ॥ ४ ॥

सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतम् ।
उभे इदस्योभयस्य राजत उभे यतेते उभयस्य पुष्यतः ॥ ५ ॥

सप्त । क्षरन्ति । शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि । अवीवतन् । ऋतम् । उभे इति । इत् । अस्य । उभयस्य । राजतः । उभे इति । यतेते इति । उभयस्य । पुष्यतः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( मरुत्वते शिशवे ) प्राणवते शंसनीयाय जीवात्मने *"प्राणो वै मरुतः"* [ ऐ० ३ । १६ ] ( पित्रे पुत्रासः सप्त क्षरन्ति ) पितृभूताय पुत्राः पुत्ररूपाः सर्पणशीला ते प्राणाः सञ्चलन्ति *'क्षर सञ्चलने"* [ *भ्वादिः* ] ( ऋतम्-अपि अवीवतन् ) जीवनयज्ञं खल्ववश्यं वर्तयन्ति चालयन्ति 'वृतु धातोर्णिजन्तस्य लुङि चङि प्रयोग ऋकारलोपश्छान्दसः' ( अस्य-उभयस्य ) अस्य जीवात्मन उभयरूपस्य मनुष्यरूपस्य पुनः पुनर्जायमानस्य, देवभूतस्य मुमुक्षोश्च ( उभे-इत् राजतः ) बृहस्पतिर्यमश्च, बृहस्पतेः

सङ्गमने यमस्य क्रियानिमित्ते स्वामित्वं कुरुतः ( यतेते ) यत्नं विधत्तः ( उभे-उभयस्य पुष्यतः ) उभे निमित्ते ह्युभयस्य पुनः पुनर्जायमानस्य मुक्तिं गतस्य च फलं प्रयच्छतः ॥ ५ ॥

भाषान्वयार्थ—( मरुत्वते शिशवे ) प्राणवान् शंसनीय–प्रशंसनीय जीवात्मा के लिए ( पित्रे पुत्रासः सप्त क्षरन्ति ) पिता समान के लिए पुत्ररूप सर्पणशील प्राण सञ्चार करते हैं ( ऋतम्-अपि-अवीवतन् ) जीवनयज्ञ को अवश्य वर्तातें हैं–चलाते हैं ( अस्य-उभयस्य ) इस जीवात्मा के उभयरूप–दोनों रूप, अर्थात् मनुष्यरूप पुनः पुनः जन्मते हुए तथा देवरूप मुमुक्षु के ( उभे-इत्-राजतः ) बृहस्पति और यम दोनों स्वामित्व करते हैं, बृहस्पति समागम में और यम प्राणहरण में ( यतेते ) वे दोनों इस प्रकार यत्न करते हैं ( उभे-उभयस्य पुष्यतः ) वे दोनों बृहस्पति और यम दोनों रूप वाले मुमुक्षु और साधारण जन को मुक्ति और भुक्ति फल को देते हैं ॥ ५ ॥

भावार्थ—आत्मा जब शरीर धारण करके संसार में प्राणवान् होता है तब प्राण इसके पुत्र के समान रक्षार्थ सञ्चार करते हैं और जीवनयज्ञ को आगे बढाते हैं। इस जीवात्मा के दो रूपों मुमुक्षुरूप और बारम्बार जन्म लेने वाले मनुष्यरूप का बृहस्पति और यम स्वामित्व करते हैं और मुक्ति तथा बारम्बार जन्म देकर भुक्ति–भोग फल देते हैं ॥ ५ ॥



# चतुर्दशं सूक्तम्

ऋषिः—वैवस्वतो यमः ।

देवता—१-५, १३-१६ यमः । ६ लिङ्गोक्ताः । ७-९ लिङ्गोक्ताः पितरो वा । १०-१२ श्वानौ ।

छन्दः—१, १२ भुरिक् त्रिष्टुप् । २, ३, ७, ११ निचृत् त्रिष्टुप् । ४, ६ विराट् त्रिष्टुप् । ५, ९ पादनिचृत् त्रिष्टुप् । ८ आर्ची स्वराट् त्रिष्टुप् । १० त्रिष्टुप् । १३, १४ निचृदनुष्टुप् । १५ विराड् बृहती । १६ अनुष्टुप् ॥

स्वरः—१-१२ धैवतः । १३, १४, १६ गान्धारः । १५ मध्यमः ॥

## वक्तव्य

इस सूक्त के प्रथम और षष्ठ मन्त्र निरुक्त में व्याख्यात हैं, निरुक्तकार ने यम का अर्थ या उसका सम्बन्ध मृतपुरुषों के अधिष्ठाता का नहीं दर्शाया अपितु उससे भिन्न किसी विशेष विज्ञान का दर्शक अर्थ किया है जो उसकी अत्युत्तमग्राह्य नैरुक्त प्रक्रिया है । जिसका अवलम्बन हमारे अर्थों में है । इस सूक्त में वैवस्वत यम की चर्चा है, जहां-जहां यम का वैवस्वत विशेषण दिया गया है वहां वहां विवस्वान् ( सूर्य ) से उत्पन्न हुआ काल यम का अर्थ है । अत एव यहां भी वैवस्वत विशेषण होने से यम का अर्थ काल है । ज्योतिर्विद्या में दो प्रकार का काल माना गया है, एक लोकों का अन्त करने वाला काल जिसको विश्वकाल ( व्यापी काल ) कहते हैं । दूसरा गणनात्मक काल जिसको संख्येय काल ( कालविभाग ) कहते हैं—

"लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः ।" [ सूर्यसिद्धान्त १ । १० ]

इस प्रकार इस सूक्त में उभयविध काल का विज्ञान है । काल का संसार के बड़े बड़े और छोटे छोटे पदार्थों के साथ सम्बन्ध, जीवनकाल की वृद्धि का प्रकार, काल के ऋतु आदि विभाग और उनका अन्य वस्तुओं से सहचार तथा उपयोग, प्राणियों की उत्पत्ति, देहपात तथा पुनर्जन्म में काल का सम्बन्ध, भूत-वर्तमान-भविष्यत् में काल-क्रान्ति और उसका प्रभाव आदि-आदि आवश्यक विज्ञान इस सूक्त में है ।

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥

परेयिऽवांसम् । प्रऽवतः । महीः । अनु । बहुऽभ्यः । पन्थाम् । अनुऽपस्पशानम् । वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । दुवस्य ॥ १ ॥

**संस्कृतान्वयार्थः**—( महीः- अनु-प्रवतः परेयिवांसम् ) महीरनु पृथिवीलोकाननु "महीति पृथिवीनाम" [ निघ० १ । १ ] प्रवतः प्रगतान् पुराणानुद्वत उद्गतानुन्नतान् निवतो निगतानल्पसमयकान् पदार्थान् पर्यागतवन्तं परिक्रम्य सर्वतोऽधिकृत्य प्राप्तवन्तम् "महीरनु प्रवत उद्वतो निवतः पर्यागतवन्तम्" [ निरु० १० । २० ] ( बहुभ्यः पन्थाम्-अनुपस्पशानम् ) बहुभ्यः प्रकारेभ्यः 'हेतौ पञ्चमी' विशेषेण पाशयमानं पाशमिव विस्तारयन्तम् "बहुभ्यः पन्थामनुपस्पाशयमानम्" [ निरु० १० । २० ] ( जनानां सङ्गमनं वैवस्वतं यमं राजानं हविषा दुवस्य ) जनानां जायमानानामुत्पद्यमानानां पदार्थानाम् "जायते इति जनः" सङ्गमनमन्ते प्राप्तिस्थानं वैवस्वतं विवस्वतः सूर्यस्य पुत्रं यमं यन्तारं कालं समयं प्रातःसायन्दर्शपौर्णमासतु संवत्सरविभागात्मकं राजानं राजानमिव वर्तमानं हविषा हविर्दानेन दुवस्य राध्नुहि संसाधय स्वानुकूलं कुरु दीर्घायुष्यलाभायेति यावत् ॥ १ ॥

**भाषान्वयार्थ**—( महीरनु प्रवतः परेयिवांसम् ) पृथिवी लोकों पर स्थित पुराने, उन्नत और थोड़े समय के या ताजे उत्पन्न एवं सभी पदार्थों को सर्वतः अधिकार करके प्राप्त तथा ( बहुभ्यः पन्थाम् अनुपस्पशानम् ) बहुत प्रकारों से जीवन मार्ग को पाशतुल्य स्वाधीन करते हुए और ( जनानां सङ्गमनं वैवस्वतं यमं राजानं हविषा दुवस्य ) जायमान अर्थात् उत्पन्नमात्र वस्तुओं के प्राप्तिस्थानरूप सूर्य के पुत्र काल-समय प्रातः सायं-अमावस्या-पूर्णिमा-ऋतु-संवत्सर विभाग-युक्त राजा के समान वर्तमान विश्वकाल 'समय' को आहुति क्रिया से हे जीव ! तू दीर्घायुलाभ के लिए स्वानुकूल बना । यह आन्तरिक विचार है ॥ १ ॥

**भावार्थ**—विश्वकाल संसार के सब पदार्थों को व्याप्त और प्राप्त है । वही सबकी उत्पत्ति, स्थिति और नाश का निमित्त है । उस सूर्यपुत्र को आयुवर्धक पदार्थों के होम द्वारा स्वानुकूल बनाना चाहिए ॥ १ ॥

**यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।**
**यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥ २ ॥**

यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा । गव्यूतिः । अपऽभर्तवै । ऊँ इति । यत्र । नः । पूर्वे । पितरः । पराऽईयुः । एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥ २ ॥

**संस्कृतान्वयार्थः**—( यमः-नः-गातुं प्रथमः-विवेद ) यमः-कालो नः-अस्माकं गातुम्-गमनम्-गतिम् "गातुं गमनम्" [ निरु० ४ । २१ ] प्रथमः सन् विवेद-लब्धवान्, 'विद्लृ लाभार्थोऽत्र' अस्माकं जीवनगतिं प्रारम्भिकः समयः प्राप्तवानित्यर्थः । ( एषा गव्यूतिः-न-अपभर्तवा उ ) एषा गव्यूतिरेष मार्गो नैवापहर्तव्यस्त्यक्तुं शक्यः

"कृत्यार्थे तवैकेन्केन्यत्वनः" [ अष्टा० ३ । ४ । १४ ] ( यत्रा नः पूर्वे पितरः परेयुः ) यस्मिन् मार्गेऽस्माकं पूर्वे पितरोऽस्मदपेक्षया पूर्वे जनकादयः पालयितृजनाः परेयुः-परागच्छन्ति कुलपरम्परया यात्रां कुर्वन्ति 'परेयुरिति सामान्ये काले लिट्' ( एना जज्ञानाः स्वाः पथ्या-अनु ) अनेनैव मार्गेण जाता उत्पन्नाः सर्वेऽपि पदार्थाः स्वाः-निजान् मार्गे भवान् धर्मान् "भवे छन्दसि" [ अष्टा० ४ । ४ । ११० ] अनुगच्छन्ति ॥ २ ॥

**भाषान्वयार्थ—**( यमः-नः-गातुं प्रथमः-विवेद ) समय ने ही हमारी जीवनगति को प्रथम से ही प्राप्त किया हुआ है, अत एव ( एषा गव्यूतिः-न-अपभर्तवा-उ ) यह काल मार्ग किसी तरह त्यागा नहीं जा सकता ( यत्रा नः पूर्वे पितरः परेयुः ) जिस मार्ग में हमसे पूर्व उत्पन्न जनक आदि पालक जन भी कुलपरम्परा से यात्रा करते चले आये हैं और ( एना जज्ञानाः स्वाः पथ्या-अनु ) इसी मार्ग से उत्पन्न हुए सभी प्राणी और वनस्पति आदि पदार्थ निज मार्ग संबंधी धर्मों का अनुगमन करते हैं, अत एव उस समय को पूर्वमन्त्रानुसार होम द्वारा स्वानुकूल बनाना चाहिए ॥ २ ॥

**भावार्थ—**प्रत्येक प्राणी के गर्भकाल ने ही जीवन की गति को आरम्भ कर दिया है। यावत् शरीरपात हो यह जीवनगति चलती रहती है। उस काल के अधीन होकर जनक आदि भी यात्रा करते हैं अपितु संसार के सभी जड़ चेतन पदार्थ अपनी-अपनी प्रकृति, योनि किंवा कर्मानुसार परिणाम और पुष्पफलादि को प्राप्त करते हैं। इस प्रकार यह यात्रा सबके लिए अवश्यम्भावी है ॥ २ ॥

**मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।**
**यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ ३ ॥**

मातली । कव्यैः । यमः । अङ्गिरःऽभिः । बृहस्पतिः । ऋक्वऽभिः । वावृधानः । यान् । च । देवाः । वावृधुः । ये । च । देवान् । स्वाहा । अन्ये । स्वधया । अन्ये । मदन्ति ॥ ३ ॥

**संस्कृतान्वयार्थः—**( मातली कव्यैः-यमः-अङ्गिरोभिः-बृहस्पतिः-ऋक्वभिः-वावृधानः ) मातली कव्यैर्वावृधानो यमोऽङ्गिरोभिर्वावृधानो बृहस्पतिर्ऋक्वभिर्वावृधानो भवति । मातली-भूतली-पृथिवीतली पृथिवीस्थानी पृथिवीस्थानोऽग्निर्देवः, "मा--पृथिवी" "अयं वै पृथिवीलोको माऽयं हि लोको मित इव [ श० ८ । ३ । ३ । ५ ] तस्यास्तलमस्यास्तीति मत्वर्थे इनौ मातली पृथिवीस्थानोऽग्निः, स च द्विविधः प्राण्यन्तर्वर्ती जीवनाग्निरपरो भौतिकाग्निः, अस्ति चात्र मन्त्रे श्लेषालङ्कारः । तत्र प्राण्यन्तर्वर्ती जीवनाग्निः कव्यैरन्नादिभोजनैर्भौतिकश्चाग्निः कुः पृथिवी तत्र भवैः कव्यैः पार्थिवैर्घृततैलान्नकाष्ठादीन्धनद्रव्यैर्वर्धमानो भवति-वर्धत इति सिद्धान्तः । कुः पृथिवीत्यत्र प्रमाणम् "रविवर्षार्धं देवाः पश्यन्त्युदितं रविं तथा प्रेताः । शशिमासार्धं पितरः शशिगाः कुदिनार्धमिह मनुजाः [ आर्यभट्टीय ज्योतिषम् गीतिका १७ ] "जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्" [ कठो० १ । १ । २८ ] "दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥" [ मनु० ३ । १३० ] इत्यत्र

कव्येनान्नादिभोजनं गृह्यते। यमो मध्यस्थानो देवः प्राण्यन्तर्वर्ती जीवनकालोऽपरश्च भौतिको लोकानामन्तकृद् विश्वकालोऽङ्गिरोभिः-अङ्गानां रसैः प्राणैः प्राणसञ्चरणैस्तत्तुल्यकालावयवैः सूर्यरश्मिभिस्तन्निष्पन्नकालगतिभिर्वा वर्धते, *"अङ्गिरसोऽङ्गानां हि रसः प्राणो वाऽङ्गानां रसः"* [ बृहदारण्य० १ । ३६ । ३ ] *"प्राणो वाऽङ्गिराः"* [ श० ६ । १ । २ । २८ ] प्राणः कालावयवः *"प्राणादिः कथितो मूर्त्तः ( कलनात्मकः कालः)"* [ सूर्यसिद्धान्ते १ । ११ ] बृहस्पतिरूर्ध्वस्थानः प्राण्यन्तर्वर्ती जीवनप्राणः, न तु श्वासप्रश्वासात्मकः, अपि तु जीवयति यः प्राणिनं स जीवनशक्तिरूपः प्राणः जीवनप्राणः, यथा बृहदारण्यके-*"एष उ एव प्राणो बृहस्पतिर्वाग् वै बृहती तस्या एष पतिस्तस्माद् बृहस्पतिः"* [ १ । २ । २० ] द्वितीयश्च भौतिको वर्षाधिपतिर्देवः, यथा निरुक्ते-*"बृहस्पतिर्बृहतः पाता वा पालयिता वा"* [ निरु० १० । १२ ] *"द्यौर्वै बृहत्"* [ श० ६ । १ । २ । ३७ ] *"असौ द्युलोको बृहत्"* [ ऐत० ८ । २ ] द्यौश्च मेघमण्डलम् *"असौ वै द्युलोकः समुद्रो नभस्वान्"* [ श० ६ । ४ । २ । ५ ] *"द्यौर्वाऽपां सदनं दिवि ह्यापः सन्नाः* [ श० ७ । ५ । २ । ५६ ] एवं मत्वा यास्केनगुदाहृता-*तस्यैषा भवति-अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य"* [ ऋ० १० । ६८ । ८ ] व्यापनवता मेघेन जलमपिनद्धमासीत्तद् विशेषशब्देन बृहस्पतिर्निहृतवान् पृथिव्यामिति निरुक्तार्थः । स एवं द्विविधः शरीरभुवनभेदाभ्यां जीवनः प्राणो वर्षाधिपतिश्च बृहस्पतिर्देव ऋक्वभिर्विविधगुणवतीभिः कृत्रिमस्वाभाविकवाग्भिः विरवैः स्तनयित्नुभिर्गर्जनशब्दैर्वर्धते वृद्धिं महत्त्वमाप्नोति । वाग्विरवयोः सम्बन्धश्च बृहस्पतिना सह समीपं दर्शित इव । ऋक्वभिरित्यत्र शब्दश्च सामान्यो धात्वर्थः, यथा निरुक्ते-*"मित्रो जनान्यातयति प्रब्रुवाणः-शब्दं कुर्वन्"* [ निरु० १० । २२ ] एवं सति (देवाः-यान्-च ववृधुः) पूर्वोक्ता मातल्यादिनामभिर्व्यवहृता अग्न्यादयो देवा वर्धमानाः सन्तो यांश्च जनान् ववृधुर्वर्धितवन्तस्तथा ( ये च देवान् ) ये जनाश्च देवान् पूर्वोक्ताग्न्यादीन् ववृधुर्वर्धितवन्तस्ते जनाः ( अन्ये स्वधया-अन्ये स्वाहा मदन्ति ) अन्ये केचित् स्वधयाऽन्नादिभोजनैर्मदन्ति तानग्न्यादीन् शरीरदेवान् तर्पयन्ति । 'अत्र मदेस्तृप्त्यर्थः' केचित् स्वाहाहुतिप्रदानेन मदन्ति तानग्न्यादीन् भौतिकदेवान् युञ्जतेऽनुतिष्ठन्ति, 'मद तृप्तियोगे' तृप्तिश्च योगश्च, *"सर्वो द्वन्द्वो विभाषैकवद् भवति"* [ महाभाष्य १ । २ । ६ ३ ] ॥ ३ ॥

भाषान्वयार्थ—( मातली कव्यैः-यमः-अङ्गिरोभिः-बृहस्पतिः ऋक्वभिः-ववृधानः ) मातली-पृथिवीस्थानी अग्नि, वह दो प्रकार का है-एक प्राणी के अन्तर्गत जीवनाग्नि कव्य अन्नादि भोजनों से तथा भौतिक अग्नि कव्य पृथिवी से उत्पन्न पार्थिव अन्न-घृत-तैल-काष्ठ आदि ईन्धन द्रव्यों से बढता है, यम मध्यस्थानी देव प्राणी के अन्तर्वर्ती जीवनकाल । दूसरा, भौतिक लोकों का अन्तकारी विश्वकाल; अङ्गिरों, प्राणों, प्राणक्रियाओं तथा प्राण नामक कालविभागों, सूर्य रश्मियों से निष्पन्नकाल गतियों से बढता है, बृहस्पति ऊर्ध्वस्थानी देव । प्राणी के अन्तर्वर्ती जीवन-प्राण और दूसरा भौतिक वर्षा का नियामक देव जो कि मेघमण्डल में वर्तमान जलवृष्टि से प्रजा को जीवन प्रदान करता है । वह ऋक्वों-विविधगुणवाली कृत्रिम और स्वाभाविक वाणियों स्तनयित्नुरूप गर्जन शब्दों से वृद्धि को प्राप्त होता है । ऐसा होने पर ( देवाः-यान्-च ववृधुः ) पूर्वोक्त वृद्धि को

प्राप्त हुए अग्नि देवों ने जिन लोगों को बढाया तथा ( ये च देवान् ) और जिन लोगों ने पूर्वोक्त अग्नि आदि देवों को बढाया वे ( अन्ये स्वधया मदन्ति ) कुछ एक जन तो अन्नादि भोजनों से उन शरीर के अन्तर्वर्ती अग्नि आदि देवों को तृप्त करते हैं ( अन्ये स्वाहा मदन्ति ) कतिपय जन आहुति प्रदान करके भौतिक अग्नि आदि देवों का सेवन करते हैं ।। ३ ।।

भावार्थ—मनुष्यों को चाहिए कि अपने व्यक्तिजीवन की उन्नति के लिए निज जीवनाग्नि, जीवनकाल और जीवनप्राण को उत्तमोत्तम भोजनों के सेवन से उपयुक्त बनावें तथा समाज वा सर्वप्राणियों के हितार्थ अग्निहोत्र से भौतिक अग्नि, 'सामष्टिक काल और मेघमण्डल को उपयुक्त करते रहें ।। ३ ।।

समीक्षा—"मातलिरिन्द्रस्य सारथिस्तद्वानिन्द्रो मातली" ( सायण ) यहां 'मातलि इन्द्र का सारथि और उस सारथि से युक्त मातली इन्द्र है' यह तथा मातली का इन्द्र अर्थ करना सर्वथा अनुपपन्न है क्योंकि प्रथम तो मातलि इन्द्र का सारथि हो इसके लिए निरुक्तादि वैदिक साहित्य में स्थान नहीं, दूसरे इकारान्त शब्द से मत्वर्थीय इन् प्रत्यय हो ही नहीं सकता उसका विधान अकारान्त से है । इसलिये मातली का इन्द्र अर्थ करना अनुचित है ।।

**इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।**
**आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ ४ ॥**

इमम् । यम । प्रऽस्तरम् । आ । हि । सीद । अङ्गिरःऽभिः । पितृऽभिः । सम्ऽविदानः । आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु । एना । राजन् । हविषा । मादयस्व ॥ ४ ॥

**संस्कृतान्वयार्थः—( यम-अङ्गिरोभिः-पितृभिः-संविदानः-इमं प्रस्तरं हि-आसीद ) यम—हे जीवनकाल ! अङ्गानां रसैः प्राणैः सहानुकूलःसंस्त्वमिमं प्रस्तरम्—शरीर रूपं यज्ञं जीवन-वृद्धिहेतोरवश्यमासीद—समन्तात्प्राप्तो भव *"यज्ञो वै प्रस्तरः"* [श० १ । ३ । ४ । १० ] *'पुरुषो वाव यज्ञः"* [ छान्दो० ३ । ६ । १ ] *"पुरुषो वै यज्ञस्तस्य शिर एव हविर्धानं मुखमाहवनीयः"* [ गो० ५ । ४ ] ( कविशस्ताः-मन्त्राः-त्वा-आवहन्तु ) विद्वत्प्रोक्तानि शरीरविद्यावित्प्रोक्तानि मन्तव्यानि त्वामावहन्तु—अत्र शरीरे समन्तात् प्रापयन्तु चिरं रक्षन्त्वित्यर्थः, अत एव (राजन्-एना हविषा-मादयस्व ) राजन्—हे राजमान देव ! अनेन हविर्दानेनादानयोग्येन वस्तुना वा मां मादयस्व—युङ्क्ष्व—संतोषय सजीवनं कुर्वित्यर्थः ॥ ४ ॥**

भाषान्वयार्थ—( यम-अङ्गिरोभिःपितृभिःसंविदानः-इमं प्रस्तरं हि-आसीद ) हे जीवनकाल ! तू प्राणों के साथ अनुकूल होता हुआ मेरे इस शरीररूपी यज्ञ को जीवनवृद्धि के हेतु अवश्य भली प्रकार प्राप्त हो ( कविशस्ताः-मन्त्राः-त्वा-आवहन्तु ) शरीर—विद्यावेत्ता विद्वानों के निर्दिष्ट मन्तव्य तुझ को मेरे शरीर में चिरकाल तक रखें, अत एव ( राजन्-एना-हविषा मादयस्व ) हे राजमान देव ! इस हविर्दान तथा खाने योग्य पदार्थ से मुझ को सन्तुष्ट, सजीवन कर ।। ४ ।।

१४

भावार्थ—प्राणशक्ति के अभ्यास और वैद्यक सिद्धान्तों के अनुसार खानपान हवनादि क्रियाओं से मनुष्य दीर्घजीवी और सुखी हो सकता है ॥ ४ ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

आङ्गिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व । विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य ॥ ५ ॥

**संस्कृतान्वयार्थः**—( यज्ञियेभिः-वैरूपैः-अङ्गिरोभिः-यम-आ गहि इह मादयस्व ) यज्ञार्हैर्यज्ञयोग्यैर्विभिन्नरूपैरङ्गिरोभिः–सायम्प्रातरमावस्यापौर्णमास्यादि– सन्धि – समप्राणैः कालावयवैः सह हे समय ! त्वमागह्यागच्छ तथाऽऽगत्येहास्मिन् यज्ञेऽस्मान्मादयस्व तर्पय ( यः-ते पिता तं विवस्वन्तं बर्हिष्या निषद्य–अस्मिन् यज्ञे हुवे ) यश्च ते पिता विवस्वान् सूर्योऽस्ति तमहमासनमुपविश्योपविष्टः सन्नस्मिन् क्रियमाणे यज्ञे हुवे–आहुतिप्रदानेनाददे युनज्मि । 'अत्र हु धातुरादानार्थः' *"हु दानादनयोरादाने च"* [ *जुहोत्यादिः* ] ॥ ५ ॥

भाषान्वयार्थ—( यज्ञियेभिः-वैरूपैः-अङ्गिरोभिः-यम-आगहि इह मादयस्व ) यज्ञ के योग्य नानाविध सायं प्रातः, अमावस्या, पूर्णिमा, आदि सन्धियों के मुहूर्तरूप कालावयवों के साथ हे समय ! तू प्राप्त हो और इस यज्ञ यज्ञ में हमको अपने लाभ से तृप्त कर ( यः-ते पिता तं विवस्वन्तं बर्हिष्या निषद्य-अस्मिन् यज्ञे हुवे ) और जो तेरा पिता सूर्यदेव है उसका भी मैं आसनोपविष्ट इस यज्ञ में आहुतिप्रदान द्वारा प्रयोग करता हूँ ॥ ५ ॥

भावार्थ—भिन्न–भिन्न पर्व दिवसों में जबकि सूर्यरश्मियां भी यज्ञ में संयुक्त हों ऐसे स्थान पर पार्वण यज्ञ समय को अनुकूल बनाने के लिए करने चाहियें ॥ ५ ॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः । तेषाम् । वयम । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अङ्गिरसः पितरः नवग्वाः-अथर्वाणः-भृगवः सोम्यासः-नः ) अङ्गिरसः-ग्रीष्मर्तुसम्बन्धिसूर्यरश्मयः, पितरः–वर्षर्तुसम्बन्धिरविकिरणाः, नवग्वः-शरदृतुसम्भन्धिभानुरश्मयः, अथर्वाणः–हेमन्तर्तुसम्बन्धिरवि–किरणाः, भृगवः–शिशिरर्तुसम्बन्धिसूर्यरश्मयः, सोम्यासः–वसन्तर्तुसम्बन्धिसूर्यकिरणाः, नः–अस्मभ्यं जीवनाय सन्ति । पूर्वस्मिन्मन्त्रे 'विवस्वन्तं हुवे' इति वचनात् तेन विवस्वता साकमृतव-स्तत्सहिताः सूर्यरश्मयश्चापि युज्यन्त इति दर्शयितुमङ्गिरःप्रभृतीनां वचनम् । अन्यत्रापि–*"आयातु मित्र ऋतुभिः कल्पमानः संवेशयन् पृथिवीमुस्रियाभिः"* [ *अथ० ३ । ८ । १* ] सूर्यः, -

भिरुस्त्रियाभिश्च सह आयातीति सिद्धान्तः। अत्र तु ते रश्मय ऋतुसहचरिता वर्णिताः सन्ति। एवंवच्च विज्ञानम्।"*वीलु चिद् दृढा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण। चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः*" [ ऋ० १। १। २ ] अत्रापि दर्शितं यदङ्गिरसो ग्रीष्मर्तुसम्बन्धिनः सूर्यरश्मयोऽद्रिं मेघं चक्रुः कृतवन्तस्तमेवाद्रिं मेघं पितरो वर्षर्तुसम्बन्धिरविकिरणा रुजन् भङ्क्ष्यन्ति नीचैर्निपातयन्ति पुनश्चोस्रा विविधगुणवासयितारः शारदाः सूर्यकिरणा आदित्यं दिनं पृथिवीं प्राप्नुवन्ति, एवमृतुसाम्यं दर्शितम्। ऋतुत्रयत्वमपि भवति यथा चरके–"*विकृता-स्त्वेनं महता विपर्ययेणोपपादयन्ति, ऋतवस्त्रय इव*" [ चरके १२। १३ ] तथा कृत्वैवात्र पितर इति शब्दो न विशेषणरूपेणापित्वङ्गिरआदिवद्देवतारूपेण स्वतन्त्र एव। सायणेन 'पितरो नवग्वाः सोम्यासः' इत्योऽप्यङ्गिरआदीनां विशेषणवाचकाः सन्तीति व्याख्यातं परन्तु सूक्तभाष्यावतरणे "अङ्गिरसो नः पितरो नवग्वा इति षष्ठ्या अङ्गिरःपित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः" एवमत्र तु सायणेन 'पितरः' इति शब्दस्य देवतात्वं प्रतिपादितम्। अस्तु, निरुक्तेऽप्यस्मद्वत् पितर इत्यस्य स्वतन्त्रं देवतात्वमेव प्रतिपादितमङ्गिरआदीना-मर्थाश्च यथा—

"*पिता पाता वा पालयिता वा*......*पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः*" [ निरु० ४। २१ ] इति लक्ष्यीकृत्योक्तमत्र "*पितरो व्याख्याता। अङ्गारेष्वङ्गिराः अर्चिषि भृगुः संबभूव*" इति कृत्वैवोक्तं यास्केन। "*अङ्गिरसो व्याख्याताः, भृगवो व्याख्याताः, अथर्वाणोऽथनवन्तः, थर्वतिश्चरतिकर्मा तत्प्रतिषेधः। तेषामेषा साधारणा भवति–'अङ्गिरसो नः पितरो*...... *।' अङ्गिरसो नः पितरो नवगतयो नवनीतगतयो वाथर्वाणो भृगवः सोम्याः सोमसम्पादिनः*" [ निरु० ११। १९ ] "*रसः सोमः*" [ श० ७। ३। १। ३ ] सोम्यासः सोमसम्पादिनो रससम्पादिनो वसन्तर्तुसम्बन्धिसूर्यरश्मय इत्यर्थः। एवं नात्राङ्गिरआदयो मृतपितरोऽपि तु सन्ति देवा ऋतुयुक्तसूर्यरश्मयः। उक्तं च निरुक्ते 'पितर' इत्याख्यानम्। "*माध्यमिको देवगण इति नैरुक्ताः*" [ निरु० ११। १९ ] रश्मयो देवाः–"*उदिता देवाः सूर्यस्य*" ( तेषां यज्ञियानां सुमतौ भद्रे–अपि सौमनसे वयं स्याम ) "*तेषां यज्ञियानां सुमतौ कल्याण्यां मतौ भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्याम*" [ निरु० ११। १९ ] तेषां पूर्वोक्तानां यज्ञार्हाणां सुमन्तव्ये व्यवहारे भाजनवति कल्याणे मनसि सुखयुक्ते प्रसन्नभावे वर्तेमहि ॥ ६ ॥

भाषान्वयार्थ—( अङ्गिरसः पितरः-नवग्वाः-अथर्वाणः-भृगवः-सोम्यासः-नः ) ग्रीष्म ऋतु सम्बन्धी सूर्यरश्मियां वर्षाऋतु सम्बन्धी सूर्यकिरणें, शरद्तु संबंधी भानुरश्मियां, हेमन्तऋतु संबन्धी दिवाकर किरणें, शिशिरऋतु संबंधी सूर्यरश्मियां, वसंतऋतु संबंधी आदित्य किरणें, हमारे जीवन के लिये हैं ( तेषां यज्ञियानां सुमतौ भद्रे-अपि सौमनसे वयं स्याम ) उन यज्ञयोग्य सूर्यकिरणों के विचारणीय विज्ञान व्यवहार में हम कल्याण मन से सुखयुक्त होकर रहें ॥ ६ ॥

भावार्थ—प्रत्येक ऋतु को स्वानुकुल और सुखमय बनाने के लिए पुष्कल ऋतुयाग करने चाहियें ॥ ६ ॥

**प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः।**
**उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥ ७ ॥**

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । यत्र । नः । पूर्वे । पितरः । पराऽईयुः । उभा । राजाना । स्वधया । मदन्ता । यमम् । पश्यासि । वरुणम् । च । देवम् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( पूर्व्येभिः पथिभिः प्रेहि प्रेहि ) पूर्वोत्पन्नवृहज्जनैः कृतैर्मर्यादितैर्जीवनमार्गैरिष्टापूर्त्तादिभिराचरणैर्हे जीव ! त्वं प्रेहि प्रेहि, जीवनान्तं गच्छ गच्छ पुनः पुनर्गच्छ नित्यं गच्छेत्यर्थः *"नित्यवीप्सयोः" [ अष्टा० ८ । १ । ४ ]* (यत्र नः पूर्वे पितरः परेयुः ) येषु वर्त्तमाना अस्माकं पूर्वे पितरः–पालकजनाः परागता जीवनान्तं प्राप्ताः सन्ति (स्वधया मदन्ता-उभा राजाना यमं वरुणं च देवं पश्यासि) उदकेन त्वां मादयन्तौ तर्पयन्तौ *"हर वैवस्वतोदकम्"* [ कठो० १ । ७ ] इति चोक्तम् । 'मदन्ता–इत्यत्रान्तर्गतो णिजर्थः' *"स्वधा–उदकनाम"* [ निघं० १ । १२ ] उभा राजानोभौ राजमानौ महत्सत्ताकौ सर्वत्र व्याप्तौ, यमम्–यमनशीलं सर्वान् पदार्थान् स्वायत्तीकर्तारमन्तकालं तथा वरुणं जन्मनोऽधिष्ठातृदेवं नूतनोत्पादनाय सर्वपदार्थवरणशीलमाकाशे वर्तमानं मेघस्थं सूक्ष्मजलं देवं पश्यासि–पश्येः *"लिङर्थे लेट्"* [ अष्टा० ३ । ४ । ७ ] *"आपो यच्च वृत्वाऽतिष्ठंस्तद्वरणोऽभवत्तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण"* [ गोपथ १ । ७ ] ॥ ७ ॥

**भाषान्वयार्थ**—( पूर्व्येभिः पथिभिः प्रेहि प्रेहि ) पूर्वोत्पन्न बड़े लोगों के बनाये मर्यादित किये हुए जीवनयात्रा सम्बन्धी इष्टापूर्त्त आदि आचरणरूप मार्गों से हे जीव ! तू जीवनान्त को पुनः पुनः या नित्य प्राप्त कर ( यत्र नः पूर्वे पितरः परेयुः ) जिन मार्गों में वर्त्तमान हुए हमारे पालक जन जीवनान्त आयु की पूर्णता को प्राप्त हुए हैं ( स्वधया मदन्ता-उभा राजाना यमं वरुणं च देवं पश्यासि ) जल के द्वारा तुझे संतुष्ट करते हुए दोनों राजमान बड़ी सत्ता वाले सर्वत्र व्याप्त सब पदार्थों को स्ववश करने वाले अन्तकारी काल तथा जन्म के अधिष्ठाता नूतन उत्पत्ति के लिये सब को वरने वाले आकाश में वर्तमान सूक्ष्म जलरूप वरुणदेव को तू देख । यह एक आन्तरिक विचाररूप उपदेश है ॥ ७ ॥

**भावार्थ**—जीव का आयु को पूर्ण करके मृत्युरूप अन्तकाल और फिर पुनर्जन्म के लिये मेघ के सूक्ष्म जल रूप वरुण का प्राप्त करना अनिवार्य है । अतः जीवन की अस्थिरता को ध्यान में रखते हुए उत्तम कर्ममार्गों पर चलना चाहिये ॥ ७ ॥

**सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।**
**हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ ८ ॥**

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टापूर्तेन । परमे । विऽओमन् । हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि । सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥ ८ ॥

**संस्कृतान्वयार्थः**—( परमे व्योमन् पितृभिः सङ्गच्छस्व यमेन-इष्टपूर्तेन सम् ) हृदयाकाशे वर्तमानस्त्वं हे जीव ! प्राणैः सह सङ्गतो भव पुनर्जन्मप्राप्तय इत्यर्थः *"यो वेद निहितं गुहायां परमे व्योमन्"* [ तैत्ति० उप० २ । १ । १ ] *"व्योमन्यात्मा प्रतिष्ठितः"* [ मुण्डको० २ । २ । ७ ] तत्रैव च यमेन जीवनकालेन सह सङ्गतो भव । इष्टापूर्तेनानुष्ठितेन यज्ञादिशुभकर्मरूपेण धर्मेण सह सङ्गतो भव *"एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः"* [ मनु० ८ । १७ ] इति चोक्तम् ( अवद्यं हित्वाय पुनः-अस्तम्-एहि सुवर्चाः-तन्वा सङ्गच्छस्व ) गर्ह्यमिदं शरीरं त्यक्त्वा पुनरस्तम्-पुनर्गृहं पुनर्योनिं पुनर्जन्मेत्यर्थः *"अस्तं गृहनाम"* [ नि० ३ । ४ ] एहि प्राप्नुहि । तत्र च पुनर्जन्मनि सुन्दरेण शरीरेण सह सङ्गतो भव । 'सुवर्चाः' इत्यत्र "सुपां सु···" [ अष्टा ७ । १ । ३६ ] इति तृतीयास्थाने सुप्रत्ययः ॥ ८ ॥

**भाषान्वयार्थ**—( परमे व्योमन् पितृभिः संगच्छस्व यमेन-इष्टापूर्तेन सम् ) हृदयाकाश में वर्तमान हुए हे जीव ! तू प्राणों के साथ सङ्गत हो जा और वहीं जीवनकाल के साथ भी सङ्गत हो । इष्टापूर्त यज्ञादि रूप सञ्चित किये धर्मधन के साथ सङ्गति कर जो तेरा सच्चा मित्र है और मरने पर साथ जाता है ( अवद्यं हित्वाय पुनः-अस्तम्-एहि सुवर्चाः-तन्वा सङ्गच्छस्व ) गर्ह्य अर्थात् म्रियमाण या मरणधर्मी शरीर को छोड़कर पुनर्जन्म को प्राप्त हो और उस पुनर्जन्म में सुन्दर शरीर के साथ युक्त हो जा ॥ ८ ॥

**भावार्थ**—प्रत्येक जीव वर्तमान देहपात के अनन्तर पुनः प्राणों और जीवनकाल से सङ्गत होता है और कर्मों के अनुसार पुनः नूतन नाड़ी आदि से युक्त शरीर को धारण करता है ॥ ८ ॥

**अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।**
**अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥**

अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतम् । पितरः । लोकम् । अक्रन् । अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः । ददाति । अवऽसानम् । अस्मै ॥ ९ ॥

**संस्कृतान्वयार्थः**—( पितरः-अस्मै-एतं लोकम्-अक्रन् ) ये पितरः सूर्यरश्मयोऽस्माच्छरीराज्जीवं नीत्वास्मा एतं लोकमिमं पृथिवीलोकं पुनर्जन्मार्थं कुर्वन्ति *"छन्दसि लुङ्लङ्लिटः"* [ अष्टा० ३ । ४ । ६ ] सामान्यकाले लुङ् । *"सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु । तस्मै युज्यन्तामुस्रियाः"* [ यजु० ३५ । २ ] ( अतः-अपेत वीत विसर्पत च )अस्मात् स्थानात्तेऽपगच्छन्तु वियन्तु विसर्पन्तु, 'अत्र सर्वत्र पुरुषव्यत्ययः' । अस्माच्छरीराज्जीवमादाय सूर्यरश्मयः क्रमेण पृथिव्यामपगच्छन्ति प्रसरन्ति अन्तरिक्षे वियन्ति विस्तरेण गच्छन्ति, दिवि विसर्पन्ति सौक्ष्म्येन सर्पन्तीति सिद्धान्तितम् । यतो हि सूर्यस्त्रिधा स्वरश्मीन् प्रेरयति । उक्तं च वेदे—*"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्"* [ ऋ० १ । २२ । १७ ] तथा च निरुक्तमत्र *"यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति"* [ निरु० १२ । १९ ] ( यमः-अस्मै-अहोभिः-अद्भिः-अक्तुभिः-व्यक्तम्-अवसानं ददाति ) यमो विश्वकालोऽस्मै जीवायाहर्गणेन, उषोगणेन,

रात्रिगणेनार्थात्कतिपयैरहरुषोरात्रिभिः प्रकटीकृतं विरामं ददाति पृथिव्यन्तरिक्षद्युस्थान-गमनक्रमैः पुनर्जन्मप्राप्तये स्थिरीकरोतीत्यर्थः *"तिस्रो रात्रीर्यदवात्सीर्गृहे मे"* [ कठो० ] इति चोक्तम् ॥ ९ ॥

भाषान्वयार्थ—( पितरः-अस्मै-एतं लोकम्-अक्रन् ) जो ये सूर्य की रश्मियां हैं इस जीव के लिये इस पृथिवी लोक को पुनर्जन्मार्थ तैयार करती हैं ( अतः-अपेत वीत विसर्पत च ) अत एव इस स्थान से वे सूर्य की किरणें जीव को साथ लेकर अपगमन, विगमन और विसर्पण करती हैं अर्थात् प्रथम पृथिवी पर फैलती हैं पश्चात् ऊपर अन्तरिक्ष में पक्षी के तुल्य उड़ती हुई विस्तृत हो ले जाती हैं पुनः द्युलोक में अति सूक्ष्मता से पहुंचती हैं ( यमः-अस्मै अहोभिः-अद्भिः-अक्तुभिः-व्यक्तम्-अवसानं ददाति ) सूर्य इस जीव के लिये अहर्गण—उषोगण—रात्रिगण से अर्थात् कुछ दिनों उषाओं और रात्रियों से प्रकटीभूत विराम को देता है। जैसे कठोपनिषद् में यम के यहां जीवात्मा के तीन दिन रात के रहने की चर्चा है जो कि पृथिवी—अन्तरिक्ष—द्युस्थान के गमन—क्रम से संबंध रखता है, इस प्रकार पुनर्जन्म प्राप्ति के लिये स्थिर करता है ॥ ९ ॥

भावार्थ—शरीरपात हो जाने के पश्चात् जीव सूर्य की पृथिवी सम्बन्धी रश्मियों को प्राप्त होता है पुनः अन्तरिक्ष सम्बन्धी किरणों को और पश्चात् द्युस्थान सम्बन्धी रश्मियों तक पहुंचता हैं एवं स्थूल शरीर के बिना ही कुछ दिन, उषा और रात्रियों तक विराम में रहकर पुनर्जन्म में आता है ॥ ९ ॥

**अति॑ द्रव सारमे॒यौ श्वानौ॑ चतुर॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था ।**
**अथा॑ पि॒तॄन्त्सु॑वि॒दत्राँ॒ उपे॑हि य॒मेन॒ ये स॑ध॒मादं॒ मद॑न्ति ॥ १० ॥**

अति॑ । द्र॒व । सा॒र॒मे॒यौ । श्वानौ॑ । च॒तुः॒ऽअ॒क्षौ । श॒बलौ॑ । सा॒धुना॑ । प॒था । अथ॑ । पि॒तॄन् । सु॒ऽवि॒दत्रा॑न् । उप॑ । इ॒हि । य॒मेन॑ । ये । स॒ध॒ऽमाद॑म् । मद॑न्ति ॥ १० ॥

संस्कृतान्वयार्थः—( साधुना पथा चतुरक्षौ शबलौ सारमेयौ श्वानौ अतिद्रव ) हे जीव ! त्वं धर्म्येण मार्गेण चतुष्प्रहरकौ चित्रवर्णौ सारमेयौ-सरमाया उषायाः पुत्रावहोरात्रौ, 'सरमेति शब्दो मध्यस्थानदेवताप्रकरणे पदनामसु निघण्टौ पठितत्वान्निरुक्ते च सरमा सरणादिति व्याख्यातत्वातददितिशब्देन साकं वर्णनाच्च सरमा शब्दस्यार्थं उषाऽत्र गृह्यते। सूर्यचन्द्रप्रकाशाभ्यां चित्रवर्णावहोरात्रौ शबलावत्रोच्येते। शबलावहोरात्रावित्यत्र प्रमाणम्—*"श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरक्षी श्वानौ। अर्वाङेहि मा विदीध्यो मात्र तिष्ठः पराङ् मनाः"* [ अथ० ८। १। ९ ] प्रकृते दशममन्त्रे 'श्वानौ' एकादशे च 'पथिरक्षी' एवं द्वावपि शब्दौ पथिरक्षी श्वानौ, अथर्ववेद-स्यैकस्मिन्नेव मन्त्रे पठितौ स्तः। तन्मन्त्रे च यत् कौषीतकिब्राह्मणवचनं तदत्र प्रमाणमुद्धियते *"अहर्वै शबलो रात्रिः श्यामः"* [ कौ० २। ९ ] इति प्रामाण्यादृङ्-मन्त्रोक्तशबलौ पथिरक्षी श्वानावहोरात्राविति सिद्धम्। तावहोरात्रौ हे जीव ! त्वमतिद्रव सम्यक् प्राप्तो भव ( अथ सुविदत्रान् पितॄन्-उपेहि ये यमेन सधमादं मदन्ति ) अथानन्तरं हे जीव; सुशोभनान् कल्याणसम्पादकान् पालकान्–ऋतुसह-

चरितान् सूर्यरश्मीनुपेह्युपागच्छ, ये पितरो रश्मयो यमेन-कालेन सहयोगं भजन्ते ॥ १० ॥

भाषान्वयार्थ—( साधुना पथा चतुरक्षौ शबलौ सारमेयौ श्वानौ अतिद्रव ) हे जीव ! तू उचित मार्ग से चार प्रहररूप चार आँखों वाले, सूर्य तथा चन्द्र प्रकाश से चित्र रंगयुक्त उषा-पुत्रों-दिन और रात को समीचीन रूप से प्राप्त हो ( अथ सुविदत्रान् पितॄन्-उपेहि ये यमेन सधमादं मदन्ति ) इसके पश्चात् कल्याणसम्पादक ऋतुसहचरित सूर्य की रश्मियों को प्राप्त कर जो समय के साथ सदा सहयोग रखती हैं ॥ १० ॥

भावार्थ—देहान्त के पश्चात् जीव शीघ्र-शीघ्र दिन रातों को सूर्य रश्मियों द्वारा पुनर्जन्मार्थ प्राप्त होता है ॥ १० ॥

**यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।**
**ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥११॥**

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ । ताभ्याम् । एनम् । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥ ११ ॥

संस्कृतान्वयार्थः—( यम ते यौ रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ श्वानौ ) हे यम ! तव यौ रक्षकौ चतुष्प्रहरकौ पथिरक्षी-मार्गपालौ, नृचक्षसौ-नृणां मनुष्याणां द्रष्टारौ, श्वानौ-श्वानाविव पृष्ठगामिनावहोरात्रौ स्तः ( ताभ्याम्-एनं परिदेहि ) ताभ्यामहोरात्राभ्यामेनमेतं जीवं परिदेहि पुनर्जन्मार्थं समर्पय ( राजन्-अस्मै स्वस्ति च-अनमीवं च धेहि ) हे राजन् ! अस्मै जीवाय स्वस्ति च नैरोग्यं च धेहि-सम्पादय ॥ ११ ॥

भाषान्वयार्थ—( यम ते यौ रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ श्वानौ ) हे समय ! तेरे जो रक्षक चारप्रहररूप चार आंखों वाले मार्गपाल प्राणियों के सदा दर्शक श्वान तुल्य प्रत्येक जीव के पीछे-पीछे चलने वाले दिन और रात हैं ( ताभ्याम्-एनं परिदेहि ) उन दिन रातों के साथ इस जीव को पुनर्जन्म के लिये छोड़ ( राजन्-अस्मै स्वस्ति च-अनमीवं च धेहि ) हे राजन् ! इस जीव के लिये सत्तारूप स्वस्ति और नीरोगता का सम्पादन कर ॥ ११ ॥

भावार्थ—जीव का जीवन समय समाप्त हो जाने पर फिर से नया जीवन मिलता है जो कि शुद्ध और स्वस्थ होकर दिनरात के साथ पुनर्वहन करता है ॥ ११ ॥

**उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।**
**तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ॥**

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ । चरतः । जनान् । अनु । तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः । दाताम् । असुम् । अद्य । इह । भद्रम् ॥ १२ ॥

**संस्कृतान्वयार्थः**—( यमस्य दूतौ उरूणसौ-असुतृपौ-उदुम्बलौ जनान्-अनु चरतः) यमस्य दूतौ महाकुटिलौ [ णस् कौटिल्ये भ्वादि० ] ततोऽच्¹,असुतृपौ–प्राणैस्तृप्यन्तौ, इत्यालङ्कारिकत्वम्, उरुबलौ महाबलौ जनान्–जायमानानुत्पद्यमानाननु चरतो गतिं कुरुतः ( तौ सूर्याय दृशये-अद्य-इह-अस्मभ्यं भद्रम्-असुं पुनः-दाताम् ) तावहोरात्रौ सूर्याय दृशये पुनः पुनः सूर्यं दर्शयितुमद्येहास्मिन् लोकेऽस्मभ्यं सुखकरं प्राणं परजन्म धारयितुं पुनर्दत्तः ॥ १२ ॥

भाषान्वयार्थ—( यमस्य दूतौ-उरूणसौ-असुतृपौ-उदुम्बलौ जनान्-अनु चरतः ) वे दिन और रात काल के दूत बने हुए बड़े कुटिल कठोर स्वभाव के, प्राणों से तृप्त होने वाले महाबली (यह आलङ्कारिक कथन है) उत्पन्न हुए सभी जीवों में साथ–साथ चलते हैं ( तौ सूर्याय दृशये-अद्य-इह-अस्मभ्यं भद्रम्-असुं पुनः-दाताम् ) वे दिन और रात बारम्बार सूर्यदर्शन के लिये आज इस लोक में हमारे लिये सुखदायक जीवन धारण करने को दूसरा जन्म फिर देवें ॥ १२ ॥

भावार्थ—दिन और रात आयुरूप जीवनकाल के दूत बन कर बारम्बार सूर्यदर्शन कराते हुए जीव को अन्तिम काल तक ले जाते हैं एवं पुनर्जन्म भी धारण कराते हैं ॥ १२ ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः । यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १३ ॥

**संस्कृतान्वयार्थः**—( यमाय सोमं सुनुत ) आयुरूपाय जीवनकालाय विश्वकालाय च तत्सौष्ठ्यसम्पादनायेत्यर्थः, सोममोषधिरसं निःसारयत ( यमाय हविः-जुहुत ) यमाय पूर्वोक्ताय हविः-होत्रं कुरुत ( अग्निदूतः-अरङ्कृतः-यज्ञः-यमं ह गच्छति ) अग्निर्दूतो यस्य स एवमलङ्कृतःसम्यक्कृतो यज्ञः कालं गच्छति ॥ १३ ॥

भाषान्वयाथ—( यमाय सोमं सुनुत ) समय को अनुकूल बनाने के लिये ओषधि रस निकालना चाहिए पुनः ( यमाय हविः-जुहुत ) उस ओषधि रस की हवि–आहुति अग्नि में होम करो ( अग्निदूतः-अरङ्कृतः यज्ञः-यमं ह गच्छति ) अग्निदूत के द्वारा यह सम्पादित यज्ञ काल को प्राप्त हो जाता है ॥ १३ ॥

भावार्थ—आयुर्वेदिक ढंग से ओषधिरस का होम जीवन को चिरकालीन बनाने का हेतु है ॥ १३ ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत । सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥ १४ ॥

संस्कृतान्वयार्थः—( यमाय घृतवत्-हविः-जुहोत प्रतिष्ठत च ) यमाय पूर्वोक्ताय जीवनकालाय विश्वकालाय वा तत्सौष्ठ्यसम्पादनायेत्यर्थः। घृतयुक्तं हवनं जुहोत कुरुत प्रतिष्ठत च तत्र प्रकृष्टतां च प्राप्नुत ( सः-नः-जीवसे देवेषु दीर्घम् आयुः प्रायमत् ) सोऽस्माकं जीवनाय देवेष्विन्द्रियेषु दीर्घस्थायित्वं विस्तारयति ॥ १४॥

भाषान्वयार्थ—( यमाय घृतवत्-हविः-जुहोत प्रतिष्ठत च ) पूर्वोक्त जीवनकाल और विश्वकाल को अनुकूल बनाने के लिए घृतसहित ओषधिरस रूप हवि आदि का होम करो और जीवन की उच्चता को प्राप्त होओ ( सः-नः-जीवसे देवेषु दीर्घम्-आयुः प्रायमत् ) एवं वह काल हमारे अधिक और उत्तम जीवन के लिये हमारी इन्द्रियों में दीर्घजीवन का विस्तार करे ॥ १४ ॥

भावार्थ—हव्य वस्तुओं में घृत मिलाकर या घृत के साथ हवन करने से इन्द्रिय-शक्तियां चिरस्थायी रहती हैं ॥ १४ ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन । इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ।

संस्कृतान्वयार्थः—( यमाय राज्ञे मधुमत्तमं हव्यं जुहोतन ) पूर्वोक्ताय सर्वत्र राजमानाय कालाय मधुमत्तमं मधुररसयुक्तं होतव्यं वस्तु जुहुत ( पथिकृद्भ्यः पूर्वजेभ्यः पूर्वेभ्यः-ऋषिभ्यः-इदं नमः) धर्ममार्ग-सम्पादकेभ्यः पूर्वजापेक्षया पूर्वेभ्यः प्राक्तनेभ्य ऋषिभ्य इदं मन्त्रत्रयोक्तं सोमघृतमधुमिश्रं हविष्प्रदानं नम्रत्वं शिष्टाचारोऽस्तु, अस्तीत्यर्थः 'आम्राश्च सिक्ताः पितारश्च प्रीणिताः' इतिवत् ॥ १५ ॥

भाषान्वयार्थ—( यमाय राज्ञे मधुमत्तमं हव्यं जुहोतन ) पूर्वोक्त सर्वत्र राजमान समय को अनुकूल बनाने के लिए मधु या मिष्ट से युक्त हवि का होम करना चाहिये ( पथिकृद्भ्यः पूर्वजेभ्यः पूर्वेभ्यः-ऋषिभ्यः-इदं नमः) धर्म-मार्ग सम्पादन करने वाले पूर्वजों की अपेक्षा भी जो पूर्व ऋषि हो चुके हैं उनके लिये यह तीन मन्त्रों में कहा हुआ सोम घृत मधु-सहित हवि का होमरूप कर्म नम्रतारूप या शिष्टाचाररूप हो ॥ १५ ॥

भावार्थ—समय को उपयोगी बनाने के लिये मधु या मिष्ट वस्तु से युक्त हवि का होम करना चाहिये। इस प्रकार सोमादि ओषधि का रस घृत और मधु से मिश्रित हवियों का हवन करना आदि उत्तम कर्म पुराने ऋषियों के लिये शिष्टाचार का अनुष्ठान भी समझना चाहिये ॥ १५ ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद् बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् । त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥ १६ ॥

**संस्कृतान्वयार्थः**—( एकम्-इत्-बृहत् त्रिकद्रुकेभिः-षट्उर्वीः पतति ) एक एव स्वाभाविकः स्वातन्त्र्येण विराजमानः कालः त्रिकद्रुकेभिः-भूतवर्तमानभविष्यन्नामकैस्त्रिचक्रैः षडुर्वीः-भूमिरूपानृतून् प्राप्नोति *"उर्वी पृथिवीनाम* [ *निरु०* १ । १ ] कद्रुकं चक्रम् *"कद् वैकल्ये"* [ *भ्वादिः* ] एतस्मादौणादिको रुः प्रत्ययस्ततश्च कः ( त्रिष्टुप् ) द्युलोकः *"त्रिष्टुबसौ द्यौः"* [ श० १ । ७ । २ । १५ ] ( गायत्री ) पृथिवीलोकः । *"या वै सा गायत्र्यासीदियं वै सा पृथिवी"* [ श० १ । ४ । १ । ३४ ] ( ता सर्वा छन्दांसि ) ताः सर्वा दिशोऽन्तरिक्षलोक इत्यर्थः *"छन्दांसि वै दिशः"* [ श० ८ । ३ । १ । १२ ] ( यमे ) काले विश्वकाले ( आहिता ) वर्तन्ते ॥ १६ ॥

**भाषान्वयार्थ**—( एकम्-इत्-बृहत् त्रिकद्रुकेभिः-षट् उर्वीः पतति ) स्वभाव तथा निज स्वतन्त्रता में किसी की अपेक्षा न करने वाला एक अकेला काल 'भूत वर्तमान भविष्यत्' इन तीन कालचक्रों से ऋतु रूप छः भूमियों को प्राप्त होता है ( त्रिष्टुब् गायत्री ता सर्वा छन्दांसि यमे-आहिता ) द्यावापृथिवी और सारी दिशायें अर्थात् अन्तरिक्ष काल के अन्दर ही रखे हुए हैं ॥ १६ ॥

**भावार्थ**—काल 'भूत वर्तमान भविष्यत्' रूप तीन चक्रों द्वारा छः ऋतुओं में विभक्त हो जाता है । न केवल प्राणियों के लिये ही यह काल यमन करने वाला है अपितु पृथिवी, अन्तरिक्ष और द्यौ एवं तीनों लोकों अर्थात् सम्पूर्ण भुवन समय के नियन्त्रण में रहता है अत एव समय का परिज्ञान और उस से उचित लाभ उठाना चाहिये ॥ १६ ॥



# पञ्चदशं सूक्तम्

ऋषिः—शंखो यामायनः ।

देवताः— पितरः ।

छन्दः—१, २, ७, १२-१४ विराट् त्रिष्टुप् । ३, ९, १० त्रिष्टुप् । ४, ८ पादनिचृत् त्रिष्टुप् । ६ निचृत् त्रिष्टुप् । ५ आर्ची भुरिक् त्रिष्टुप् । ११ निचृज्जगती ।

स्वरः—१-१०, १२-१४ धैवतः । ११ निषादः ।

## वक्तव्य

इस सूक्त के प्रथम मन्त्र की व्याख्या निरुक्त में की गई है जो नीचे मन्त्रभाष्य में उद्धृत है। उसमें निरुक्तकार ने आधिदैविक विषय को दर्शाया है। तथा *"तस्मान्माध्यमिकान् पितॄन् मन्यन्ते"* [ *निरु० ११ । १८* ] इस निरुक्तवचन से भी विशेष स्पष्टीकरण हो जाता है। सम्पूर्ण सूक्त के देवता पितर हैं। और इसमें मुख्यरूपेण यज्ञप्रक्रिया का विधान है जिसमें दो प्रकार के पितर उपयुक्त होते हैं। एक जड़ पितर सूर्य की रश्मियां, दूसरे चेतन पितर ज्ञानी लोग। लोकप्रत्यक्ष भी यही है। यज्ञ का उत्तम उपयोग बिना सूर्यकिरणों और ज्ञानी पुरुषों के नहीं हो सकता, अत एव सूर्योदय के पश्चात् से सूर्यास्त से पूर्व–पूर्व यज्ञ करने का याज्ञिक सिद्धान्त है। तथा ब्रह्मा, अध्वर्यु, उद्गाता, होता आदि ज्ञानी जनों के द्वारा यज्ञ करने का आदेश भी है। अत एव इस सूक्त में संक्षेप से यज्ञप्रक्रियाविज्ञान है। साथ–साथ पितृपरिचय, ज्ञानीजनों का यज्ञ में कर्त्तव्य और सूर्यरश्मियों का उपयोगविज्ञान दर्शाया है। यज्ञ के तीन सवन, पृथिवीभ्रमण से अहोरात्रवृत में सूर्यरश्मियों के मुख्यस्थान या केन्द्र, यज्ञ के योग से किरणों का पोषक और वलदायक बनना, बुद्धि का विकसित करना, उदित, तृप्त और शान्त रश्मियों का वर्तन, उत्तरायण और दक्षिणायन में सूर्यरश्मियों का यज्ञ में लाभ और यज्ञाहुति का रश्मियों द्वारा प्रसार, ज्ञानी जनों के द्वारा यज्ञ का सेवन और उनका सत्कार, निज सन्देहों या प्रश्नों का उनसे समाधान तथा उपदेश प्राप्त करना आदि–आदि उपयोगी बातों का वर्णन है—

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥

उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः । सोम्यासः । असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ १ ॥

**संस्कृतान्वयार्थः**—( उदीरताम्-अवरे-उत्-परासः-उत्मध्यमाःपितरः सोम्यासः) *"उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पादिनस्ते"* [ निरु० ११ । १८ ] अवरे प्रातःसवनीयाः सोमसम्पादिन उत्पद्यमानेषु रससम्पादिनः सूर्यरश्मयो रसयुक्तान् पदार्थानुदीरतामुन्नयन्तु मध्यमा माध्यन्दिनसवनीयाः पूर्ववद्रससम्पादिनो रविकिरणा उदीरताम्-उन्नयन्तु तानेव पदार्थान् । परे वर्तमानास्तृतीयसवनिकाः सूर्यरश्मय उदीरतामुन्नयन्तु तानेव । एवं त्रीणि सवनानि यज्ञस्य भवन्ति तत्सम्बद्धाः सर्वे हि सूर्यरश्मय उन्नयन्तु ( असुं ये-ईयुः-अवृकाः-ऋतज्ञाः-ते नः-पितरः-हवेषु-अवन्तु ) "असुं ये *प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो हवेषु"* [ निरु० ११ । १८ ] ये पितरः सूर्यरश्मयोऽसुं प्राणं प्राणवन्तं जीवमात्रमीयुः प्राप्ताः सन्ति तेऽवृका अनमित्रा अस्माभिः सह संश्लिष्टा ऋतज्ञा यज्ञज्ञा वा यज्ञस्य ज्ञानसाधकाः । 'कृतो बहुलमित्यपि करणे कः' अस्माकं ज्ञानेषु विचारस्पर्द्धासून्नेतुमागच्छन्तु-आगच्छन्ति ॥ १ ॥

**भाषान्वयार्थ**—( अवरे पितरः सोम्यासः-उदीरताम्-उत्-मध्यमाः- उत्-परासः ) उत्पन्न हुए जगत् पदार्थों में रस को सम्पादन करने वाली प्रातःसवनीय सूर्यरश्मियां उन जगत्पदार्थों को उन्नत करती हैं एवं मध्यसवन और तृतीय सवन की रश्मियां भी उनको उन्नत करती हैं, जब कि यज्ञ से संयुक्त हुई रश्मियां फैलती हैं ( ये-असुम्-ईयुः-अवृकाः-ऋतज्ञाः-ते पितरः नः- हवेषु-अवन्तु ) और वे सूर्यरश्मियां जीवमात्र में सङ्गत होती हैं अतएव हम से संश्लिष्ट होकर यज्ञ के उपयुक्त ज्ञान की साधक बन हमारे आन्तरिक विकासों में उन्नति के लिए प्राप्त होती हैं ॥ १ ॥

**भावार्थ**—यज्ञ के योग से सूर्य की रश्मियां जड़ चेतन प्राणीमात्र के जीवनरस को उन्नत करने वाली बनती हैं। अत एव यज्ञ के उपयोग-ज्ञान से उन रश्मियों को अपने जीवन के लिये उन्नायक बनावें ॥ १ ॥

**इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।**
**ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ २ ॥**

इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः । ये । पार्थिवे । रजसि । आ । निऽसत्ताः । ये । वा । नूनम् । सुऽवृजनासु । विक्षु ॥ २ ॥

**संस्कृतान्वयार्थः**—( पितृभ्यः-इदं नमः-अस्तु ) सूर्यरश्मिभ्य इदं नमोऽयं यज्ञोऽस्तु । *"यज्ञो वै नमः"* [ श० २ । ४ । २ । २४ ] कतमेभ्यः ? ( अद्य ये पूर्वासः-ये-उपरासः-ईयुः-ये-पार्थिवे रजसि-आ निषत्ता ये वा नूनं सुवृजनासु विक्षु ) अद्यास्मिन्दिनेऽद्यतने ये पूर्वदिशासम्बन्धिनः सूर्यरश्मय ईयुः प्राप्ताः सन्ति ये-उपरासः-पश्चिमदिशामीयुः प्रतिगताः सूर्यरश्मयो ये पार्थिवे रजसि-पृथिवीलोके पृथिवीतले वा सम्प्रविष्टा रश्मयः । *"लोका रजांस्युच्यन्ते"* [ निरु० ४ । १६ ] ये वा सुवृजनासु सुस्पष्टं निर्मलं वृजनमन्तरिक्षमाकाशं

यासां तासु-अन्तरिक्षवासिनीषु विक्षु प्रजासु समन्तात्प्रविष्टाः सन्ति तेभ्यः सूर्यरश्मिभ्यः पूर्वोक्तो यज्ञोऽस्तु *"वृजनमन्तरिक्षम्"* [ *उणादि० दयानन्दः* ] ॥ २ ॥

भाषान्वयार्थ—( पितृभ्यः-इदं नमः-अस्तु ) सूर्यरश्मियों के लिए यज्ञ हो ( अद्य ये पूर्वासः-ये-उपरासः-ईयुः- ये पार्थिवे रजसि आ निषत्ता ये वा नूनं सुवृजनासु विक्षु) आज जो पूर्वदिशा सम्बन्धी सूर्य रश्मियां प्राप्त होती हैं तथा जो पश्चिम दिशा में वर्तमान हैं या जो किरणें पृथिवी के अन्दर और जो आकाश में रहने वाले लोकों या प्राणीवर्ग में वर्तमान हैं उन सभी किरणों को उपयोगी बनाने के लिये यज्ञ है ॥ २ ॥

भावार्थ—सूर्य के पूर्व पश्चिम रूप उदयास्त मार्ग से प्राप्त किरणों तथा पृथिवी के अन्दर पार्थिव वस्तुओं और आकाशस्थ पदार्थों को प्राप्त रश्मियों को यज्ञक्रिया से उपयोगी बनाना चाहिये ॥ २ ॥

आहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ३ ॥

आ । अहम् । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातम् । च । विऽक्रमणम् । च । विष्णोः । बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥ ३ ॥

संस्कृतान्वयार्थः—( अहं सुविदत्रान् पितॄन्-आ-अवित्सिवि ष्णोः-नपातं विक्रमणं च) अहं कल्याणविद्यान् पालकजनान् तथा विष्णोर्यज्ञस्य स्थिरत्वं व्याप्तित्वं विक्रमणं चान्तरिक्षे सञ्चारविशेषं चावित्सि–आस्मरामि मनसि धारयामि *"यज्ञो वै विष्णुः"* [*श० १३-।१।८।८*] अवित्सि 'विद् विचारणे' लुङि रूपम् । (ये बर्हिषदः सुतस्य पित्वः स्वधया भजन्त ते-इह-आगमिष्ठाः ) ये बर्हिषदो यज्ञासने सीदन्ति ते सुतस्य सम्पादितस्य पक्वस्य पित्वोऽन्नस्य *"पितुरन्ननाम"* [ *नि० २।७* ] स्वधया स्वधारणया स्वेच्छया भजन्त भजत सेवेध्वम्, 'अत्र नकारोपजनश्छान्दसः' । अत एव यूयमत्रागमिष्ठाः-आगच्छत । स्वधा-स्वधारणास्वं दधातिस्वधा *"आतोऽनुपसर्गे कः* [ *अष्टा० ३।२।३* ] स्त्रियां स्वधा ॥ ३ ॥

भाषान्वयार्थ—( अहं सुविदत्रान् पितॄन्-आ-अवित्सि विष्णोः-नपातं विक्रमणं च ) मैं शुभ विद्या सम्पन्न पालक जनों, विद्वानों तथा यज्ञ की प्रसाररूप व्याप्ति को भली प्रकार जानता हूं ( ये बर्हिषदः सुतस्य पित्वः स्वधया भजन्त ते-इह आगमिष्ठाः ) इस यज्ञावसर पर तुम सब विद्वानो ! शुभासन पर विराजित हुए स्वेच्छा से भोजन खाओ, अतएव यहां आकर विराजो ॥ ३ ॥

भावार्थ—यज्ञक्रिया का फल बहुत दूर तक व्यापता है । और उस यज्ञ का अनुष्ठान परिचित शुभविद्यासम्पन्न विद्वानों के द्वारा करना चाहिये । पुनः उन विद्वानों को उनकी इच्छानुसार भोजन खिलाना चाहिये ॥ ३ ॥

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥ ४ ॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् । ते । आ । गत । अवसा । शम्ऽतमेन । अथ । नः । शम् । योः । अरपः । दधात ॥ ४ ॥

संस्कृतान्वयार्थः—( बर्हिषदः पितरः-ऊती-अर्वाक्-वः-इमा हव्या-चकृम जुषध्वम् ) यज्ञासन उपविष्टा ऊती-ऊत्यै-अस्मद्रक्षायै "सुपां सुपो भवन्ति" [ अष्टा० ७ । १ । ३९ वार्तिकम् ] विभक्तिव्यत्ययः । अत्र यज्ञे युष्मभ्यमिमानि हव्यानि कुर्मः सम्पादयामः सज्जीकुर्मो यूयं जुषध्वमग्नौ प्रक्षेपार्थं प्रयुङ्ध्वम् ( ते शंतमेन-अवसा-आगत नः-अरपः शंयोः-दधात ) ते यूयं विद्वांसः सुखमयेन रक्षणेन सदैव प्राप्नुत, अस्मभ्यं पापरहितं भावं रोगाणां शमनं यावनं च भयानां धारयत, तथा च निरुक्तम् [ ४ । ११ ] ॥ ४ ॥

भाषान्वयार्थ—( बर्हिषदः पितरः-ऊती-अर्वाक्-वः-इमा हव्या-चकृम जुषध्वम् ) यज्ञासन पर बैठे हुए हे विद्वानो ! हम अपनी रक्षा के लिये तुम्हारे वास्ते होम की वस्तुओं को तैयार करते हैं इनको तुम अग्नि में डालकर काम में लाओ ( ते शंतमेन-अवसा-आगत नः-अरपः शंयोः-दधात ) वे तुम विद्वानो ! सुखमय रक्षण के कारण सदा प्राप्त हुआ करो और हमारे लिये शुद्धभाव, रोगनिवृत्ति और भय के दूरीकरण का उपाय करते रहो ॥ ४ ॥

भावार्थ—यज्ञ में विद्वानों को निमन्त्रित करके उनसे अपनी रोगनिवृत्ति और आपत्तियों से बचने के लिये कुछ न कुछ ज्ञान प्राप्त करना चाहिये ॥ ४ ॥

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥

उपऽहूताः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु । ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ५ ॥

संस्कृतान्वयार्थः—( बर्हिष्येषु प्रियेषु निधिषु-उपहूताः सोम्यासः पितरः ) यज्ञसम्बन्धिषु स्वानुकूलेषु दक्षिणारूपगवादिधनेषु निमन्त्रिताः सोमसम्पादिनः सोमवन्तः सोमौषधिरससम्पादनादिक्रियाकुशलाः ज्ञानिजनाः सन्ति *"तद्ये सोमेनेजानास्ते पितरः सोमवन्तः"* [ श० २ । ६ । १ । ७ ] ( ते-आगमन्तु ते-इह श्रुवन्तु ते-अधि ब्रुवन्तु ते-अस्मान् अवन्तु ) पूर्वोक्तास्ते विद्वांस इहात्रागच्छन्तु श्रुवन्त्वस्मत्प्रश्नान् शृण्वन्त्वधि ब्रुवन्तु पश्चादुपदिशन्त्वित्थं श्रवणोपदेशाभ्यामस्मान् रक्षन्तु ॥ ५ ॥

भाषान्वयार्थ—( बर्हिष्येषु प्रियेषु निधिषु-उपहूताः सोम्यासः पितरः ) यज्ञसम्बन्धी स्वानुकूल दक्षिणारूप गौ आदि धनों के निमित्त निमन्त्रित जो सोमवान् सोमौषधिरस सम्पादन आदि क्रिया में कुशल विद्वान् ज्ञानिजन हैं ( ते-आगमन्तु ते-इह श्रुवन्तु ते-अधि ब्रुवन्तु-ते-अस्मान्-अवन्तु ) वे विद्वान् यहां आवें, हमारे प्रश्नों को सुनें उपदेश दें या समाधान करें इस प्रकार श्रवण और उपदेश से हमारी रक्षा करें ॥ ५ ॥

भावार्थ—यज्ञ में क्रियाकुशल विद्वानों को निमन्त्रित करना तथा उनसे अपने विविध प्रश्नों का समाधान और उपदेश सुनना चाहिये और सत्कारार्थ इच्छानुकूल गौ आदि पदार्थ दक्षिणा में देने चाहियें ॥ ५ ॥

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥

आऽअच्य । जानु । दक्षिणतः । निऽसद्य । इमम् । यज्ञम् । अभि । गृणीत । विश्वे । मा । हिंसिष्ट । पितरः । केन । चित् । नः । यत् । वः । आगः । पुरुषता । कराम ॥ ६ ॥

संस्कृतान्वयार्थः—( पितरः-जानु-आच्य विश्वे दक्षिणतः-निषद्य-इमं यज्ञम्-अभिगृणीत ) हे पितरो विद्वांस उभे जानुनी प्रसार्यासनं विधायेत्यर्थः । जानु "सुपां सुलुक्पूर्वसवर्णा०" [ अष्टा० ७ । १ । ३९ ] अनेन द्विवचनप्रत्ययस्य लुक् । यूयं सर्वे दक्षिणायां दिशि दक्षिणपार्श्वे वा निषद्य स्थित्वेमं यज्ञं स्वीकुरुत 'विदुषां वामपार्श्वे स्थेयमिति शिष्टाचारः । ब्रह्मासनं च दक्षिणायां कल्प्यते' । ( यद्-वः-आगः पुरुषता कराम केनचित्-नः-मा हिंसिष्ट ) यद्वो युष्माकमपराधं सत्कारे दक्षिणायां वा पुरुषतया कराम कुर्मः । अत्र सामान्ये काले लोट् शप् च विकरणव्यत्ययेन । केनचिदप्यपराधेनास्मान् मा हिंस्थेति वयं जानीमः ॥ ६ ॥

भाषान्वयार्थ—( पितरः-जानु-आच्य विश्वे दक्षिणतः-निषद्य इमं यज्ञम्-अभिगृणीत ) हे विद्वान् लोगो ! दोनों जानुओं को आसन की विधि से फैलाकार तुम सब दक्षिण दिशा या दक्षिण भाग में बैठकर इस यज्ञ को स्वीकार करो क्योंकि विद्वानों के वामपार्श्व में बैठने का शिष्टाचार है अथवा यज्ञ में ब्रह्मा का आसन दक्षिण में होता है ( यद्-वः-आगः पुरुषता कराम केनचित्-नः-मा हिंसिष्ट ) और जो तुम्हारे प्रति हम कोई शिष्टाचार या दक्षिणा आदि में मनुष्य होने से गलती करें तो उस किसी भी गलती के कारण तुम लोग हिंसा नहीं करते हो यह हम जानते हैं ॥ ६ ॥

भावार्थ—विद्वानों को दक्षिणभाग में आसन पर बिठलाकर यज्ञ का आरम्भ करना चाहिये । अपनी भूल के सम्भव होने से उनसे नम्रता पूर्वक गलती को स्वीकार करना चाहिये ॥ ६ ॥

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ७ ॥

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे । मर्त्याय । पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अरुणीनाम्-उपस्थे-आसीनासः पितरः- दाशुषे मर्त्याय रयिं धत्त तस्य पुत्रेभ्यः-वस्वः प्रयच्छत ते-इह-ऊर्जम् दधात ) *"अरुण्यो गाव उषसाम्"* [ *निघं०* २ । २८ ] इति प्रामाण्यात् । अरुणीनामुषोऽन्तर्गतप्रकाशधाराणामुपस्थ उपस्थाने-उपरिभागे संलग्नाः संस्थिताः सूर्यरश्मयो यजमानाय मनुष्याय रयिम्-वीर्यं बलमित्यर्थः *"वीर्यं वै रयिः"* [ *श०* १३ . ४ । २ । १३ ] धत्त धारयन्तु । पुरुषव्यत्ययः । तस्य सन्तानेभ्यः प्राणान् प्रयच्छत-प्रयच्छन्तु ददतु । *"प्राणा वाव वसवः"* [ *छान्दो०* ३ । १६ । १ ] पूर्वोक्तास्त उषःकालसम्बद्धाः सूर्यरश्मय इहोभयत्र यजमाने तत्पुत्रेषु चोर्जं रसं दधात धारयन्तु *"ऊर्ग्रसः"* [ *निरु०* ६ । ४३ ] *"ऊर्वै रसः"* [ *श०* ५ । १ । २ । ८ ] अन्यत्रापि वेदेऽरुणी-शब्दस्योषःशब्देन सह सम्बन्धस्तथा पितरः सूर्यरश्मय इति विज्ञानं प्रतीयते *"आवहन्त्यरुणी ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना । प्रबोधयन्ती सुविताय देव्युषा ईयते सुयुजा रथेन"* [ *ऋ०* ४ । १४ । ३ ] *"अधा यथा नः पितरः परासोऽग्न ऋतमाशुषाणाः । शुचीदयन्दीधिति-मुक्थशासः क्षामा भिन्दन्तो अरुणीरपव्रन्"* [ *ऋ०* ४ । २ । १६ ] ॥ ७ ॥

**भाषान्वयार्थ**—( अरुणीनाम्-उपस्थे-आसीनासः पितरः-दाशुषे मर्त्याय रयिं धत्त ) उषा सम्बन्धी प्रकाश धाराओं के उपरिभाग पर संस्थित सूर्यरश्मियां यजमान मनुष्य के लिये बल को धारण कराती हैं ( तस्य पुत्रेभ्यः-वस्वः प्रयच्छत ) और उसके पुत्रों के लिये भी शुद्ध प्राणों का दान करती हैं ( ते-इह-ऊर्जं दधात ) वे सूर्यरश्मियां इस प्रकार दोनों यजमान और उसकी सन्तति में जीवनरस को धारण कराती हैं ॥ ७ ॥

**भावार्थ**—यज्ञ सेवन करने वाले मनुष्य तथा उनकी सन्तति में जीवनरस बल और प्राण-शक्तियों का सूर्य की रश्मियां वास कराती हैं ॥ ७ ॥

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ८ ॥

ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽपीथम् । वसिष्ठाः । तेभिः । यमः । सम्ऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु । ॥ ८ ॥

**संस्कृतान्वयार्थः**—( ये पूर्वे सोम्यासः पितरः सोमपीथं वसिष्ठाः-नः-अनूहिरे) ये पूर्वे प्रातस्तनाः सूर्योदयकालप्रमाणाः सोमसम्पादिनो रससम्पादिनः-वसन्ततु वत्

सूर्यरश्मयः सोमस्य पीथं रसस्य पातारं सूर्यं वसिष्ठाः-वस्तृतमाः-अस्माननूहन्तेऽनुवितर्कयन्ति कार्येषु प्रेरयन्ति *"यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति ते नो एव वसिष्ठाः"* [ श० ८ । १ । १६ ] ( तेभिः-उषद्भिः-संरराणः-यमः-उशन् हवींषि प्रतिकामम्-अत्तु ) तैर्दीप्यमानै रश्मिभिः संरममाणो यमः-सूर्यः *"यमो रश्मिभिरादित्यः"* [ *निरु०* १२ । २६ ] दीप्यमानो हवींष्यग्नौ प्रक्षिप्तानि हव्यानि वस्तूनि-अस्मत्कामनानुसारमत्तु गृह्णातु-गृह्णाति ॥ ८ ॥

**भाषान्वयार्थ**—( ये पूर्वे सोम्यासः पितरः सोमपीथं वसिष्ठाः-नः-अनूहिरे ) जो पूर्वकालीन सूर्योदय के साथ ही उदय होने वाली वसन्त ऋतु के तुल्य रससम्पादन करने वाली किरणें सूर्य का अत्यन्त आश्रय लेने वाली हम को कार्यों में प्रेरित करती हैं ( तेभिः-उषद्भिः-संरराणः-यमः-उशन् हवींषि प्रतिकामम्-अत्तु ) उन देदीप्यमान रश्मियों के साथ सम्यक् रम्यमाण सूर्य तेज से देदीप्यमान होता हुआ अग्नि में डाली हुई हवियों का हमारी इच्छाओं की पूर्ति के लिये ग्रहण करता है ॥ ८ ॥

**भावार्थ**—प्रातःकाल की सूर्यरश्मियां यज्ञ में उपयुक्त हुई-हुई हमारे अन्दर कार्य-कुशलता की प्रेरणा करती हैं और उदयकाल का सूर्य भी हमारी मानस प्रसन्नता और शारीरिक सुखजीवनी का हेतु बनता है ॥ ८ ॥

**ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।**
**आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥ ९ ॥**

ये । ततृषुः । देवऽत्रा । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः । आ । अग्ने । याहि । सुऽविदत्रेभिः । अर्वाङ् । सत्यैः । कव्यैः । पितृऽभिः । घर्मसत्ऽभिः ॥ ९ ॥

**संस्कृतान्वयार्थः**—( ये देवत्रा जेहमानाः-होत्राविदः स्तोमतष्टासः-अर्कैः-तातृषुः ) ये सूर्यरश्मयो देवान् गच्छन्तो देवत्वं द्युस्थानत्वं प्राप्नुवन्तः, *"देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा"* ] *निरु०* ७ । १५ ] होत्राविदः-अङ्गचेतकाः *"होत्रा अङ्गानि"* [ *गोपथ* ३ । ६ । ६ ] स्तोमतष्टासः स्तोमा प्राणास्तष्टाः शोधिता यैस्ते *"प्राणा वै स्तोमाः"* [ श० ८ । ४ । १ । ४ ] अद्भिस्तृष्यन्ति जलमाकर्षितुं पृथिवीं पतन्ति *"आपो वा अर्कः"* [ श० १० । ४ । १ । २३ ] हेतौ तृतीया ( सुविदत्रेभिः-सत्यैः कव्यैः-घर्मसद्भिः पितृभिः-अग्ने-अर्वाङ्-आयाहि ) कल्याणी विद्या येषां तैः सत्यैः सत्सु विद्यमानेषु भवैर्व्याप्तैः कव्यैः-सूर्यान्तर्भवैः *"असौ वा आदित्यः कविः"* [ श० ६ । ७ । २ । ४ ] घर्मसद्भिः-अहःसद्भिर्मध्यमदिनं प्राप्नुवद्भिः *"तप्त इव वै घर्मः"* [ श० १४ । ३ । १ । ३३ ] किरणैः सहाग्ने-आयाह्यत्र यज्ञे वृष्टिनिमित्तमायाहि प्राप्नुहि ॥ ९ ॥

**भाषान्वयार्थ**—( ये देवत्रा जेहमाना:--होत्राविद:-स्तोमतष्टास:-अर्कै:-तातृषुः ) जो सूर्य की किरणें देवत्व को प्राप्त होती हुई तीक्ष्णता के कारण प्राण्यङ्गों में घुसती हुई प्राणों को स्वेदन से संशोधित करती हुई जलों के आकर्षण के लिये तृषित हुई भूमि पर गिरती हैं ( सुविदत्रेभि:-सत्यै: कव्यै:- घर्मसद्भि:-पितृभि:-अग्ने-अर्वाङ्-आयाहि ) उचित विज्ञानलाभ जिनसे हो सकता हो ऐसी उन मध्याह्नगत किरणों के साथ यह अग्नि वृष्टिनिमित्त यज्ञ में प्राप्त होती है ॥ ६ ॥

**भावार्थ**—मध्याह्नकाल में सूर्य की किरणें प्राणियों के अङ्ग-अङ्ग में घुस जाती हैं और प्राणों का शोधन करती हैं । इनका विज्ञान के द्वारा उपयोग होना चाहिये ॥ ६ ॥

**ये सत्यासो॑ हविरदो॑ हविष्पा इन्द्रे॑ण देवैः सरथं॑ दधा॑नाः ।**
**आग्ने॑ याहि सहस्रं॑ देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥ १० ॥**

ये । सत्यासः । हविःऽअदः । हविःऽपाः । इन्द्रे॑ण । देवैः । सऽरथम् । दधा॑नाः । आ । अग्ने । याहि । सहस्रम् । देवऽवन्दैः । परैः । पूर्वैः । पितृऽभिः । घर्मसत्ऽभिः ॥ १० ॥

**संस्कृतान्वयार्थः**—( ये सत्यास:-हविरद:-हविष्पा:-इन्द्रेण देवैः सरथं दधानाः ) ये स्थिराः सर्वत्र व्याप्ता अब्भक्षास्तथोदकपाः सूर्येण देवै:-विद्युद्भिश्च सह समानरमणस्थानं धारयन्तः ( देववन्दैः पूर्वैः परैः-घर्मसद्भिः पितृभि:-अग्ने सहस्रं आ याहि ) देवानां वन्दनसाधनैः पूर्वैः-प्रथमैः प्रातःकालिकैः परैः सायन्तनैश्च घर्मसद्भि:-अहःसद्भिः सूर्यरश्मिभिरग्ने सहस्रं बहुवारं मुहुर्मुहुर्वा याहि प्राप्तो भव ॥ १० ॥

**भाषान्वयार्थ**—( ये सत्यास:-हविरद:-हविष्पा:-इन्द्रेण देवै:-सरथं दधानाः ) जो सर्वत्र व्याप्त जल का भक्षण तथा शोषण करने वाली किरणें सूर्य तथा विद्युत् आदि दिव्य पदार्थों के साथ सहयोग रखती हुई ( देववन्दैः पूर्वैः परैः- घर्मसद्भिः पितृभि:-अग्ने सहस्रं आ याहि ) देववन्दन दिव्यज्ञान की साधनभूत प्रातःकालीन और सायंकालीन रश्मियों के साथ तथा दिन में प्राप्त किरणों के साथ भी हे अग्ने ! तू असंख्यरूपेण बारम्बार प्राप्त हो ॥ १० ॥

**भावार्थ**—जो सूर्य की किरणें जल का भक्षण या शोषण करती हुई हों उनके प्रकाश से किन्हीं दिव्य बातों का परिचय लेना चाहिये ॥ १० ॥

**अग्नि॑ष्वात्ताः पितर॒ एह ग॑च्छत॒ सदः॑सदः सदत सुप्रणीतयः ।**
**अ॒त्ता ह॒वींषि॒ प्रय॑तानि ब॒र्हिष्यथा॑ र॒यिं सर्व॑वीरं दधातन ॥ ११ ॥**

अग्नि॑ऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदः॑ऽसदः । सदत । सुऽप्रनीतयः । अत्त । हवींषि । प्रऽयतानि । बर्हिषि । अथ । रयिम् । सर्वऽवीरम् । दधातन ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अग्निष्वात्ताः पितर:-इह-आगच्छत सुप्रणीतयः सदःसदः सदत ) अग्निर्यैः स्वात्तः सम्यग्गृहीतो यैस्ते पितर:-सूर्यरश्मयः "अग्निष्वात्ता ऋतुभिः

संविदानाः" [तै० २ । ६ । १६ । २] "आयातु मित्र ऋतुभिः कल्पमानः संवेशयन् पृथिवीमुस्रियाभिः" [अथर्व० ३ । ८ । १] इहाऽस्मद् गृहे समन्तात्प्राप्ता भवन्तु, 'पुरुषव्यत्ययः' तथा सुप्रणीतयः सु सम्यक् प्रणीतिः प्रणयनं घृतादिसम्पर्कः सञ्चारो येषां ते सदःसदः प्रतिसदं-प्रतिगृहं सदत गच्छन्तु ( बर्हिषि प्रयतानि हवींषि-आ+अत्त-अध रयिं सर्ववीरं दधातन ) यज्ञे प्रदत्तानि हव्यानि वस्तूनि गृह्णन्तु, अध-अनन्तरं सर्ववीरम्-सर्वे वीरा यस्मात्तत्सर्ववीरं वीर्यं बलमस्मासु धारयन्तु ॥ ११ ॥

भाषान्वयार्थ—( अग्निष्वात्ताः पितरः-इह आगच्छत सुप्रणीतयः सदःसदः सदत ) यज्ञाग्नि को सम्यक् ग्रहण की हुई किरणें इस मण्डल में समन्त रूप से फैलें एवं सुसंचरित होकर घर घर या स्थान-स्थान में भली प्रकार प्राप्त हों ( बर्हिषि प्रयतानि हवींषि-आत्त-अध रयिं सर्ववीरं दधातन ) यज्ञ में दी गई हव्यवस्तुओं को प्राप्त हों पुनः सर्वप्रकार के वीरगुणयुक्त बल को हम में धारण करावें ॥ ११ ॥

भावार्थ—सूर्य की रश्मियां यज्ञ के सम्पर्क से सुगन्ध गुण युक्त होकर यज्ञमण्डल के घर-घर में प्रवेश करती हैं और लाभप्रद होती हैं ॥ ११ ॥

त्वम॑ग्न ईळि॒तो जा॑तवे॒दोऽवा॑ड्ढ॒व्यानि॑ सुर॒भीणि॑ कृ॒त्वी ।
प्रादा॑ः पि॒तृभ्य॑ः स्व॒धया॑ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींषि॑ ॥ १२ ॥

त्वम् । अ॒ग्ने॒ । ई॒ळि॒तः । जा॒त॒ऽवे॒दः॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒र॒भीणि॑ । कृ॒त्वी । प्र । अ॒दा॒ः । पि॒तृऽभ्य॑ः । स्व॒धया॑ । ते । अ॒क्ष॒न् । अ॒द्धि । त्वम् । दे॒व॒ । प्रऽय॑ता । ह॒वींषि॑ ॥ १२ ॥

संस्कृतान्वयार्थः—( जातवेदः-अग्ने त्वम्-ईडितः-हव्यानि सुरभीणि कृत्वी-अवाट् ) हे जातेषु विद्यमानाग्ने ! यज्ञाग्ने ! त्वं यज्ञे-अध्येषितः प्रेरितः सन् हव्यानि वस्तूनि सुगन्धीनि कृत्वी-कृत्वाऽवाड्-ऊढवान् ( देव प्रयता हवींषि त्वम्-अद्धि पितृभ्यः प्रादाः स्वधया ते अक्षन् ) हे अग्निदेव ! दत्तानि हव्यानि वस्तूनि त्वमद्धि-भक्षय सूक्ष्मी-कुरु, सूर्यरश्मिभ्यः प्रादाः-देहि ते च रश्मयः स्वधया स्वधारणशक्त्याऽक्षन् भक्षयन्तु सूक्ष्मीकृत्य प्रसारयन्त्विति यावत् ॥ १२ ॥

भाषान्वयार्थ—( जातवेदः-अग्ने त्वम्-ईडितः-हव्यानि सुरभीणि कृत्वी-अवाट् ) सब उत्पन्न पदार्थों में विद्यमान अग्ने ! तू यज्ञ में प्रेरित प्रज्वलित होकर हव्य वस्तुओं को सुगन्ध वाली बना कर वहन करती है ( देव प्रयता हवींषि-त्वम्-अद्धि पितृभ्यः प्रादाः स्वधया ते-अक्षन् ) हे अग्निदेव ! दी हुई उन हव्य वस्तुओं को खा, अर्थात् सूक्ष्म बना और पुनः सूर्य रश्मियों के सुपुर्द कर वे भी अपनी धारण शक्ति से सूक्ष्म करके सर्वत्र फैला दें ॥ १२ ॥

भावार्थ—अग्नि में हव्य वस्तु अति सुगन्ध को प्राप्त होती है और पुनः अग्नि में सूक्ष्म होकर किरणों के आधार पर और भी सूक्ष्म बन कर फैल जाती है ॥ १२ ॥

ये चेह पितरो ये च नेह यांश्चं विद्म याँ उं च न प्रविद्म।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥ १३ ॥

ये। च। इह। पितरः। ये। च। न। इह। यान्। च। विद्म। यान्। ॐ इति। च। न। प्रऽविद्म। त्वम्। वेत्थ। यति। ते। जातऽवेदः। स्वधाभिः। यज्ञम्। सुऽकृतम्। जुषस्व ॥ १३ ॥

**संस्कृतान्वयार्थः**—( ये च पितरः-इह ये च न-इह यान्-च विद्म यान्-उ च न प्रविद्म ) ये च पितरः सूर्यरश्मय इहात्राऽस्मद्गृहे ये च नेह नात्र याँश्च सूर्यरश्मीन् विद्म वयं जानीमो यान् उ-यानपि न प्रविद्म न जानीमः ( जातवेदः-यति त्वं वेत्थ स्वधाभिः सुकृतं यज्ञं जुषस्व ) हे जातेषु विद्यमानाग्ने ! यति-यावतस्त्वं वेत्थ लब्धवान् तान् सर्वानपि रश्मीन् स्वधाभिः स्वधारणशक्तिभिरिमं सुकृतं सुसम्पादितं यज्ञं प्रापय ॥ १३ ॥

**भाषान्वयार्थ**— ( ये च पितरः-इह ये च न-इह यान् च विद्म यान्-उ च न प्रविद्म ) जो सूर्यरश्मियां इस यज्ञगृह या यज्ञकाल में हैं या जो यहां नहीं हैं तथा जिन किरणों को प्रतिदिन उपयोग द्वारा जानते हैं अथवा जिनको हम नहीं भी जानते हैं ( जातवेदः-यति त्वं वेत्थ स्वधाभिः सुकृतं यज्ञं जुषस्व ) उन सभी को हे अग्निदेव ! तू प्राप्त करता है अतएव उन सब में इस सुसम्पादित हमारे यज्ञ को अपनी धारणशक्तियों से पहुंचा दे ॥ १३ ॥

**भावार्थ**—अग्नि में किया हुआ यज्ञ अपने घर, दूसरे के घर तथा वर्तमान समय और दूसरे समय एवं विज्ञात और अविज्ञात सूर्य की किरणों को प्राप्त होता है ॥ १३ ॥

ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते।
तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्व ॥ १४ ॥

ये। अग्निऽदग्धाः। ये। अनग्निऽदग्धाः। मध्ये। दिवः। स्वधया। मादयन्ते। तेभिः। स्वऽराट्। असुऽनीतिम्। एताम्। यथाऽवशम्। तन्वम्। कल्पयस्व ॥ १४ ॥

**संस्कृतान्वयार्थः**—( ये अग्निदग्धाः-ये-अनग्निदग्धाः-दिवः-मध्ये स्वधया मादयन्ते )ये-अग्निदग्धाः-अग्निर्दग्धो दीपितो यैस्ते ग्रैष्मा उत्तरायणान्ते भवाः सूर्यरश्मयः, *"जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः"* [ अष्टा० ६ । २ । १७० ] इति सूत्रेण बहुव्रीहावन्तोदात्तः, दह धातुर्दीप्तौ *"दहिक् दीप्तौ"* [ कविकल्पद्रुमः ] येऽनग्निदग्धास्तद्विपरीता हैमन्तिका दक्षिणायनान्ते भवाः सूर्यरश्मयस्ते सर्वे दिवोऽन्तरिक्षस्य मध्ये स्वधयोदकेनोदकवृष्ट्या मादयन्ते प्राणिनो जीवयन्ति ( स्वराट् तेभिः-एताम्-असुनीतिं तन्वं यथावशं कल्पयस्व ) स्वराट्-हे प्रकाशमानाग्ने ! तेभिः सूर्यरश्मिभिरेतां तन्वमेतं जीवशरीरमसुनीतिं प्राणसञ्चारस्थानं यथावश्यकं यथायोग्यं समर्थयस्व ॥ १४ ॥

**भाषान्वयार्थ**—( ये-अग्निदग्धाः-ये अनग्निदग्धाः-दिवः मध्ये स्वधया मादयन्ते ) अग्नितेज या ताप जिन किरणों से बढ़ जाता है वे ग्रीष्मकाल अर्थात् उत्तरायण के अन्त की तथा उनसे विपरीत शीतकाल अर्थात् दक्षिणायन के अन्त की सूर्यरश्मियां जो आकाश के मध्य में विचरती हुई जलवृष्टि से प्राणियों को जीवन देती हैं ( स्वराट् तेभिः-एताम्-असुनीतिं तन्वं यथावशं कल्पयस्व ) हे यज्ञ में प्रकाशमानाग्ने ! उन किरणों के द्वारा प्राणसञ्चार के स्थान जीवशरीर को यथायोग्य समर्थ बना ॥ १४ ॥

**भावार्थ**—उत्तरायण और दक्षिणायन के अन्त में होने वाली वर्षा की कारणभूत सूर्यकिरणों को आकाश से सुवृष्टि के लिये यज्ञाग्नि प्रेरित करती है। जिस से जीव शरीर यथायोग्य प्राणशक्ति को धारण कर सकता है ॥ १४ ॥



# षोडशं सूक्तम्

ऋषिः—दमनो यामायनः ।

देवता—अग्निः ।

छन्दः—१,४,७,८ निचृत् त्रिष्टुप् । २,५ विराट् त्रिष्टुप् । ३ भुरिक् त्रिष्टुप् । ६,९ त्रिष्टुप् । १० स्वराट् त्रिष्टुप् । ११ अनुष्टुप् । १२ निचृदनुष्टुप् । १३, १४ विराडनुष्टुप् ॥

स्वरः—१-१० धैवतः । ११-१४ गान्धारः ।

### वक्तव्य

इस सम्पूर्ण सूक्त का देवता अग्नि है । देहान्त हो जाने पर कृत्रिम और सर्वत्र सिद्ध अग्नि, शव का किस प्रकार छेदन भेदन, विभाग करती है तथा अजन्मा जीवात्मा को पुनर्देह धारण करने के लिये योग्य बनाती है । एवं अग्निसंस्कार का औषधतुल्य वर्णन, शवाग्नि परिणाम और उसका घृतादि आहुति से शवदहनगन्धदोषनिवारण द्वारा उपचार, शवाग्नि से दग्ध देशभूमि की प्रतिक्रिया उसका पुनः पूर्व के तुल्य बना देना आदि-आदि प्रतिकार योग्य बातों का वर्णन है । मनुष्य जिन पर ध्यान न देकर और तदनुसार आचरण न करके शवदहन आदि से जनित हानियों के अपराध से नहीं छुट सकता ।

**मैनमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षिपो मा शरीरम् ।**
**यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात्पितृभ्यः ॥ १ ॥**

मा । एनम् । अग्ने । वि । दहः । मा । अभि । शोचः । मा । अस्य । त्वचम् । चिक्षिपः । मा । शरीरम् । यदा । शृतम् । कृणवः । जातऽवेदः । अथ । ईम् । एनम् । प्र । हिणुतात् । पितृऽभ्यः ॥ १ ॥

**संस्कृतान्वयार्थः**—( अग्ने-एनं मा विदहः-मा-अभिशोचः-अस्य त्वचं मा चिक्षिपः मा शरीरम् ) अग्नेऽयमग्निरेनं मृतदेहं मा विदहः-न विदहेद् विदग्धमर्द्धपक्वं न कुर्यात् 'सर्वत्र पुरुषव्यत्ययः' माभिशोचः- नाभिज्वलेत्प्रेतं विहायेतस्तत एव न ज्वलेत् *"शोचतिर्ज्वलतिकर्मा"* [ नि० १ । १७ ] अस्य प्रेतस्य त्वचं मा चिक्षिपः- क्षिपेत् शरीरञ्च न क्षिपेत् । वस्तुतस्तु प्रेतमेवं दहेद्यत् ( जातवेदः यत्-ईम्-एनम्-शृतं कृणवः-अथ पितृभ्यः प्रहिणुतात् ) अग्निर्यदैवेनं मृतदेहं शृतं पक्वं कृणवः कुर्यादथानन्तरं तदैव पितृभ्यः सूर्यरश्मिभ्यः प्रहिणोतु प्रेरयेत् ॥ १ ॥

भाषान्वयार्थ—( अग्ने-एनं मा विदहः-मा-अभिशोचः- अस्य त्वचं मा चिक्षिपः-मा शरीरम्) अग्नि मृतदेह को विदग्ध अधपका न करे, न शव से अलग ही इधर–उधर जलकर अग्नि रह जावे और न इसके त्वचा या शरीर को फेंके। वास्तव में प्रेत को इस प्रकार जलावे कि ( जातवेदः-यत्-ईम्-एनं शृतं कृण्वः-अथ पितृभ्यः प्रहिणुतात् ) अग्नि जब इस मृत शरीर को पकादे तो फिर इस मृत शरीर को सूर्यरश्मियों के प्रति पहुंचा दे ॥ १ ॥

भावार्थ—शवदहन के लिये इतना इन्धन होना चाहिये कि जिससे शव कच्चा न रह जावे और बहुत इन्धन होने पर भी अग्नि इधर–उधर चारों तरफ जलकर ही न रह जावे–इसके लिये ठोस इन्धन का प्रयोग करना चाहिये तथा अङ्ग–अङ्ग चटक–चटक कर इधर–उधर न उड़ जावें या गिर जावें ऐसे न चटकाने वाले इन्धन से शव को जलाना चाहिये। जिससे अग्नि के द्वारा शव सूक्ष्म होकर सूर्य किरणों में प्राप्त हो सके ॥ १ ॥

शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः ॥
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥ २ ॥

शृतम् । यदा । करसि । जातऽवेदः । अथ । ईम् । एनम् । परि । दत्तात् । पितृऽभ्यः । यदा । गच्छाति । असुऽनीतिम् । एताम् । अथ । देवानाम् । वशऽनीः भवाति ॥ २ ॥

संस्कृतान्वयार्थः—( जातवेदः-यत्-एमेनं शृतं करसि-अथ पितृभ्यः परिदत्तात् ) जातवेदोऽग्निर्यदा-ईम्-एनं यदैवैनं मृतदेहं शृतं पक्वं करोति, अथानन्तरं तदैव सूर्यरश्मिभ्यः परिददाति समर्पयति ( यत्-एताम्-असुनीतिं गच्छति-अथा देवानां वशनीः-भवाति ) यस्मिन् काले-एतां मरणस्थितिं गच्छेदनन्तरं तदाप्रभृति देवानां पृथिव्यप्तेजो-वाय्वादीनां वशपात्रं वश्यं भवाति–भवेत् *"लिङर्थे लेट्"* [ अष्टा० ३ । ४ । ७ ] ॥ २ ॥

भाषान्वयार्थ—( जातवेदः-यदा-ईम्-एनं शृतं करसि-अथ पितृभ्यः परिदत्तात् ) अग्नि जिस समय इस मृत शरीर को पका देती है तब ही इस को सूर्यरश्मियों के सुपुर्द कर देती है ( यत्-एताम्-असुनीतिं गच्छति-अथा देवानां वशनी-भवाति ) जिस समय यह जीवशरीर मरण-स्थिति को प्राप्त हो चुकता है तभी से यह पृथिवी, जल, अग्नि, वायु आदि देवों का वश्य हो जाता है ॥ २ ॥

भावार्थ—आत्मा के वियुक्त होते ही यह शरीर पृथिवी आदि भूतों में मिलने लगता है। अग्नि में जलने से सूर्य की रश्मियां इस का उक्त छेदन भेदन जल्दी कर देती हैं ॥ २ ॥

सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा ।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥ ३ ॥

सूर्यम् । चक्षुः । गच्छतु । वातम् । आत्मा । द्याम् । च । गच्छ । पृथिवीम् । च । धर्मणा । अपः । वा । गच्छ । यदि । तत्र । ते । हितम् । ओषधीषु । प्रति । तिष्ठ । शरीरैः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( चक्षुः सूर्यं गच्छतु-आत्मा वातं द्यां च पृथिवीं च धर्मणा गच्छ ) चक्षुः-नेत्रं नेत्रप्रकाशः सूर्यम्-सूर्यप्रकाशं गच्छतु प्राप्नोतु, जीवो वातं जीवाधारं वायुं वाय्वालयं यमालयमन्तरिक्षं प्राप्नोतु । 'एष वाय्वालय एव यमालयः' *"यमेन वायुना"* इति प्रामाण्यात् । द्युलोकं प्रकाशयुक्तलोकं वा पृथिवीलोकं वा धर्मणा-स्वकृतकर्मणा गच्छ ( अपः-वा गच्छ यदि तत्र ते हितम् ) जलमयं लोकं वा गच्छ यदि तत्र ते-तव हितं पथ्यं कर्मफलं स्यात् ( शरीरैः-ओषधीषु प्रतितिष्ठ ) शरीरधारणमात्रधर्मैरोषधीषु प्रतितिष्ठ गमनाभावेन स्थिरत्वं जडत्वं प्राप्नुहि यदि तत्र ते कर्मफलं स्यात् ॥ ३ ॥

**भाषान्वयार्थ**—( चक्षुः सूर्यं गच्छतु-आत्मा वातं द्यां च पृथिवीं च धर्मणा गच्छ ) नेत्रप्रकाश सूर्यप्रकाश को प्राप्त हो, जीवात्मा वायुमय अन्तरिक्ष को एवं पुनः प्रकाश युक्त लोक को या पृथिवीलोक को अपने किये कर्म से प्राप्त हो ( अपः-वा गच्छ यदि तत्र ते हितम् ) जलमय लोक को जा यदि तेरा वहां कर्मफल हो ( शरीरैः-ओषधीषु प्रतितिष्ठ ) शरीरधारणमात्र गुणों से ओषधियों में गमनाभावरूप स्थावरत्व जड़त्व को प्राप्त हो यदि वहां तेरा कर्मफल हो ॥ ३ ॥

**भावार्थ**—देहपात के अनन्तर देह तो अपने-अपने कारण पदार्थों में लीन हो जाता है और जीव स्वकर्मानुसार प्रकाशमय, जलमय, पृथिवीमय लोकों तथा वृक्षादि की जड़ योनियों तक प्राप्त होता है ॥ ३ ॥

**अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।**
**यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ४ ॥**

अजः । भागः । तपसा । तम् । तपस्व । तम् । ते । शोचिः । तपतु । तम् । ते । अर्चिः । याः । ते । शिवाः । तन्वः । जातऽवेदः । ताभिः । वह । एनम् । सुऽकृताम् । ऊँ इति । लोकम् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( जातवेदः-अजः-भागः-तं तपसा तपस्व तं ते शोचिः-तपतु तं ते-अर्चिः) हे सर्वत्रविराजमानाग्ने ! अग्निर्वा यो ऽ यमजन्मा जीवस्तं ज्वलनेन पृथिवीस्थेन तेजसा तपसोर्ध्वं प्रेरय प्रेरयति वा । तं ते शोचिर्ज्वलनमन्तरिक्षस्थं तपतूर्ध्वं प्रेरयतु, तं तेऽर्चिर्द्युस्थानं ज्वलनं तपतूर्ध्वं प्रेरयतु । *"तपः, शोचिः, अर्चिः, ज्वलतो नामधेयानि"* [ निघ० १ । १७ ] ( याः-ते शिवाः-तन्वः-ताभिः एनं सुकृताम्-उ-लोके वह ) याः कल्याणकारिण्यस्तन्वः प्रसरणशीलास्तैजसधारास्ताभिरेनं जीवं पुण्यकृतामुलोकं स्थानं नय ॥ ४ ॥

**भाषान्वयार्थ**—( जातवेदः-अजः-भागः-तं तपसा तपस्व तं ते शोचिः-तपतु तं ते-अर्चिः ) सर्वत्र विराजमान यह अग्नितत्त्व इस अजन्मा जीव को अपने पार्थिव ज्वलन धर्म से ऊपर प्रेरणा

करता है तथा इस अग्नि का अन्तरिक्षस्थ तेज उसी जीव को ऊपर की ओर प्रेरित करता है और द्युस्थान रश्मितेज भी और आगे बढाता है ( याः-ते शिवाः-तन्वः-ताभिः-एनं सुकृताम्-उ-लोके वह ) जो कल्याणकारी फैलने वाली तैजस धारायें हैं उनके द्वारा अग्नि इस जीव को पुण्य शुद्ध जन्म की ओर ले जाता है ॥ ४ ॥

भावार्थ— देहान्त के साथ ही अग्नितत्त्व जो सब जगह तेजोरूप से वर्तमान है वह पृथिवी, अन्तरिक्ष और द्युस्थान के क्रम से ले जाता है ॥ ४ ॥

अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥ ५ ॥

अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः । ते । आऽहुतः । चरति । स्वधाभिः ।
आयुः । वसानः । उप । वेतु । शेषः । सम् । गच्छताम् । तन्वा । जातऽवेदः ॥ ५ ॥

संस्कृतान्वयार्थः—( अग्ने यः-ते-आहुतः-चरति पितृभ्यः स्वधाभिः पुनः-अवसृज) हे अग्ने यस्त आहुतः-आत्तो गृहीतश्चरति तं सूर्यरश्मिभ्य उदकैः सह पुनः पृथक् कुरु ( जातवेदः शेषः-आयुः-वसानः-उपवेतु तन्वा सङ्गच्छताम् ) हे सर्वत्र विद्यमानाग्ने ! शिष्यतेऽसाविति शेषो जीवात्मा शरीरेण सङ्गतो भवतु ॥ ५ ॥

भाषान्वयार्थ—( अग्ने यः-ते-आहुतः-चरति पितृभ्यः स्वधाभिः पुनः-अवसृज ) हे अग्ने ! जो तेरे अन्दर आश्रित हुआ विराजता है उसको सूर्यरश्मियों के लिये जलों के द्वारा फिर छोड़ ( जातवेदः-शेषः-आयुः-वसानः-उपवेतु तन्वा सङ्गच्छताम् ) हे सर्वत्र विद्यमान अग्ने ! विनाशी पदार्थों के नष्ट हो जाने पर शेष रहने वाला जीवात्मा शरीर के साथ संगत हो जावे अर्थात् पुनर्जन्म को धारण करे, इस प्रकार कार्य में सहायक बन ॥ ५ ॥

भावार्थ—देहान्त के पश्चात् मृत पुरुष के दो परिणाम अग्नि द्वारा होते हैं । एक शवाग्नि से शवदहन होकर उसके सूक्ष्म कण सूर्यरश्मियों को प्राप्त होते हैं । दूसरे सर्वत्र विद्यमान सूक्ष्माग्नि तेज देहान्त के साथ ही जीव को पुनर्जन्म में जाने के लिये प्रेरक बनता है ॥ ५ ॥

यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ ६ ॥

यत् । ते । कृष्णः । शकुनः । आऽतुतोद । पिपीलः । सर्पः । उत । वा । श्वापदः ।
अग्निः । तत् । विश्वऽअत् । अगदम् । कृणोतु । सोमः । च । यः । ब्राह्मणान् ।
आऽविवेश ॥ ६ ॥

संस्कृतान्वयार्थः—(यत्-ते कृष्णः-शकुनः पिपीलः-सर्प -उत वा श्वापदः-आतुतोद) बहुविज्ञानोऽयं मन्त्रस्तत्रेह प्रथमः प्रकारः । हे जीव ! अत्र सांसारकजीवनयात्रायां कृष्णः

शकुनो गृध्रः पिपीलः पिपीलिका सर्पं उत वा श्वापदो हिंस्रपशुस्ते यदङ्गमातुतोद-आतुदति पीडयति। सामान्ये काले लिट् [ अष्टा० ३।४।६ ] ( विश्वात्-अग्निः-तत्-अगदं कृणोतु सोमः-च यः-ब्राह्मणान्-आविवेश ) सर्वभक्षकोऽग्निस्तदङ्गमगदं करोतु-करोति सोमरसो यो ब्राह्मणान् ब्रह्मविदो योगिनो जनान्-आविशति प्राप्नोति। ब्रह्म जानातीति ब्राह्मणः। तथा च-*"येन केनचिदाछन्नो येन केन चिदाशितः। यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः॥ विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम्। अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः" [ महाभारते ]* ॥ ६ ॥

**भाषान्वयार्थ**—( यत्-ते कृष्णः शकुनः पिपीलः सर्पः-उत वा श्वापदः-आतुतोद ) हे जीव इस सांसारिक जीवनयात्रा में गृध्र आदि पक्षी, पिपीलिका आदि कृमि, सर्पादिविषमय प्राणी अथवा व्याघ्रादि हिंसक पशु जिस-जिस अङ्ग को पीड़ित वा विकृत करते हैं ( विश्वात्-अग्निः-तत्-अगदं कृणोतु सोमः-च यः-ब्राह्मणान्-आविवेश ) उस-उस अङ्ग को विश्वभक्षक अग्नि और ब्रह्मवेत्ताओं को प्राप्त हुआ साम स्वस्थ कर देता है ॥ ६ ॥

**भावार्थ**—अग्नि और सोम विश्वभैषज और सर्वभयनिवारक पदार्थ हैं। यह एक आयुर्वेदिक और रक्षाविज्ञान का सिद्धान्त वर्णित है। मनुष्य-जीवन में भयानक पक्षी, कृमि, सर्प और व्याघ्रादि प्राणियों से प्राप्त भय और पीड़ा का निवारण अग्नि और सोम से करना चाहिये। तथा उक्त जन्तुओं से आक्रमित मरे हुये मनुष्य का अग्नि और सोम द्वारा शव दहन करने से रोगसंक्रामक कारणों का प्रतिकार हो जाता है। क्योंकि ऐसा किये बिना अन्य प्राणी उनके विषसम्पर्क आदि से बच न सकेंगे ॥ ६ ॥

**अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च।**
**नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ॥ ७ ॥**

अग्नेः। वर्म। परि। गोभिः। व्ययस्व। सम्। प्र। ऊर्णुष्व। पीवसा। मेदसा। च। न। इत्। त्वा। धृष्णुः। हरसा। जर्हृषाणः। दधृक्। विऽधक्ष्यन्। परिऽअङ्खयाते ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अग्नेः-वर्म गोभिः परि व्ययस्व पीवसा मेदसा च सम्प्रोर्णुष्व ) अग्नेर्वर्म गृहमग्निस्थानं वेदिम् *"वर्मेति गृहनाम" [ नि० ३।४ ]* इन्द्रियैर्नाडीभिर्वाऽयं प्रेतः परितो गच्छेत्सर्वतः प्राप्नुयात् पुरुषव्यत्ययः *"व्यय गतौ"* [ भ्वादिः ] तथा पीवसा मांसेन मेदसा वपया च तामेव ज्वलन्तीं वेदिं सम्यक् प्रोर्णुष्व प्रसरेत्। कुतः ? ( धृष्णुः-जर्हृषाणः-दधृक्-विधक्ष्यन्-नेत्त्वा पर्यङ्खयाते ) प्रसह्यकारी 'प्रसहनार्थस्य चौरादिकस्य धृष् धातोः *"त्रसिगृधिधृषिक्षिपेः क्नुः" [ अष्टा० ३।२।१४० ]* इत्यनेन क्नुः। जर्हृषाणो ऽतिशयेन वस्तुमात्रमलीकं कर्त्तुं शक्तिर्यस्य सः *"हृषु-अलीके" [ भ्वादिः ]* तस्मात् *"ताच्छील्यवयोवचनशक्तिषु चानश्" [ अष्टा० ३।२।१२९ ]* इति शक्त्यर्थे चानश् प्रत्ययः *"अभ्यस्तानामादिः" [ अष्टा० ६।१।१८९ ]* इत्याद्युदात्तः। दधक प्रगल्भोऽतिदृढ एषो

ऽग्निः। "धृष् प्रागल्भ्ये" [स्वादिः] "ऋत्विग्दधृक्...." [अष्टा० ३।२।५९] त्वां तं प्रेतं विधक्ष्यन् विशेषं दग्धं करिष्यन्-नेत्-नोचेत्। पर्यङ्ख्याते-पर्यङ्ख्येत् परिक्षिपेदितस्ततः पातयेत् "उपसंवादाशङ्कयोश्च" [अष्टा० ३।४।८] इत्याशङ्कायां लेट् प्रत्ययः॥ ७॥

भाषान्वयार्थ— ( अग्नेः-वर्म गोभिः परिव्ययस्व पीवसा मेदसा च सम्प्रोर्णुष्व ) अग्नि के घर अर्थात् चिता को इन्द्रियों और नाड़ियों सहित यह प्रेत भली प्रकार प्राप्त होवे और मांस मेदः-चर्बी द्वारा जलती हुई शववेदि अर्थात् चिता को सम्यक् पूर्णता से प्राप्त हो, क्योंकि ( धृष्णुः-जर्हृषाणः-दधृक्-विधक्ष्यन् नेत्त्वा पर्यङ्ख्याते ) प्रसह्यकारी अतिशय से वस्तुमात्र को अकिञ्चित् करने वाली अग्नि उस प्रेत को विशेषरूपेण जलाती हुई शवाङ्गों को इधर-उधर न फेंक दे॥ ७॥

भावार्थ—शवदहनवेदि का परिमाण इतना होना चाहिये कि मृत शरीर सुगमता से पूरा आजावे और उसके प्रत्येक नसनाड़ी, मांस, चर्बी आदि अंशों में अग्नि का प्रवेश भली प्रकार हो सके। शवदहन करने वालों को यह ध्यान रखना चाहिये कि चिता में अग्नि इस प्रकार जलाई जावे कि वह अतितीक्ष्ण और बलवान् होकर विपरीतता से जलाती हुई शवाङ्गों को इधर-उधर न फेंक दे॥ ७॥

इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम्।
एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ते॥ ८॥

इमम्। अग्ने। चमसम्। मा। वि। जिह्वरः। प्रियः। देवानाम्। उत। सोम्यानाम्। एषः। यः। चमसः। देवऽपानः। तस्मिन्। देवाः। अमृताः। मादयन्ते॥ ८॥

संस्कृतान्वयार्थः—( अग्ने-इमं चमसं मा विजिह्वरः ) हे अग्ने इमं घृतचमसं हव्यचमसञ्च यत् क्षिप्यते जनैरन्त्येष्टिकर्मणि त्वयि ज्वलति तं मा न विचालय नेतस्ततः प्रक्षिप (देवानाम्-उत सोम्यानां प्रियः) देवानां द्योतमानानां सूर्यरश्मीनाम् "देवो दानाद्वा.... द्योतनाद्वा" [निरु० ७।१५] उदिता देवाः सूर्यस्य" इत्युक्तं च पूर्वम्। उत सोम्यानां सोमे चन्द्रमसि भवानां ज्योत्स्नावाचिनां शान्तानां चन्द्रदीधितीनां प्रियोऽनुकूल उपयोग-साधनमित्यर्थः। सोमश्चन्द्रमाः "सोमं मन्येत पपिवान्....सोमश्चन्द्रमाः" [निरु० ११।४-५] ( एषः-यः-चमसः-देवपानः-तस्मिन् देवाः-अमृताः-मादयन्ते ) एष यः पूर्वोक्तश्चमसो देवपानोऽस्ति यतो देवानां हविष्पानसाधनमस्मिंश्च घृतचमसे हव्यचमसे देवाः सूर्यरश्मयोऽमृता मृतं मरणं न येभ्यस्तेऽमृताः सन्तः "नञो जरमरमित्रमृताः" [अष्टा० ६।२।११६] इत्यनेन बहुव्रीहिसमासे उत्तरपदमाद्युदात्तम्। मादयन्ते-हर्षयन्ति सुखयन्ति॥ ८॥

भाषान्वयार्थ—( अग्ने-इमं चमसं मा विजिह्वरः ) हे अग्ने इस घृत और सुगन्ध हव्य के चमस को जो कि तेरे अन्दर आहुतिरूप में डाला जाता है उसको विचलित न कर अर्थात्

उपयोगिता के लिये स्वीकार कर ( देवानाम्-उत सोम्यानां प्रियः ) वही यह चमस द्योतमान सूर्यरश्मियों और चन्द्रज्योत्स्नाधाराओं का प्रिय अर्थात् उपयोगी अनुकूल साधन हो ( एषः-यः-चमसः-देवपानः-तस्मिन् देवाः-अमृताः-मादयन्ते ) पूर्वोक्त यह चमस देवों के पान का साधन हो क्योंकि देव इसकी हवि का पान करते हैं और इसी घृतहव्ययुक्त चमस में सूर्यरश्मियां अपने अमृतधर्म से विराजमान होकर मनुष्यों को आनन्द प्रदान करती हैं ।। ८ ।।

भावार्थ—शवगन्ध के प्रतिकारार्थ अन्त्येष्टि कर्म के समय अग्नि में घृत और सुगन्ध पदार्थों की आहुतियां देनी चाहियें । वे आहुतियां शवदोष का सम्पर्क हटाकर सूर्य तथा चन्द्रमा की किरणों को अनुकूलता की साधक बनाती हैं विशेषतः सूर्यरश्मियों को सुखकारक बनाती हैं ।। ८ ।।

क्रव्यादम॒ग्निं प्र हि॑णोमि दू॒रं य॒मरा॑ज्ञो गच्छतु रिप्रवा॒हः ।
इ॒हैवायमित॑रो जा॒तवे॑दा दे॒वेभ्यो॑ ह॒व्यं व॑हतु प्रजा॒नन् ॥ ९ ॥

क्र॒व्य॒ऽअद॑म् । अ॒ग्निम् । प्र । हि॒णो॒मि । दू॒रम् । य॒मऽरा॑ज्ञः । ग॒च्छ॒तु । रि॒प्र॒ऽवा॒हः । इ॒ह । ए॒व । अ॒यम् । इत॑रः । जा॒तऽवे॑दाः । दे॒वेभ्यः॑ । ह॒व्यम् । व॒ह॒तु । प्र॒ऽजा॒नन् ॥ ९ ॥

संस्कृतान्वयार्थः—( क्रव्यादम् अग्नि दूरं प्रहिणोमि ) शवरूप-मांसभक्षक-अग्नि पूर्वमन्त्रोक्तचमसाहुतिभिर्दूरमतिदूरं प्रहिणोमि प्रेरयामि प्रक्षिपामि ( रिप्रवाहः-यमराज्ञः-गच्छतु ) रिप्रवाहः-शवरूपामेध्यवाहकोऽग्निः "तद्यदमेध्यं रिप्रं तत् [ श० ३ । १ । २ । ११ ] यमराज्ञो यमो यमनशीलः कालोऽन्तकारी कालो मृत्यू राजा येषां तान् मृत्युराजकदेशान् गच्छतु-गच्छति, यतो हि मृतः प्राणी मृत्युदेशान् विनाशप्रदेशान् गच्छति तस्मात्तं शीघ्रं विनाशप्रदेशान् नेतुं शववाहनोऽग्निरपि तान् प्रदेशान् शीघ्रं गच्छतीत्युक्तम् ( अयम्-इतरः-जातवेदाः-प्रजानन् देवेभ्यः-हव्यं वहतु ) अयं चमसाहुतिलक्षितो जातवेदा अग्निर्ज्वलन् सन् दिव्यपदार्थेभ्यो जीवनलाभायैतच्चमसप्रक्षिप्तं हव्यं प्रापयतु ।। ९ ।।

भाषान्वयार्थ—( क्रव्यादम्-अग्नि दूरं प्रहिणोमि ) शवरूप मांस-भक्षक अग्नि को सुगन्ध आहुतिचमस द्वारा दूर हटाता हूं ( रिप्रवाहः-यमराज्ञः-गच्छतु ) वह शववाहक अग्नि पृथिवीतल से ऊपर उठकर विनाश प्रदेशों को जहां कि प्रत्येक वस्तु विच्छिन्न अतिसूक्ष्म होकर लीन हो जाती है उन अन्तरिक्षस्थानों को प्राप्त हो ( अयम्-इतरः-जातवेदाः प्रजानन् देवेभ्यः-हव्यं वहतु ) चमसाहुतिओं द्वारा हव्यवाहक यह प्रसिद्धाग्नि जलती हुई दिव्य पदार्थों के लिये जीवनलाभ के हेतु उस चमसरूप हव्य का वहन करे ।। ९ ।।

भावार्थ—घृत और सुगन्ध कपूर आदि वस्तुओं की आहुति से शवदुर्गन्धवाहक अग्नि-ज्वालाओं की शान्ति हो जाती है और सुगन्धित हव्य प्रसारक अग्निज्वालाओं का उदय होता है ।। ९ ।।

यो अ॒ग्निः क्र॒व्यात्प्र॑वि॒वेश॑ वो गृ॒हमि॒मं पश्य॒न्नित॑रं जा॒तवे॑दसम् ।
तं ह॑रामि पितृय॒ज्ञाय॑ दे॒वं स घ॒र्ममि॑न्वात्पर॒मे स॒धस्थे॑ ॥ १० ॥

यः । अ॒ग्निः । क्र॒व्यऽअत् । प्र॒ऽवि॒वेश॑ । वः॒ । गृ॒हम् । इ॒मम् । पश्य॑न् । इत॑रम् । जा॒तऽवे॑दसम् । तम् । ह॒रा॒मि । पि॒तृ॒ऽय॒ज्ञाय॑ । दे॒वम् ॥ सः । घ॒र्मम् । इ॒न्वा॒त् । प॒र॒मे । स॒धस्थे॑ ॥ १० ॥

**संस्कृतान्वयार्थः**—(यः क्रव्यात्-अग्निः-वः-गृहं प्रविवेश-इमम्-इतरं जातवेदसं पश्यन्) हे प्रेतहाराः ! यः शवाग्निर्युष्माकं शरीरं प्रविष्टवान्, अहमिममितरं हव्यवाहं जातवेदसं पश्यन् लक्ष्यीकुर्वन् प्रयुञ्जानः ( तं देवं हरामि पितृयज्ञाय-सः-घर्मम्-इन्वात् परमे सधस्थे ) तं देवमग्निं हरामि पृथक्करोमि पितृयज्ञाय-प्राणयज्ञाय युष्माकं प्राणपरिशोधनाय प्राणधारणायेत्यर्थः *"प्राणो वै पिता"* [ ऐ० २ । ३८ ] स क्रव्यादग्निः परमे सधस्थे-उच्च-व्योम्नि घर्मं सूर्यं व्याप्नोतु *"असौ वै घर्मो यो ऽसौ सूर्यः तपति* [ कौ० २ । १ ] *"इवि व्याप्तौ"* [ भ्वादिः ] ततो लेट् ॥ १० ॥

**भाषान्वयार्थ**—( यः क्रव्यात्-अग्निः-वः-गृहं प्रविवेश ) हे प्रेतहारो ! जो शवदहनाग्नि तुम्हारे शरीर में प्रविष्ट हुई है ( इमम्-इतरं जातवेदसं पश्यन् ) मैं इस दूसरी अग्नि को प्रयुक्त करता हुआ—होमाहुति द्वारा सम्पादन करता हुआ ( तं देवं हरामि पितृयज्ञाय ) उस क्रव्याद् शवगन्धाग्नि को पृथक् करता हूँ जिससे आपका प्राणसञ्चार सुखमय हो सके ( सः-परमे सधस्थे घर्मम्-इन्वात् ) वह शवगन्धाग्नि ऊपर आकाश सूर्य को लक्ष्य करके व्याप्त हो जावे ॥ १० ॥

**भावार्थ**—चिताग्नि में दी हुई होमाहुति प्रेतहारों के भीतर घुसी शवगन्धाग्नि के सम्पर्क को हटाती है जिससे उनके जीवन प्राण में खराबी नहीं आती किन्तु सूक्ष्म होकर ऊपर आकाश में शवगन्ध छिन्न-भिन्न हो जाती है ॥ १० ॥

यो अ॒ग्निः क्र॑व्य॒वाह॑नः पि॒तॄन्यक्ष॑दृता॒वृधः॑ ।
प्रेदु॑ ह॒व्यानि॑ वोचति दे॒वेभ्य॑श्च पि॒तृभ्य॒ आ ॥ ११ ॥

यः । अ॒ग्निः । क्र॒व्य॒ऽवाह॑नः । पि॒तॄन् । यक्ष॑त् । ऋ॒त॒ऽवृधः॑ । प्र । इत् । ऊँ इति॑ । ह॒व्यानि॑ । वो॒च॒ति॒ । दे॒वेभ्यः॑ । च॒ । पि॒तृऽभ्यः॑ । आ ॥ ११ ॥

**संस्कृतान्वयार्थः**—( यः क्रव्यवाहनः-अग्निः-ऋतावृधः पितॄन्-यक्षत्-इत्-उ-देवेभ्यः-च पितृभ्यः-आ हव्यानि प्रवोचति ) यः शवमांसस्य वोढाऽग्निः "क्रव्ये च" [ अष्टा० ३ । २ । ६९ ] इति योगविभागात् क्रव्योपपदे वहधातोर्ल्युट् । ऋतावृधः-ऋतस्य यज्ञस्य वर्धयितॄन् *'ऋतावृधो यज्ञवृधः'* [ निरु० १२ । १३ ] पितॄन्-सूर्यरश्मीन् यजेत्-सङ्गतो भवेत्, "सङ्गतिकरणमत्र यज्ञार्थः" । स एवाग्निरिदु-इदानीं तु-आहुतियुक्तचमसेन देवेभ्यः-दिव्यगुणेभ्यश्च पितृभ्यश्च पूर्वोक्तेभ्यः, 'आकारः समुच्चयार्थः' । *"एतस्मिन्नेवार्थे*

( समुच्चयार्थे ) देवेभ्यश्च पितृभ्य एत्याकारः" [ निरु० १ । ४ ] हव्यानि प्रवोचति प्रवदति, 'लडर्थे लेट्' । शवमांसचटचटास्थानेऽधुना हव्य-सरसरशब्दं करोति-इत्यर्थः ॥ ११ ॥

**भाषान्वयार्थ**—( यः क्रव्यवाहनः-अग्निः ऋतावृधः पितॄन्-यक्षत्-इत्-उ-देवेभ्यः-च पितृभ्यः-आ हव्यानि प्रवोचति ) जो शवमांस की वोढा अग्नि यज्ञवर्धक सूर्यरश्मियों से सङ्गत होती है वही अग्नि इस समय आहुतियुक्तचमस से देवों दिव्यगुणयुक्त पदार्थों और पूर्वोक्त सूर्यरश्मियों के लिये भी हव्यों का उच्चारण अर्थात् शवमांस के चटचटा शब्द के स्थान में घृतादि हव्य की सरसर ध्वनि करती है ॥ ११ ॥

**भावार्थ**—शवाग्नि में घृतादि हव्य डालने से शवमांस के चटचटा शब्द को भी दबाकर हव्य की सरसर ध्वनि के साथ उक्त अग्नि देवयज्ञ और पितृयज्ञ के रूप को धारण कर लेती है ॥ ११ ॥

**उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।**
**उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ १२ ॥**

उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि । उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ १२ ॥

**संस्कृतान्वयार्थः**—( उशन्तः-त्वा निधीमहि-उशन्तः-समिधीमहि ) हे-अग्ने ! यतो वयमिच्छन्तस्त्वां स्थापयेम तथा-इच्छन्त एव च सन्दीपयेम, तस्मात्त्वमपि ( उशन्-उशतः पितॄन् हविषे-अत्तवे-आवह ) अस्मदिष्टमिच्छन्-अस्मदिष्टमिच्छतः पितॄन् प्रति हविषे-हविरत्तवेऽत्तुं ग्रहीतुम् 'तुमर्थे तवेन् प्रत्ययः' । आवह-प्रयोजय ॥ १२ ॥

**भाषान्वयार्थ**—( उशन्तः-त्वा निधीमहि-उशन्तः-समिधीमहि ) हे अग्ने ! जिससे कि हम सदैव निज इष्ट की इच्छा करते हुए तुझको अन्त्येष्टि पर्यन्त सब संस्कारों में स्थापित करते हैं तथा इष्ट चाहते हुए ही प्रज्वलित करते हैं ( उशन्-उशतः पितॄन् हविषे-अत्तवे-आवह ) इसलिये तू भी हमारा इष्ट चाहती हुई, अपने जैसी इष्ट चाहती हुई सूर्यरश्मियों को यज्ञ में प्रयुक्त कर जिस से तेरे अन्दर डाली हवि सूक्ष्म बन कर फैल जावे ॥ १२ ॥

**भावार्थ**—संस्कारों और मङ्गलकार्यों में अग्निहोम करना चाहिये ॥ १२ ॥

**यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।**
**कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥ १३ ॥**

यम् । त्वम् । अग्ने । सम्ऽअदहः । तम् । ऊँ इति । निः । वापय । पुनरिति । कियाम्बु । अत्र । रोहतु । पाकऽदूर्वा । विऽअल्कशा ॥ १३ ॥

**संस्कृतान्वयार्थः**—( अग्ने त्वं यं समदहः-तम्-उ पुनः-निर्वापया ) हे अग्ने ! त्वं यं देशं सङ्गत्य दग्धवानुपरिष्टाद्दग्धवानित्यर्थः । तमेव देशं पुनर्निर्वापया त्यज ।

"निर्वपेद् भुवि" [ मनु० ३ । ९२ ] इति मनुप्रामाण्यात् त्यागार्थः .( अत्र व्यल्कशा पाक-दूर्वा कियाम्बु रोहतु ) अत्र देशे दग्धस्थाने व्यल्कशा–विविधपर्याप्तशाखी, पाकदूर्वा–दूर्वाणां पाकः "राजदन्तादिषु परम्" [ अष्टा० २ । २ । ३१ ] इति परनिपातः । कियाम्बु–कियदम्बु यावज्जलः पर्याप्तजलयुक्तो रोहतूत्पद्यताम् । एवं त्वं निर्वापयेति सम्बन्धः ॥१३॥

भाषान्वयार्थ—( अग्ने त्वं यं समदहः-तम्-उ-पुनः-निर्वापया ) हे अग्निदेव ! तूने जिस देश को अन्त्येष्टि समय जलाया है उसको अपने तेज से फिर रहित कर दे ( अत्र व्यल्कशा पाकदूर्वा कियाम्बु रोहतु ) और इस देश अर्थात् दग्धस्थान में विविध पूर्ण शाखा वाला दूब घास का पाक आवश्यक जलसिञ्चन से हो जावे ॥ १३ ॥

भावार्थ—शवाग्नि से दग्ध स्थान को प्रथम अग्नि से रहित करना चाहिए पुनः उसमें इतना जलसिञ्चन करे कि जिससे वहां अच्छी दूब घास उत्पन्न हो सके ॥ १३ ॥

शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मण्डूक्या३ सु सं गम इमं स्व१ग्निं हर्षय ॥ १४ ॥

शीतिके । शीतिकाऽवति । ह्लादिके । ह्लादिकाऽवति । मण्डूक्या । सु । सम् । गमः । इमम् । सु । अग्निम् । हर्षय ॥ १४ ॥

संस्कृतान्वयार्थः—( शीतिके शीतिकावति ह्लादिके ह्लादिकावति मण्डूक्या सु सङ्गमः–इमम्–अग्निं सुहर्षय ) हे शीतिके शीतरूपे दूर्वे ! "शीता दूर्वानाम" [ धन्वन्तरिनिघण्टौ पर्पटादिवर्गे तथा च वाचस्पत्ये ] 'ततोऽनुकम्पायां कन्'। शीतिकावति ! हे दूर्वावति भूमे ! ह्लादिके–मनःप्रसादिके वल्लकि । "वल्लकी ह्लादा सुरभिः सुस्रवा च सा" [ धन्वन्तरिनिघण्टौ ] ह्लादिकावति–हे ह्लादिकावति भूमे ! मण्डूक्या सह सु सम्यक् सङ्गमः–सङ्गच्छस्व तथेममग्निमग्निप्रभावं सुहर्षय–सम्यगलीकं शान्तं कुरु, ' हृषु–अलीके" [ भ्वादिः ] ॥ १४ ॥

भाषान्वयार्थ—( शीतिके शीतिकावति ह्लादिके ह्लादिकावति मण्डूक्या सुसङ्गमः-इमम्-अग्निं सुहर्षय ) हे शीतरूप दूब ! हे शीतदूबयुक्त भूमे ! हे मन को प्रसन्न करने वाली सुगन्ध वल्लकि ! हे सुगन्धवल्लकियुक्त भूमे ! तू मण्डूकी के साथ भली भांति इस प्रकार सङ्गत हो कि अन्त्येष्टि अग्नि के प्रभाव का यहां कोई भी चिह्न न रहे ॥ १४ ॥

भावार्थ—शवाग्नि के पश्चात् उस भूमि का उपचार इस प्रकार होना चाहिये कि वहां ठण्डी–ठण्डी दूब और सुगन्धलता उगकर भूमि हरीभरी और मेण्डकियों के साथ सुन्दर प्रतीत होने लगे एवं शवाग्नि के प्रभाव का कोई भी चिह्न न रहे ॥ १४ ॥



# सप्तदशं सूक्तम्

ऋषिः—यामायनो देवश्रवाः ।

देवताः—१,२ सरण्यूः । ३–६ पूषा । ७–९ सरस्वती । १०, १४ आपः ११–१३ आपः सोमो वा । उद्गीथमते-आप एव ।

छन्दः—१, ५, ८ विराट् त्रिष्टुप् । २, ६, १२ त्रिष्टुप् । ३, ४, ७, ९–११ निचृत् त्रिष्टुप् । १३ ककुम्मती बृहती । १४ अनुष्टुप् ॥

स्वरः—१–१२ धैवतः । १३ मध्यमः । १४ गान्धारः ॥

विषयः—अत्र सूक्ते परमात्मसूर्यविद्वद्भिर्विविधा लाभा ग्राह्या इत्युच्यते ।
इस सूक्त में परमात्मा, सूर्य और विद्वानों से अनेक लाभ प्राप्त करने के लिये कहा गया है ।

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ १ ॥

त्वष्टा । दुहित्रे । वहतुम् । कृणोति । इति । इदम् । विश्वम् । भुवनम् । सम् । एति । यमस्य । माता । परिऽउह्यमाना । महः । जाया । विवस्वतः । ननाश ॥ १ ॥

संस्कृतान्वयार्थः—( त्वष्टा दुहित्रे वहतुं कृणोति ) *"त्वष्टा दुहितुर्वहनं करोति"* [*निरु० १२ । १२*] त्वष्टा क्षिप्रव्यापनधर्मा दीपनशीलः पदार्थानां व्यक्तीकर्त्ता वा *"त्वष्टा तूर्णमश्नुते त्विषेर्वा स्याद् दीप्तिकर्मणस्तक्षतेर्वा स्यात् करोतिकर्मणः"* [ निरु० ८ । १४ ] सूर्यः, परमात्मा वा दुहितुरुषसः, दोहनयोग्यायाः प्रकृतेर्गौरिव वहनं विवाह्यप्रसारणं वा करोति ( विश्वं भुवनं समेति ) इमानि च समस्तानि वस्तूनि सम्मुखीभवन्ति दृश्यानि व्यक्तानि वा भवन्ति *"इमानि च सर्वाणि भूतान्यभिसमागच्छन्ति"* [*निरु० १२ । १२*] ( यमस्य माता परि-उह्यमाना ) कालस्य निर्मात्री सैवोषः प्रेर्यमाणा यन्तव्यस्य नियन्त्रणी-यस्य जगतो वा निर्मात्री सा प्रकृतिः यदाऽग्रे प्रेर्यमाणा विस्तार्यमाणा वाऽऽसीत्, तदा (महः-विवस्वतः-जाया ननाश) महतः सूर्यस्य जायाभूता रात्रिर्नष्टा भवति यदुषसोऽग्रगम-

नेन सूर्यः प्रकाशते रात्रिर्विनश्यते *"महतो विवस्वतः-आदित्यस्य जाया रात्रिरादित्योदयेऽन्तर्धीयते"* [*निरु० १२ । १२*] महतो विशिष्टतया सम्पादकस्य परमात्मनो जायाभूता रात्रिः प्रलयावस्था-अव्यक्ता प्रकृतिः-नष्टा भवति ॥ १ ॥

भाषान्वयार्थ—( त्वष्टा दुहित्रे वहतुं कृणोति ) शीघ्रव्यापन धर्मवाला, पदार्थों का स्वरूपदाता सूर्य या परमात्मा, उषा का या दोहने योग्य प्रकृति का गौ की भांति, विशेषरूप से वहन करता है या अग्रसर करता है ( विश्वं भुवनं समेति ) सारी वस्तुएँ या भूत प्रकट या दृष्ट हो जाती हैं ( यमस्य माता परि-उह्यमाना ) काल की निर्मात्री उषा या जगत् का निर्माण करने वाली प्रकृति जब आगे प्रेरित की जाती हुई या विस्तृत की जाती हुई होती है तब ( महः-विवस्वतः जाया ननाश ) महान् सूर्य की जाया रात्रि उसके उदय होने पर विलीन हो जाती है या महान् विशेष निष्पादक परमात्मा की जायाभूत प्रकृति—प्रलयावस्था रूप रात्रि नष्ट हो जाती है ॥ १ ॥

भावार्थ—विश्वरचयिता परमात्मा विश्व को रचने के लिये प्रकृति को विस्तार देकर जगत् का निर्माण करता है; जो जगत् की निर्मात्री प्रकृति अपने पूर्वरूप में नहीं रहती है किन्तु जगत्रूप में आकर विलीन हो जाती है इसी प्रकार सूर्य जब अपनी उषा को आगे करता है—फैलाता है रात्रिरूप जाया उसके उदय होने पर विलीन हो जाती है ॥ १ ॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ २ ॥

अप । अगूहन् । अमृताम् । मर्त्येभ्यः । कृत्वी । सऽवर्णाम् । अददुः । विवस्वते । उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊँ इति । द्वा । मिथुना । सरण्यूः ॥ २ ॥

संस्कृतान्वयार्थः—( मर्त्येभ्यः-अमृताम्-अपागूहन् ) मरणधर्मेभ्यो मनुष्यादिभ्यस्तद्धितार्थममृतामुषसम् *"अमृता-उषाः"* [ *निघ० २ । २* ] प्रकृतिर्वा, रश्मयो रचनप्रवाहाः-रचनशक्तयो वाऽन्तर्हितामकुर्वन् प्रकृतिरूपामलोपयन् भोगप्राप्तये ( सवर्णां कृत्वी विवस्वते-अददुः ) सूर्योदयानन्तरमुषसः सवर्णां प्रभां कृत्वा ते रश्मयः सूर्याय दत्तवन्तो दिवसाभारूपे, तथाभूतां जडां सृष्टिं विशिष्टतया व्यापिने परमात्मने तद्रचनशक्तयः स्थापितवत्यः ( उत-अश्विनौ-अभरत् ) अपि खल्वश्विनौ ज्योतिषान्यं रसेनान्यं चाग्नेयं सोम्यं चाधारयत्—धारयति ( तत्-यत्-आसीत् ) याऽऽसीत् ( द्वा मिथुना सरण्यूः-अजहात् ) द्वौ मिथुनौ सरण्यूः-अत्यजत् सरणशीला सैवोषाः "सरण्यूः सरणात् [ निरु० १२ । ६ ] मध्यमं वायुं माध्यमिकां वाचं विद्युतं चान्तरिक्षे त्यक्तवती *"मध्यमं च माध्यमिकां च वाचमिति"* [ *निरु० १० । १०* ] तावेवाश्विनावाग्नेयसोम्यौ पदार्थौ सृष्टवती प्रकृतिः-आग्नेयसोम्यमयी सृष्टिः ॥ २ ॥

# त्रयोविंशं सूक्तम्

ऋषिः—ऐन्द्रः प्राजापत्यो विमदः, वासुक्रो वसुकृद्वा ।
देवता—इन्द्रः ।
छन्दः—१ विराट् त्रिष्टुप् । २-४ आर्ची भुरिग् जगती । ५-७ निचृत् त्रिष्टुप् ।
स्वरः—१, ५-७ धैवतः । २-४ निषादः ।

अत्र सूक्ते इन्द्रशब्देन राजा वर्ण्यते तथा तस्य प्रजापालनादि-व्यवहाराश्चोपदिश्यन्ते ।

इस सूक्त में इन्द्र शब्द से राजा का वर्णन है तथा उसके प्रजापालन आदि व्यवहारों का उपदेश है ।

यजा॑मह॒ इन्द्रं॒ वज्र॑दक्षिणं॒ हरी॑णां र॒थ्यं१॒॑ विव्र॑तानाम् ।
प्र श्मश्रु॒ दोधु॑वदू॒र्ध्वथा॑ भू॒द्वि सेना॑भि॒र्दय॑मानो॒ वि राध॑सा ॥ १ ॥

यजा॑महे । इन्द्र॑म् । वज्र॑ऽदक्षिणम् । हरी॑णाम् । र॒थ्य॑म् । विऽव्र॑तानाम् । प्र । श्मश्रु॑ । दोधु॑वत् । ऊ॒र्ध्वऽथा॑ । भू॒त् । वि । सेना॑भिः । दय॑मानः । वि । राध॑सा ॥ १ ॥

**संस्कृतान्वयार्थः**—( विव्रतानां हरीणाम् ) विविधं कर्म कर्तॄणां मनुष्याणाम् "हरयो मनुष्याः" [ निघ० २ । ३ ] ( वज्रदक्षिणं रथ्यम्-इन्द्रं यजामहे ) वज्रो दक्षिणे दक्षिणहस्ते यस्य तथाभूतं रमणीयमाश्रयणीयमैश्वर्यवन्तं राजानं सत्कुर्मः ( सेनाभिः-राधसा वि दयमानः ) यो बहुविधाभिः सेनाभिस्तथा धनैश्वर्येण च प्रजाः-उपकुर्वन् ( श्मश्रु प्र दोधुवत् ) मुखकेशसमूहं प्रकम्पयन् स्वप्रभावं प्रदर्शयन् ( ऊर्ध्वथा-भूत् ) उपरिस्थितो भवति ॥ १ ॥

**भाषान्वयार्थ**—( विव्रतानां हरीणाम् ) विविध कर्म करने वाले मनुष्यों के ( वज्रदक्षिणं रथ्यम्-इन्द्रं यजामहे ) वज्र–शत्रु को प्राणों से वर्जित कर देने वाला शस्त्रास्त्र जिसके दक्षिण हाथ में है ऐसे रमणीय आश्रयणीय ऐश्वर्यवान् राजा को हम सत्कृत करते हैं ( सेनाभिः-राधसा विदयमानः ) जो बहुत प्रकार की सेनाओं द्वारा तथा धनैश्वर्य द्वारा प्रजाओं को उपकृत करने रक्षित और सुखयुक्त करने के हेतु ( श्मश्रु प्रदोधुवत् ) मुखमण्डल के केशसमूह को प्रकम्पित करता हुआ स्वप्रभाव को दर्शाता हुआ ( ऊर्ध्वथा-भूत ) ऊपर स्थित होता है ॥ १ ॥

**भावार्थ**—जो राजा या शासक भिन्न-भिन्न कर्म करने वाला प्रजाओं की रक्षार्थ शस्त्रास्त्र-

सम्पन्न हो सेनाओं द्वारा तथा धनधान्य सम्पत्ति से पालना करता हुआ प्रभावशाली हो उसका सत्कार प्रजाजन किया करें ॥ १ ॥

हरी न्व॑स्य या वने॑ वि॒दे वस्विन्द्रो॑ म॒घैर्म॒घवा॑ वृत्र॒हा भु॑वत् ।
ऋ॒भुर्वाज॑ ऋ॒भु॒क्षाः पत्य॑ते॒ शवोऽव॑ क्ष्णौमि॒ दास॑स्य॒ नाम॑ चित् ॥ २ ॥

हरी॒ इति॑ । नु । अ॒स्य॒ । या । वने॑ । वि॒दे । वसु॑ । इन्द्रः॑ । म॒घैः । म॒घऽवा॑ । वृ॒त्र॒ऽहा । भु॒व॒त् । ऋ॒भुः । वाजः॑ । ऋ॒भु॒क्षाः । पत्य॑ते॒ । शवः॑ । अव॑ । क्ष्णौमि॒ । दास॑स्य । नाम॑ । चि॒त् ॥ २ ॥

संस्कृतान्वयार्थः—( अस्य या हरी नु वसु विदे ) अस्य राज्ञो यौ दुःखापहर्त्तो सुखाहर्त्तो च सभाविभागः सेनाविभागश्च धनं वेदयेते ( मघैः-मघवा-इन्द्रः ) धनैर्धनवान् भवति स राजा ( वृत्रहा भुवत् ) शत्रुहन्ता भवति ( ऋभुः-वाजः- ऋभुक्षाः ) मेधावी *"ऋभुर्मेधावी"* [ *निघ० ३ । १५* ] बलवान् तथा महान् *"ऋभुक्षाः-महन्नाम* [ *निघं० ३ । ३* ] ( पत्यते) स्वामित्वं करोति *"पत्यते ऐश्वर्यकर्मा"* [*निघं० २ । २१* ] (दासस्य शवः-नाम चित्-अवक्ष्णौमि ) योऽस्मान् दासयति क्षिणोति तस्य बलं नामापि नाशयति 'पुरुषव्यत्यय-श्छान्दसः ॥ २ ॥

भाषान्वयार्थ—( अस्य या हरी नु वसु विदे ) इस राजा के जो दुःखहर्त्ता और सुख-आहर्त्ता सभाविभाग और सेना-विभाग धन को प्राप्त कराते हैं । ( मघैः-मघवा-इन्द्रः ) धनों के द्वारा धनवान् होता है वह राजा है । ( वृत्रहा भुवत् ) शत्रुहन्ता होता है । ( ऋभुः-वाजः-ऋभुक्षाः ) मेधावी बलवान् तथा महान् होता हुआ ( पत्यते ) स्वामित्व करता है-शासन करता है । (दासस्य शवः-नामचित्-अवक्ष्णौमि) जो हमें क्षीण करता है उसके बल और नाम को भी तेजो-हीन कर देता है—नष्ट कर देता है ॥ २ ॥

भावार्थ—राजा के सभाविभाग और सेनाविभाग दुःख नाशक और सुख-प्रापक होते हुए प्रजा के लिए धन प्राप्त कराने वाले होने चाहियें । ऐसा राजा शत्रुनाशक, मेधावी, महान् बलवान् होकर शासन करता है । प्रजा को दुःख देने वाले शत्रु के बल और नाम तक को मिटा देता है ॥ १ ॥

य॒दा वज्रं॒ हिर॑ण्य॒मिद॒था रथं॒ हरी॒ यम॑स्य॒ वह॑तो॒ वि सू॒रिभिः॑ ।
आ ति॑ष्ठति म॒घवा॒ सन॑श्रुत॒ इन्द्रो॒ वाज॑स्य दी॒र्घश्र॑वस॒स्पतिः॑ ॥ ३ ॥

य॒दा । वज्र॑म् । हिर॑ण्यम् । इत् । अथ॑ । रथ॑म् । हरी॒ इति॑ । यम् । अ॒स्य॒ । वह॑तः । वि । सू॒रिऽभिः॑ । आ । ति॒ष्ठ॒ति॒ । म॒घऽवा॑ । सन॑ऽश्रुतः । इन्द्रः॑ । वाज॑स्य । दी॒र्घऽश्र॑वसः । पतिः॑ ॥ ३ ॥

**संस्कृतान्वयार्थः**—( यदा ) यस्मिन् काले ( इन्द्रः ) राजा-शासकः ( सूरिभिः ) विद्वद्भिः सह ( वज्रं हिरण्यं यं रथम्-इत् ) ओजोरूपं सर्वहितरमणीयं स्वरमणीयं राष्ट्रं-राष्ट्रशासनस्थानं खलु ( वि-आ तिष्ठति ) विराजते स्वाधीने चालयति च तदा ( अस्य हरी वहतः ) सभासेनाविभागौ राष्ट्रं वहतः ( मघवा ) राजसूययज्ञवान् राजा *"यज्ञेन मघवान्"* [तै० सं० ४ । ४ । ८ । १] (सनश्रुतः दीर्घश्रवसः-वाजस्य पतिः) परम्परातः प्रसिद्धस्य दीर्घकालकीर्त्तिप्रदस्य भोगैश्वर्यस्य पतिर्भवति ॥ ३ ॥

**भाषान्वयार्थ**—( यदा ) जिस समय ( इन्द्र ) राजा-शासक ( सूरिभिः ) विद्वानों के द्वारा ( वज्रं हिरण्यं यं रथम्-इत् ) ओजोरूप सर्वहितरमणीय तथा स्वरमणीय जिस राष्ट्र-शासन पद पर ( वि-आ तिष्ठति ) विराजता है-और स्वाधीन चलाता है, तब ( अस्य हरी वहतः ) इसके सभासेना विभाग राष्ट्र का वहन करते हैं। ( मघवा ) राजसूय यज्ञ वाला-राजसूय को प्राप्त हुआ राजा ( सनश्रुतः ) परम्परा से प्रसिद्ध हुए ( दीर्घश्रवसः ) दीर्घकाल तक कीर्ति देने वाले ( वाजस्य ) भोग ऐश्वर्य का पति स्वामी हो जाता है ॥ ३ ॥

**भावार्थ**—विद्वानों द्वारा राजा-या शासक ओजस्वी सर्वहित-रमणीय तथा स्वरमणीय राष्ट्रशासन पद पर विराजमान हो जाता है तो उसके सभाविभाग और सेनाविभाग राष्ट्र का वहन करते हैं एवं परम्परा से प्रसिद्ध दीर्घकालीन कीर्ति वाले भोग ऐश्वर्य का स्वामी राजा बनता है ॥ ३ ॥

**सो चिन्नु वृष्टिर्यूथ्या३ स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते ।**
**अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम् ॥ ४ ॥**

सो इति । चित् । नु । वृष्टिः । यूथ्या । स्वा । सचा । इन्द्रः । श्मश्रूणि । हरिता । अभि । प्रुष्णुते । अव । वेति । सुऽक्षयम् । सुते । मधु । उत् । इत् । धूनोति । वातः । यथा । वनम् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( सा-उ चित्-नु वृष्टिः ) सैव खलूत्तमा सुखवृष्टी राष्ट्रे, यया ( इन्द्रः, स्वा यूथ्या सचा ) राजा "स्वा" स्वया, यूथ्या यूथया साकम् ( हरिता श्मश्रूणि ) हरितवर्णानि कृषिभूमेर्धान्यतृणानि ( अभि प्रुष्णुते अभिषिक्तानि मन्यते "प्णु प्रस्रवणे" [ अदादि० ] तदा हि ( सुक्षयम्-अव वेति ) उत्तमस्थानं राष्ट्रं प्राप्नोति ( सुते ) निष्पन्ने ( मधु ) मधुनि-मधुमये राष्ट्रे ( इत् ) एव ( उद्-धूनोति ) विरोधिनं कम्पयति ( वातः-यथा वनम् ) प्रबलो वायुर्यथा वनं कम्पयति ॥ ४ ॥

**भाषान्वयार्थ**—( सा-उ चित्-नु वृष्टिः ) वह ही उत्तम सुखवृष्टि राष्ट्र में होती है, जिससे ( इन्द्रः स्वा यूथ्या सचा ) राजा अपनी यूथ रूप सभा के साथ ( हरिता श्मश्रूणि ) हरित रंग वाले हरे-भरे धान्य तृणों को ( अभि प्रुष्णुते ) अभिषिक्त मानता है तब ही ( सुक्षयम्-अववेति ) उत्तमस्थान राष्ट्र को प्राप्त होता है ( सुते ) निष्पन्न- ( मधु ) मधुमय राष्ट्र में ( इत् ) अवश्य (उद्-धूनोति) विरोधी को कम्पाता है (वातः-यथा वनम्) प्रबल वायु जैसे वन को कम्पाता है ॥४॥

भावार्थ—राष्ट्र में उत्तम वृष्टि होने पर राजा सभा के साथ हरे-भरे कृषि धान्यों को देखकर अपने को सफल मानता है और विरोधी दुष्काल आदि को नष्ट करता है ॥ ४ ॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान ।
तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः ॥ ५ ॥

यः । वाचा । विऽवाचः । मृध्रवाचः । पुरु । सहस्रा । अशिवा । जघान । तत्ऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । पिताऽईव । यः । तविषीम् । ववृधे । शवः ॥ ५ ॥

संस्कृतान्वयार्थः—(यः) यः खल्विन्द्रः शासकः (वाचा) वज्रेण "वज्र एव वाक्" [ऐ० २ । २१] (विवाचः-मृध्रवाचः) विरुद्धा वाग्येषां ते तथा मृध्रा हिंसिका वाग्येषां ते "मृध्रा हिंस्रा वाग्येषां ते" [ऋ० ७ । ६ । ३ दयानन्दः] अशिवाः अकल्याणचिन्तकाः शत्रवः सन्तीति तेषाम् (पुरू सहस्रा) पुरूणि बहूनि सहस्राणि "पुरु बहुनाम" [निघ० ३ । १] आकारादेश उभयत्र छान्दसः (जघान) हन्ति (अस्य तत्-तत्-इत् पौंस्यम्) अस्य तत्तद्विषयकं सर्वं हि पौरुषम् (गृणीमसि) प्रशंसामः (यः) यः खलु (पिता-इव तविषीं शवः-ववृधे) यथा पिता तद्वदस्माकं बलम् "तविषी बलनाम" [निघ० २ । ६] धनम् "शवः-धननाम" [निघ० २ । १०] वर्धते ॥ ५ ॥

भाषान्वयार्थ—(यः) जो शासक (वाचा) वज्र द्वारा (विवाचः-मृध्रवाचः) विविध वाणी वाले तथा हिंसक वाणी वाले (अशिवाः) अकल्याणचिन्तक शत्रु हैं, उनके (पुरुसहस्रा) बहुत सहस्र जनों या गणों को (जघान) नष्ट करता है—मारता है (अस्य तत् तत्-इत् पौंस्यम्) इसके उस उस विषय वाले सब पौरुष-बल की (गृणीमसि) हम प्रशंसा करते हैं (यः) जो (पिता-इव तविषीं शवः-ववृधे) पिता की भांति हमारे बल एवं धन को बढ़ाता है ॥ ५ ॥

भावार्थ—राजा अपने शासन वज्र से विविध वाणी वाले और हिंसक वाणी वाले अहित चिन्तक जनों या शत्रुओं का हनन करे तथा पिता की भांति प्रजा के बल और धन को बढ़ाता रहे वह प्रजा द्वारा प्रशंसा के योग्य होता है ॥ ५ ॥

स्तोमं त इन्द्र विमदा अजीजनन्नपूर्व्यं पुरुतमं सुदानवे ।
विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न गोपाः करामहे ॥ ६ ॥

स्तोमम् । ते । इन्द्र । विऽमदा । अजीजनन् । अपूर्व्यम् । पुरुऽतमम् । सुऽदानवे । विद्म । हि । अस्य । भोजनम् । इनस्य । यत् । आ । पशुम् । न । गोपाः । करामहे ॥ ६ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे राजन् ( ते सुदानवे ) तुभ्यं शोभनसुखदात्रे ( विमदाः ) तव राष्ट्रे विशिष्टहर्षप्राप्ताः प्रजाजनाः ( पुरुतमम्-अपूर्व्यं स्तोमम्-अजीजनन् ) बहुप्रकारं श्रेष्ठमन्नं *"अन्नं वै स्तोमः"* [ मै० ३ । ४ । २ ] शुल्करूपं समपादयन्-सम्पादितवन्तस्ते खलु वयं स्मः, यतः ( अस्य-इनस्य भोजनं विद्म हि ) अस्य तव स्वामिभूतस्य शासकस्य पालनं वयं जानीमः ( यत् पशुं न गोपाः-आकरामहे ) यतो दुग्धदातारं पशुं प्रति दुग्धप्रतिदाननिमित्तं तदाहारदानेन तं गोपाला यथा सत्कुर्वन्ति तद्वत्त्वां वयं सत्कुर्मः ॥ ६ ॥

**भाषान्वयार्थ**—( इन्द्र ) हे राजन् ( ते सुदानवे ) तुझ शोभन सुखदाता के लिये ( विमदाः ) तेरे राष्ट्र में विशिष्ट हर्ष को प्राप्त हुए प्रजाजन ( पुरुतमम्-अपूर्व्यं स्तोमम् ) बहुत प्रकार के श्रेष्ठ शुल्करूप अन्न को ( अजीजनन् ) हम सम्पन्न करते हैं ( अस्य-इनस्य भोजनं विद्म हि ) इस तुझ स्वामिरूप शासक के पालन को हम मानते हैं ( यत् पशुं न गोपाः ) क्योंकि दूध देने वाले पशु के प्रति दूध के प्रतिकार रूप में उसका आहारदान से जैसे गोपालक सत्कार करते हैं उसी भांति पालनादि निमित्त तेरा उपहार द्वारा हम सत्कार करते हैं ॥ ६ ॥

**भावार्थ**—प्रजा को उत्तम सुख देने वाले राजा के राष्ट्र में विशेष रूप से हर्षित सुखी प्रजा वहुप्रकार से उत्तम अन्न आदि तथा उपहार दिया करें। ऐसे सुख देने वाले शासक का प्रजायें सत्कार किया करती हैं। जैसे दूध देने वाले पशु के प्रतिदान आहारदान से सत्कार करते हैं ॥ ६ ॥

**माकिर्न एना सख्या वि यौषुस्तव चेन्द्र विमदस्य च ऋषेः ।**
**विद्मा हि ते प्रमतिं देव जामिवदस्मे ते सन्तु सख्या शिवानि ॥ ७ ॥**

माकिः । नः । एना । सख्या । वि । यौषुः । तव । च । इन्द्र । विमदस्य । च । ऋषेः । विद्म । हि । ते । प्रमतिम् । देव । जामिवत् । अस्मे । ते । सन्तु । सख्या । शिवानि ॥ ७ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे राजन् ( तव विमदस्य-ऋषेः-च ) तव तथा त्वदीयराष्ट्रे विशिष्टहर्षयितुस्त्वां प्राप्तस्य प्रजागणस्य ( एना सख्या ) एतानि सखित्वानि खलूभयहितकराणि ( माकिः-न वियौषुः ) न कदाचिद् वियुज्येरन्-न शिथिलानि भवेयुः ( देव ) हे सुखदातः ! राजन् ! ( ते प्रमतिं विद्म हि ) तव प्रकृष्टां राज्यशासनमतिं प्रजापालनपरायणां मतिं वयं प्रजाजना जानीमः ( अस्मे ) अस्मभ्यम् ( ते ) तुभ्यं च ( सख्या शिवानि ) समानराज्यशासकशास्यसम्बन्धिकर्माणि कल्याणकराणि ( जामिवत् सन्तु ) वंश्यानि शाश्वतिकानि स्थिराणि भवन्तु ॥ ७ ॥

**भाषान्वयार्थ**—( इन्द्र ) हे राजन् ! ( तव ) तेरे ( च ) और ( विमदस्य-ऋषेः ) राष्ट्र

में विशेषहर्षित करने वाले तुझे प्राप्त प्रजागण के ( एना सख्या ) ये सखिभाव दोनों के हितकर ( माकिः-न वियौषुः ) कदापि न वियुक्त हों न शिथिल हों ( देव ) हे सुखदाता राजन् ! ( ते प्रमति विद्म हि ) तेरी प्रकृष्ट-ऊंची प्रजापालनपरायणा मति को हम प्रजाजन जानते हैं ( अस्मे ) हमारे लिये ( ते ) और तेरे लिये ( सख्या शिवानि ) समान राष्ट्र शासक शास्य सम्बन्धि कर्म कल्याण-कर ( जामिवत् सन्तु ) वंशज शाश्वतिक स्थिर होवें ॥ ७ ॥

भावार्थ—शासक और शास्य प्रजा वर्ग के पारस्परिक सखिभाव सदा बने रहने चाहिएं और वंशज सम्बन्ध के समान कल्याणकारी होवें ॥ ७ ॥



# चतुर्विंशं सूक्तम्

ऋषिः—पूर्वसूक्तवत् ।

देवताः—१-३ इन्द्रः । ४-६ अश्विनौ ।

छन्दः—१ आस्तार पंक्तिः, २ आर्ची स्वराट् पंक्तिः, ३ शंकुमती पंक्तिः, ४-६ अनुष्टुप्, ५ निचृदनुष्टुप् ॥

स्वरः—१-३ पञ्चमः, ४-६ गान्धारः ।

अस्मिन् सूक्ते राजधर्मा राष्ट्रसञ्चालनञ्चोपदिश्यन्ते ।

इस सूक्त में राजधर्मों और राष्ट्र संचालन का उपदेश है ।

इन्द्र सोममिमं पिब मधुमन्तं चमू सुतम् ।
अस्मे रयिं नि धारय वि वो मदे सहस्रिणं पुरूवसो विवक्षसे ॥ १ ॥

इन्द्र । सोमम् । इमम् । पिब । मधुऽमन्तम् । चमू इति । सुतम् । अस्मे इति । रयिम् । नि । धारय । वि । वः । मदे । सहस्रिणम् । पुरुवसो इति पुरुऽवसो । विवक्षसे ॥ १ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे राजन् ( इमं मधुमन्तं चमूसुतं सोमं पिब ) एतं मधुररसवन्तं सुस्वादु द्यावापृथिव्योरिव *"चम्वौ द्यावापृथिवी नाम"* [ *निघ० ३ । ३०* ] सभासेनयोर्मध्ये सम्पन्नं राज्यैश्वर्यं भुञ्जीथाः सेवस्व ( अस्मे सहस्रिणं रयिं नि धारय ) अस्मभ्यं प्रजाजनेभ्यः सहस्रगुणितं बहुहितकरं धनं पोषणं पालनं नियोजय ( पुरूवसो ) हे बहुधनवन् राजन् ( मदे ) हर्षकरधननिमित्तम् ( वः-वि ) त्वां विशिष्टं प्रशंसामः ( विवक्षसे ) त्वं महान्-असि *"विवक्षसे महन्नाम"* [ *निघ० ३ । ३* ] ॥ १ ॥

**भाषान्वयार्थ**—( इन्द्र ) हे राजन् ( इमं मधुमन्तं चमू सुतं सोमं पिब ) इस मधुर रस वाले सुस्वादु सभा सेना के मध्य सम्पन्न राज्य-ऐश्वर्य को भोग—सेवन कर ( अस्मे सहस्रिणं रयिं निधारय ) हम प्रजाजनों के लिये सहस्रगुणित बहुत हितकर धन पालन पोषण को नियतकर—स्थिरकर ( पुरूवसो ) हे बहुत धन सम्पन्न राजन् ! ( मदे ) हर्षाने वाले धन के निमित्त ( वः-वि ) तेरी विशेष प्रशंसा करते हैं । ( विवक्षसे ) तू महान् है ॥ १ ॥

**भावार्थ**—सभा और सेना में सम्पन्न राज्य ऐश्वर्य को राजा उत्तम रूप से भोगे । प्रजाओं के लिये सहस्रगुणित अर्थात् जितना राज्य शुल्क ग्रहण करे उससे बहुत गुणे धन से प्रजा का पालन पोषण करे । प्रजा भी अपने हर्ष आनन्द के प्राप्त करने के निमित्त राजा की प्रशंसा किया करें । क्योंकि राजा एक महान् गुणवाला होता है ॥ १ ॥

त्वां यज्ञेभिरुक्थैरुप हव्येभिरीमहे ।
शचीपते शचीनां वि वो मदे श्रेष्ठं नो धेहि वार्यं विवक्षसे ॥ २ ॥

त्वाम् । यज्ञेभिः । उक्थैः । उप । हव्येभिः । ईमहे । शचीऽपते । शचीनाम् । वि । वः । मदे । श्रेष्ठम् । नः । धेहि । वार्यम् । विवक्षसे ॥ २ ॥

**संस्कृतान्वयार्थः**—( शचीनां शचीपते ) हे विविधप्रजाहितकर्मणां कर्मपालक राजन् ! ( त्वाम् ) त्वां वयम् ( यज्ञेभिः- उक्थैः-हव्येभिः ) यज्ञियभावनाभिः प्रशंसा-वचनैरुपहारैश्च ( उप-ईमहे "उपेमहे" ) उपमन्यामहे–सत्कुर्मः ( नः-श्रेष्ठं वार्यं धेहि ) अस्मभ्यं श्रेष्ठं वरणीयं सुखं धारय ( वः-मदे वि) त्वां हर्षनिमित्तं प्रशंसामः ( विवक्षसे ) त्वं महत्त्वम्प्राप्तोऽसि ॥ २ ॥

**भाषान्वयार्थ**—( शचीनां शचीपते ) हे नाना प्रकार के प्रजाहित कर्मों के कर्मपालक–कर्मों के पालन कराने वाले राजन् ! ( त्वाम् ) तुझे हम ( यज्ञेभिः-उक्थैः-हव्येभिः ) यज्ञिय भावनाओं, प्रशंसा वचनों और उपहारों के द्वारा ( उप-ईमहे "उपेमहे" ) सत्कृत करते हैं। ( नः-श्रेष्ठं वार्यं धेहि ) हमारे लिए उत्तम वरण करने योग्य सुख को धारण करा। ( वः-मदे वि ) तुझे हर्ष के निमित्त विशेष रूप से हम प्रजाजन प्रशंसित करते हैं। ( विवक्षसे ) तू महत्त्व को प्राप्त हुआ है ॥ २ ॥

**भावार्थ**—प्रजाजनों को प्रजाहित तथा राष्ट्रहित विविध कर्मों में प्रेरित करने वाले राजा का यज्ञिय भावनाओं, प्रशंसावचनों और उपहारों के द्वारा सत्कार करना चाहिये। क्योंकि राजा उन्हें श्रेष्ठ और वाञ्छनीय सुख प्रदान करता है ॥ २ ॥

यस्पतिर्वार्याणामसि रध्रस्य चोदिता ।
इन्द्र स्तोतृणामविता वि वो मदे द्विषो नः पाह्यंहसो विवक्षसे ॥ ३ ॥

यः । पतिः । वार्याणाम् । असि । रध्रस्य । चोदिता । इन्द्र । स्तोतृणाम् । अविता । वि । वः । मदे । द्विषः । नः । पाहि । अंहसः । विवक्षसे ॥ ३ ॥

**संस्कृतान्वयार्थः**—( यः-वार्याणां पतिः-असि ) यस्त्वं वरणीयानां धनानां पतिरसि ( रध्रस्य चोदिता ) हितसाधकधनस्य प्रेरयिता प्रदाताऽसि ( इन्द्र ) हे राजन् ( स्तोतृणाम्-अविता ) विद्यागुणप्रशंसकानां विदुषां रक्षकोऽसि ( नः-द्विषः-अंहसः पाहि) अस्मान् द्वेष्टुः शत्रोः पापाच्च रक्ष ( वि--मदे वि ) त्वां हर्षप्रदसुखनिमित्तं विशिष्टतया प्रशंसामः ( विवक्षसे ) त्वं विशिष्टमहत्त्वं प्राप्तोऽसि ॥ ३ ॥

**भाषान्वयार्थ**—( यः वार्याणां पतिः-असि ) जो तू वरणीय धनों का स्वामी है ( रध्रस्य चोदिता ) हितसाधक धन का प्रदाता है ( इन्द्र ) हे राजन् ( स्तोतृणाम्-अविता ) विद्यागुण-

प्रशंसक विद्वानों का रक्षक है ( द्विषः-अंहसः- नः पाहि ) द्वेष करने वाले शत्रु और पाप से हमारी रक्षा कर ( वः-मदे वि ) हर्षाने वाले सुख के निमित्त विशिष्ट रूप से हम तुझे प्रशंसित करते हैं ( विवक्षसे ) तू विशेष महत्त्व को प्राप्त है ॥ ३ ॥

भावार्थ—प्रजाओं द्वारा वरने योग्य धनों का स्वामी राजा होता है, वह हितसाधक धन को प्रदान करता है तथा विद्यागुणों के प्रशंसक विद्वानों का रक्षक होता है, शत्रु और पाप से सब को बचाता है, सुख के निमित्त उसकी प्रशंसा करनी चाहिये क्योंकि वह महान् है ॥ ३ ॥

युवं शक्रा मायाविना समीची निरमन्थतम् ।
विमदेन यदीळिता नासत्या निरमन्थतम् ॥ ४ ॥

युवम् । शक्रा । मायाऽविना । समीची इति सम्ऽईची । निः । अमन्थतम् ।
विऽमदेन । यत् । ईळिता । नासत्या । निःऽअमन्थतम् ॥ ४ ॥

संस्कृतान्वयार्थः—( युवम् ) युवाम् ( शक्रा ) शक्तौ-राष्ट्रसञ्चालने शक्तौ ( मायाविना ) मायाविनौ प्रज्ञावन्तौ *"माया प्रज्ञानाम"* [ *निघ० ३ । ६* ] ( समीची ) परस्परमैकमत्यं गतौ ( नासत्या ) नियमेन सत्यव्यवहारकर्त्तारौ सभासेनेशौ *"सत्यगुणकर्मस्वभावौ सभासेनेशौ* [ *ऋ० १ । ३४ । १० दयानन्दः* ] ( निरमन्थतम् ) राष्ट्रैश्वर्यं निष्पादयतम् ( यत्-ईळिता ) यदा युवाम् राष्ट्रैश्वर्यनिष्पादनेऽध्येषितौ प्रेरितौ नियुक्तौ स्यातम्, *"ईळितः-अध्येषितः [ ऋ० १ । १३ । ४ दयानन्दः ]* ( मदेन वि ) तदा हर्षेणानन्देन विराजमानौ ( निर्-अमन्थतम् ) राष्ट्रैश्वर्यं निष्पादयतम् ॥ ४ ॥

भाषान्वयार्थ—( शक्रा ) राष्ट्र-सञ्चालन में समर्थ ( मायाविना ) प्रज्ञावान्—बुद्धिमान् ( समीची ) परस्पर एक मति वाले ( नासत्या ) नियम से सत्यव्यवहार करने वाले सभापति एवं सेनापति ( युवम् ) तुम दोनों ( निरमन्थतम् ) राष्ट्रैश्वर्य को निष्पन्न करो—सिद्ध करो ( यत्-ईळिता ) जब तुम राष्ट्रैश्वर्य के निष्पादन में युक्त होवो तब ( मदेन वि ) आनन्द से विराजमान होकर ( निर्-अमन्थतम् ) राष्ट्रैश्वर्य को सिद्ध करते हो ॥ ४ ॥

भावार्थ—बुद्धिमान् सभापति और सेनापति राष्ट्रैश्वर्य को सिद्ध करते हैं और आनन्द से विराजमान हुए प्रजा के सुख को भी सिद्ध करते हैं ॥ ४ ॥

विश्वे देवा अकृपन्त समीच्योर्निष्पतन्त्योः ।
नासत्यावब्रुवन् देवाः पुनरा वहतादिति ॥ ५ ॥

विश्वे । देवाः । अकृपन्त । सम्ऽईच्योः । निःऽपतन्त्योः । नासत्यौ । अब्रुवन् ।
देवाः । पुनः । आ । वहतात् । इति ॥ ५ ॥

संस्कृतान्वयार्थः—( निष्पतन्त्योः समीच्योः ) राष्ट्रैश्वर्याय निरन्तरं प्रगतिं कुर्वाणयोः सम्यक् सहयोगे वर्त्तमानयोः कर्म ( विश्वे देवाः-अकृपन्त ) सर्वे विद्वांस

ऋषयो बलं प्रयच्छन्ति-समर्थयन्ति ( नासत्यौ देवाः-अब्रुवन् ) हे सत्याचरणवन्तौ सभासेनेशौ ! विद्वांसो घोषयन्ति यत् ( पुनः-आवहतात्-इति ) पुनः पुनः राष्ट्रं वह, इति प्रत्येकदृष्ट्या खल्वेकवचनम्, पुनः पुनस्तत्पदं गृहीत्वा कार्यं कुरु ॥ ५ ॥

भाषान्वयार्थ—( निष्पतन्त्योः समीच्योः ) राष्ट्रैश्वर्य के लिये निरन्तर प्रगति करते हुए भलीभाँति सहयोग में वर्त्तमान हुए उन सभापति और सेनापति तुम दोनों के कर्म को ( विश्वे देवाः-अकृपन्त ) समस्त विद्वान् ऋषिजन सामर्थ्य देते हैं ( नासत्यौ देवाः-अब्रुवन् ) हे सत्याचरण वाले सभापति और सेनापति ! विद्वान् जन घोषित करते हैं कि ( पुनः-आवहतात्-इति ) पुनः पुनः राष्ट्र को वहन करो अर्थात् पुनः पुनः स्वकीयपद ग्रहण करके कार्य करो ॥ ५ ॥

भावार्थ—राष्ट्रैश्वर्य के लिये निरन्तर प्रगति करते हुए परस्पर सहयोग में वर्त्तमान हुए सभापति और सेनापतियों के कर्म को समस्त विद्वान् बल देवें और अनुमति देवें कि वे राष्ट्र का वहन करें—चलावें ॥ ५ ॥

मधुमन्मे परायणं मधुमत्पुनरायनम् ।
ता नो देवा देवतया युवं मधुमतस्कृतम् ॥ ६ ॥

मधुऽमत । मे पराऽअयनम् । मधुऽमत । पुनः । आऽअयनम् । ता । नः । देवा । देवतया । युवम् । मधुऽमतः । कृतम् ॥ ६ ॥

संस्कृतान्वयार्थः—( मे परायणं मधुमत् ) हे सभासेनेशौ ! युवाभ्यां चालिते रक्षिते राष्ट्रे मम राष्ट्रपतेः परायणं बहिर्गमनं मधुमद् भवतु यत्र गच्छामि तत्रस्थजनेभ्यः कल्याणमयं बहिर्गमनं भवतु ( पुनः-आयनम्-मधुमत् ) तत्र कार्यं विधाय स्वराष्ट्रे पुनरागमनं मधुमद् भवतु स्वप्रजाभ्यः कल्याणमयं भवतु ( ता देवा युवम् देवतया नः-मधुमतः कृतम् ) तौ विद्वांसौ युवां स्वविद्वत्तया-योग्यतयाऽस्मान् मधुयुक्तान्-आनन्दयुक्तान् कुरुतम् ॥ ६ ॥

भाषान्वयार्थ—( मे परायणं मधुमत् ) हे राजसभेश और सेनापति तुम्हारे द्वारा चालित और रक्षित राष्ट्र में मुझ राष्ट्रपति का बहिर्गमन मधुमय हो—जहाँ मैं जाऊँ वहाँ के प्रजाजनों के लिये भी कल्याणमय हो ( पुनः-आयनं मधुमत् ) बाहर से कार्य साधकर फिर स्वराष्ट्र में आना मधुमय हो—स्वप्रजाजन के लिये कल्याणमय हो ( ता देवा युवम् देवतया नः-मधुमतः कृतम् ) वे तुम विद्वान् अपनी विद्वत्ता के द्वारा हमको मधुयुक्त—आनन्दयुक्त करो ॥ ६ ॥

भावार्थ—कुशल राजसभेश तथा सेनेश के द्वारा सञ्चालित तथा रक्षित राष्ट्र में वर्त्तमान राष्ट्रपति का अन्य राष्ट्र में जाना मधुमय अर्थात् कल्याणकारी हो वहाँ की प्रजाओं के लिये भी तथा अपने राष्ट्र में फिर आगमन भी कल्याणकारी हो ऐसे सभेश और सेनेश स्वराष्ट्रवासियों को कल्याण से युक्त करें ॥ ६ ॥



# पञ्चविंशं सूक्तम्

ऋषिः—पूर्ववत् ।
देवता—सोमः ।
छन्दः—१, २, ६, १०, ११ आस्तारपंक्तिः, ३-५ आर्षी निचृत् पंक्तिः, ७-९ आर्षी विराट् पंक्तिः ।
स्वरः—पञ्चमः ।
विषयः—अत्र सूक्ते सोमशब्देन परमात्मगुणा उपदिश्यन्ते ।
इस सूक्त में सोम शब्द से परमात्मा के गुणों का उपदेश है ।

भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अधा ते सख्ये अन्धसो वि वो मदे रणन् गावो न यवसे विवक्षसे ॥१॥

भद्रम् । नः । अपि । वातय । मनः । दक्षम् । उत । क्रतुम् । अध । ते । सख्ये । अन्धसः । वि । वः । मदे । रणन् । गावः । न । यवसे । विवक्षसे ॥ १ ॥

**संस्कृतान्वयार्थः**—( नः-मनः-दक्षम्-उत क्रतुं भद्रम्-अपि वातय ) हे सोम शान्तस्वरूप परमात्मन् ! त्वमस्माकं मनोऽन्तः करणं तथा प्राणबलं "दक्षो बलनाम" [ निघ० २ । ८ ] 'प्राणा वै दक्षः' [ जै० ३ । ६२ ] ज्ञानेन्द्रियबलं, एवं कर्म-कर्मेन्द्रियपरिवर्त्तनं भद्रं कल्याणमार्गं प्रति चालय ( अध ) अनन्तरौ ( ते-अन्धसः सख्ये ) तव सोमस्य "अन्धः सोमः" [ काठ० ३४ । १४ ] शान्तस्वरूपस्य परमात्मनो मित्रभावे वर्त्तमाना वयम् ( रणन् ) रममाणाः स्याम ( वः-मदे वि ) तव हर्षप्रदस्वरूपे विशिष्टं वर्त्तेमहि । ( गावः-न-यवसे ) यथा गावो घासे वर्तन्ते । ( विवक्षसे ) त्वं महान् असि ॥ १ ॥

**भाषान्वयार्थ**—( नः-मनः दक्षम् ) हे शान्तस्वरूप परमात्मन् ! तू हमारे मन को तथा प्राणबल को ( उत क्रतुं भद्रम्-अपि वातय ) और ज्ञानेन्द्रिय बल को एवं कर्मेन्द्रिय व्यापार को कल्याण मार्ग के प्रति चला ( अध ) पुनः ( ते-अन्धसः सख्ये ) तुझ शान्त स्वरूप परमात्मा के मित्र भाव में ( रणन् ) रममाण होवें । ( वः-मदे वि ) तेरे हर्षप्रद स्वरूप में विशेष रूप से बढ़ते रहें । ( गावः-नः यवसे ) गौवें जैसे घास में रमती है ( विवक्षसे ) तू महान् है ॥ १ ॥

**भावार्थ**—परमात्मा के मित्रभाव में रहने पर वह हमारे मन, प्राणबल और इन्द्रियों के बल को कल्याण मार्ग की ओर चलाता है । उसके आश्रय पर ऐसे आनन्द में रमण करते हैं जैसे गौवें घास के अन्दर रमण करती हैं ॥ १ ॥

हृदिस्पृशस्त आसते विश्वेषु सोम धामसु ।
अधा कामा इमे मम वि वो मदे वि तिष्ठन्ते वसूयवो विवक्षसे ॥ २ ॥

हृदिऽस्पृशः । ते । आसते । विश्वेषु । सोम । धामऽसु । अध । कामाः । इमे । मम । वि । वः । मदे । वि । तिष्ठन्ते । वसुऽयवः । विवक्षसे ॥ २ ॥

**संस्कृतान्वयार्थः**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( विश्वेषु, धामसु ) समस्तेषु स्थानेषु सर्वत्रेत्यर्थः ( ते ) तुभ्यं त्वा प्राप्तुम् ( हृदिस्पृशः ) हृदयं स्पृशन्तः-हृदयगताः ( इमे मम कामाः ) एते ममाभिलाषाः ( आसते ) वर्त्तन्ते। ( अध ) अतः ( वः-मदे वि वसुयवः-वितिष्ठन्ते ) तव हर्षप्रदस्वरूपे विशिष्टभावेन वासमिच्छन्तो जना उपासका विराजन्ते ( विवक्षसे ) यतस्त्वं महानसि ॥ २ ॥

**भाषान्वयार्थ**—( सोम ) हे शान्तस्वरूप परमात्मन् । ( विश्वेषु धामसु ) समस्त स्थानों में अथात् सर्वत्र ( ते ) तेरे लिये-तुझे प्राप्त करने को ( हृदिस्पृशः ) हृदय को स्पर्श करने वाले-हृदयगत ( इमे मम कामाः ) ये मेरी कामनायें ( आसते ) रहती हैं। ( अधः ) इसलिये ( वः-मदे वि वसुयवः-वि तिष्ठन्ते ) तेरे हर्षप्रद स्वरूप में विशेष भावना से वास चाहने वाले उपासक जन विराजते हैं। ( विवक्षसे ) क्योंकि तू महान् है ॥ २ ॥

**भावार्थ**—सभी स्थानों में तुझे प्राप्त करने को, तेरे अन्दर वास के इच्छुक उपासकों की कामनायें बनी रहती हैं ॥ २ ॥

उत व्रतानि सोम ते प्राहं मिनामि पाक्या ।
अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥ ३ ॥

उत । । व्रतानि । सोम । ते । प्र । अहम् । मिनामि । पाक्या । अध । पिताऽइव । सूनवे । वि । वः । मदे । मृळ । नः । अभि । चित् । वधात् । विवक्षसे ॥ ३ ॥

**संस्कृतान्वयार्थः**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( उत ) अपि-अवश्यम् ( ते व्रतानि ) तव नियमान्-आदेशान् ( अहम् ) अहमुपासकः खलु ( पाक्या प्र-मिनामि ) विपक्वप्रज्ञया प्रगच्छामि-प्रकृष्टं पालयामि *"मिनाति, गतिकर्मा"* *[ निघ० २।१४ ]* ( अध ) अनन्तरम् ( सूनवे पिता-इव ) त्वं च पुत्राय पिता-इव यथा भवति तथा ( नः-मृळ ) अस्मान् सुखय ( अभिचित्-वधात् ) कदाचिद् वधादपि सुखय रक्षेत्यर्थः ( वः-मदे वि ) तव हर्षप्रदशरणे विशिष्टतया वयं भवेम ( विवक्षसे ) त्वं महानसि ॥ ३ ॥

**भाषान्वयार्थ**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( उत ) अवश्य ( ते व्रतानि ) तेरे नियमों-आदेशों को ( अहम् ) मैं उपासक ( पाक्या प्र-मिनामि ) विपक्व प्रज्ञा से प्रकृष्ट रूप में प्राप्त होता हूँ पालन करता हूँ ( अध ) पुनः ( सूनवे पिता-इव ) तू पुत्र के लिये पिता की भाँति वर्त्तता है ( नः मृळ ) हमें सुखी कर ( अभिचित्-वधात् ) कदाचिद् होने वाले घातक प्रहार

से भी रक्षा कर ( वः-मदे वि ) तेरे हर्षप्रदशरण में विशेष रूप से हम रहें ( विवक्षसे ) तू महान् है ॥ ३ ॥

भावार्थ—विशेष परिपक्व बुद्धि से परमात्मा के आदेशों को पालन करना चाहिये । वह पुत्र को पिता के समान होने वाले घातक प्रहार से बचाता है ॥ ३ ॥

समु प्र यन्ति धीतयः सर्गासोऽवताँ इव ।
क्रतुं नः सोम जीवसे वि वो मदे धारया चमसाँ इव विवक्षसे ॥ ४ ॥

सम् । ऊँ इति । प्र । यन्ति । धीतयः । सर्गासः । अवतान्ऽइव । क्रतुम् । नः । सोम । जीवसे । वि । वः । मदे । धारय । चमसान्ऽइव । विवक्षसे ॥ ४ ॥

संस्कृतान्वयार्थः—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( क्रतुम् ) त्वां कार्यसाधकं ( धीतयः ) प्रज्ञाः कर्मप्रवृत्तयश्च *"धीतिः प्रज्ञा"* [ *निरुक्त १० । ४४* ] *"धीतिभिः कर्मभिः"* [ *निरु० ११ । १६* ] ( उ ) निरन्तरम् ( सम्प्रयन्ति ) सम्यक् प्रगतिं कुर्वन्ति ( सर्गासः-अवतान्-इव ) उदकप्रवाहा यथा निम्नप्रदेशान् *"सर्गाः उदकनाम"* [ *निघं० १ । १२।* ] *"अवतः कूपनाम"* [ *निघं० ३ । २३* ] ( नः-जीवसे ) अस्माकं जीवनाय ( चमसान्-इव धारय ) त्वमस्मान् चमसान् त्वदानन्दरसस्य पात्रभूतान् धारय-स्वीकुरु ( वः-मदे वि ) तव हर्षनिमित्ते शरणे वयं विशिष्टतया स्याम ( विवक्षसे ) त्वं महानसि ॥ ४ ॥

भाषान्वयार्थ—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( क्रतुम् ) तुझ कार्य साधक को ( धीतयः ) प्रज्ञायें तथा कर्म-प्रवृत्तियाँ ( उ ) निरन्तरम् ( सम्प्रयन्ति ) सम्यक् प्राप्त होती हैं ( सर्गासः-अवतान्-इव ) उदक-प्रवाह जैसे निम्न प्रदेशों को प्राप्त होते हैं ( नः जीवसे ) हमारे जीवन के लिये ( चमसान्-इव धारय ) अपने आनन्द रस के पात्र भूत हम उपासकों को धारण कर स्वीकार कर ( वः मदे वि ) तेरे हर्ष निमित्त शरण में हम विशेष रूप से रहें ( विवक्षसे ) तू महान् है ॥ ४ ॥

भावार्थ—उपासकों की प्रज्ञायें और कर्म प्रवृत्तियाँ परमात्मा की ओर ऐसे झुकी रहती हैं जैसे जलप्रवाह निम्न स्थान की ओर झुके रहते हैं । वह हमारे जीवन के लिये हमें अपने आनन्द रसों का पात्र बनाता है । हमें उसकी शरण में रहना चाहिये ॥ ४ ॥

तव त्ये सोम शक्तिभिर्निकामासो व्यृण्विरे ।
गृत्सस्य धीरास्तवसो वि वो मदे व्रजं गोमन्तमश्विनं विवक्षसे ॥ ५ ॥

तव । त्ये । सोम । शक्तिऽभिः । निऽकामासः । वि । ऋण्विरे । गृत्सस्य । धीराः । तवसः । वि । वः । मदे । व्रजम् । गोऽमन्तम् । अश्विनम् । विवक्षसे ॥ ५ ॥

**संस्कृतान्वयार्थः**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( गृत्सस्य तपसः-तव ) स्तोतृभिरभिकाङ्क्षितस्य *"गृत्स अभिकाङ्क्षितः"* [ *ऋ० २ । १९ । ८ दयानन्दः* ] बलवतस्तव ( त्ये निकामासः-धीराः ) ते नियमेन नित्यं वा त्वां कामयमाना धीमन्तो ध्यानिन उपासकाः *"धीरसीत्याह यद्धि मनसा ध्यायति* [ *तै० सं० ६ । १ । ७ । ४* ] ( शक्तिभिः-ऋण्विरे ) साधनाकर्मभिर्योगाभ्यासैः" *'शक्तिः कर्मनाम"* [ *निघं० २ । १* ] त्वां प्राप्नुवन्ति ( गोमन्तम्-अश्विनं व्रजम् ) प्रशस्तेन्द्रियवन्तं प्रशस्तमनस्विनं शरीररूपं स्थानं च प्राप्नुवन्ति ( वः-मदे वि ) तव हर्षप्रदस्वरूपनिमित्ते विशिष्टं स्तुवन्तीति शेषः ( विवक्षसे ) त्वं महानसि ॥ ५ ॥

**भाषान्वयार्थ**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( गृत्सस्य तवसः-तव ) श्रोताओं द्वारा वाञ्छित तुझ बलवान् के ( त्ये निकामासः-धीराः ) वे नियम से या नित्य तुझे चाहने वाले ध्यानी उपासक ( शक्तिभिः-ऋण्विरे ) साधना कर्मों-योगाभ्यासों के द्वारा तुझे प्राप्त होते हैं ( गोमन्तम्-अश्विनं व्रजम् ) प्रशस्त इन्द्रियों वाले और प्रशस्त मन वाले शरीर रूप स्थान को प्राप्त होते हैं ( वः-मदे वि ) तेरे हर्षप्रद स्वरूप के निमित्त विशेष स्तुति करते हैं ( विवक्षसे ) तू महान् है ॥ ५ ॥

**भावार्थ**—वाञ्छनीय परमात्मा का नियम से नित्य योगाभ्यास आदि द्वारा ध्यान करने वाले उपासक जन शोभन इन्द्रिय वाले और प्रशस्त मन वाले शरीर को प्राप्त होते हैं। तभी वे परमात्मा का हर्षप्रद स्वरूप अनुभव करते हैं ॥ ५ ॥

**पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् ।**
**समाकृणोषि जीवसे वि वो मदे विश्वा संपश्यन्भुवना विवक्षसे ॥ ६ ॥**

पशुम् । नः । सोम । रक्षसि । पुरुऽत्रा । विऽस्थितम् । जगत् । सम्ऽआकृणोषि । जीवसे । वि । वः । मदे । विश्वा । सम्ऽपश्यन् । भुवना । विवक्षसे ॥ ६ ॥

**संस्कृतान्वयार्थः**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( नः ) अस्माकं (पशुम्-रक्षसि) पश्यन्तं ज्ञानवन्तमात्मानं *"आत्मा वै पशुः"* [ *कौ० १२ । ७* ] रक्षसीति शेषः ( जीवसे ) जीवनाय ( विश्वा भुवना पश्यन् ) समस्तानि भूतानि लक्षयन् ( पुरुत्रा विष्ठितं जगत् ) बहुत्र विविधतया स्थितं जगच्च ( समाकृणोषि ) सम्यक् प्रकटयसि ( वः-मदे वि ) तव हर्षप्रदस्वरूपनिमित्तं विशिष्टतया त्वां प्राप्नुमः ( विवक्षसे ) त्वं महानसि ॥ ६ ॥

**भाषान्वयार्थ**—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( नः ) हमारे (पशुम्-रक्षसि) देखने वाले-ज्ञान वाले आत्मा की तू रक्षा करता है ( जीवसे ) जीवन के लिये ( विश्वा भुवना पश्यन् ) समस्त भूतों को लक्ष करता हुआ ( पुरुत्रा विष्ठितं जगत् ) सर्वत्र विविध रूप से स्थित जगत् को ( समाकृणोषि ) सम्यक् प्रकट करता है उत्पन्न करता है ( वः-मदे वि ) तेरे हर्षप्रद स्वरूप के निमित्त विशेष रूप से तुझे प्राप्त करते हैं ( विवक्षसे ) तू महान् है ॥ ६ ॥

भावार्थ—परमात्मा आत्मा का रक्षक है। सभी प्राणियों के जीवन के लिये सर्व प्रकार की विविध सृष्टि करता है। उसके हर्षप्रद स्वरूप को प्राप्त करना चाहिये ॥ ६ ॥

**त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।**
**सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥ ७ ॥**

त्वम् । नः । सोम । विश्वतः । गोपाः । अदाभ्यः । भव । सेध । राजन् । अप । स्रिधः । वि । वः । मदे । मा । नः । दुःऽशंसः । ईशत । विवक्षसे ॥ ७ ॥

संस्कृतान्वयार्थः—( सोम ) हे शान्तस्वरूप परमात्मन्। ( त्वम्-अदाभ्यः-नः-विश्वतः-गोपाः-भव ) त्वं केनाप्यहिंस्योऽस्माकं सर्वतो रक्षकः स्याः ( राजन् ) हे सर्वत्र राजमान परमात्मन्! ( स्रिधः-अपसेध ) हिंसकान् *"स्रिधः हिंसकान्"* [ ऋ० १ । ३६ । ७ *दयानन्दः* ] दूरीकुरु नाशय वा (दुःशंसः-नः-मा-ईशत) दुष्टस्य शंसकोऽहितवक्ताऽस्मान् मा स्वामित्वं करोतु ( वः मदे वि ) त्वां हर्षनिमित्तं विशिष्टतया मन्यामहे ( विवक्षसे ) त्वं महानसि ॥ ७ ॥

भाषान्वयार्थ—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( त्वम्-अदाभ्यः-नः-विश्वतः-गोपाः-भव ) तू किसी से भी हिंसित न होने वाला हमारा सर्व प्रकार से रक्षक हो ( राजन् ) हे सर्वत्र प्रकाशमान परमात्मन् ! ( स्रिधः-अपसेध ) हिंसकों को दूर कर—नष्ट कर ( दुःशंसः-नः-मा-ईशत) दुष्ट-प्रशंसक अहितवक्ता हम पर अधिकार न करे ( वः-मदे वि ) तुझे हर्षनिमित्त विशेष रूप से मानते हैं ( विवक्षसे ) तू महान् है ॥ ७ ॥

भावार्थ—परमात्मा किसी से भी बाधित न होने वाला सदा रक्षक और हिंसकों को नष्ट करने वाला है। हम पर अन्यथा अधिकार करने वाले न हों। अतः उसके विशेष हर्षप्रद स्वरूप को हम धारण करें। वह महान् है ॥ ७ ॥

**त्वं नः सोम सुक्रतुर्वयोधेयाय जागृहि ।**
**क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विवक्षसे ॥ ८ ॥**

त्वम् । नः । सोम । सुऽक्रतुः । वयःऽधेयाय । जागृहि । क्षेत्रवित्ऽतरः । मनुषः । वि । वः । मदे । द्रुहः । नः । पाहि । अंहसः । विवक्षसे ॥ ८ ॥

संस्कृतान्वयार्थः—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( नः ) अस्मभ्यम् ( सुक्रतुः-वयोधेयाय ) शोभनप्रज्ञानवान् शोभनप्रज्ञानप्रदः-जीवनस्य धारणाय ( जागृहि ) जागरय अन्तर्गतो णिजर्थः ( क्षेत्रवित्तरः ) देहक्षेत्रस्यातिशयेन प्रापयिता ( द्रुहः-मनुषः-अंहसः ) द्रोग्धुर्मनुष्यात् तथा पापात् ( नः पाहि ) अस्मान् रक्ष ( वः-मदे वि ) त्वां हर्षनिमित्तं स्तुमः ( विवक्षसे ) त्वं महानसि ॥ ८ ॥

भाषान्वयार्थ—( सोम ) हे शान्तस्वरूप परमात्मन् ! ( नः ) हमारे लिये ( सुक्रतुः ) तू शोभनप्रज्ञा-प्रद है ( वयोधेयाय ) जीवन धारण कराने के लिये ( जागृहि ) हमें सावधान कर ( क्षेत्रवित्तरः ) हमारे देह क्षेत्र को प्राप्त कराने वाला तू ( द्रुहः-मनुषः-अंहसः ) द्रोह करने वाले मनुष्य से एवं पाप से ( नः पाहि ) हमारी रक्षा कर ( वः मदे वि ) हम हर्ष के निमित्त तेरी स्तुति करते हैं ( विवक्षसे ) तू महान् है ॥ ८ ॥

भावार्थ—परमात्मा उपासक को उत्तम बुद्धि देने वाला एवं जीवन-प्रदाता है तथा उत्तम देह को भी प्राप्त कराने वाला है। वह द्रोही मनुष्य और पाप से भी बचाता है। इसलिये विशेष हर्ष के निमित्त उसकी स्तुति करनी चाहिये ॥ ८ ॥

त्वं नो वृत्रहन्तमेन्द्रस्येन्दो शिवः सखा ।
यत्सीं हवन्ते समिथे वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥ ९ ॥

त्वम् । नः । वृत्रहन्ऽतम । इन्द्रस्य । इन्दो इति । शिवः । सखा । यत् । सीम् । हवन्ते । सम्ऽइथे । वि । वः । मदे । युध्यमानाः । तोकऽसातौ । विवक्षसे ॥ ९ ॥

संस्कृतान्वयार्थः—( वृत्रहन्तम-इन्दो ) हे ! अत्यन्त-पापनाशक-आनन्दरसपूर्ण परमात्मन् ( त्वम्-इन्द्रस्य शिवः सखा ) त्वमात्मनः कल्याणसाधकः सखाऽसि ( तोकसातौ समिथे ) प्रजानां सन्ततीनां प्राप्तिरूपे संग्रामे गृहस्थाश्रमे ( युध्यमानाः ) संघर्षं कुर्वाणाः ( यत् सीं हवन्ते ) त्वामामन्त्रयन्तेऽर्चन्ति ( वः-मदे वि ) त्वां हर्षनिमित्तं विशिष्टतया स्तुमः ( विवक्षसे ) त्वं महानसि ॥ ९ ॥

भाषान्वयार्थ—( वृत्रहन्तम-इन्दो ) हे अत्यन्त पापविनाशक ! आनन्दरसपूर्ण परमात्मन् ! ( त्वम्-इन्द्रस्य शिवः सखा ) तू आत्मा का कल्याण-साधक मित्र है । ( तोकसातौ समिथे ) सन्तानों के प्राप्तिरूप संग्राम में—गृहस्थ आश्रम में ( युध्यमानाः ) संघर्ष करते हुए ( हवन्ते ) अर्चित करते हैं। ( वः-मदे वि ) तेरी हर्षनिमित्त विशिष्ट रूपसे हम स्तुति करते हैं। ( विवक्षसे ) तू महान् है ॥ ९ ॥

भावार्थ—परमात्मा उपासक के पापों को नष्ट करने वाला और आनन्दरस से पूर्ण करने वाला कल्याणकारी मित्र है। गृहस्थ आश्रम में सन्तानों की प्राप्ति के लिये वह स्तुति करने योग्य है ॥ ९ ॥

अयं घ स तुरो मद इन्द्रस्य वर्धत प्रियः ।
अयं कुक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥ १० ॥

अयम् । घ । सः । तुरः । मदः । इन्द्रस्य । वर्धत । प्रियः । अयम् । कक्षीवतः । महः । वि । वः । मदे । मतिम् । विप्रस्य । वर्धयत् । विवक्षसे ॥ १० ॥

**संस्कृतान्वयार्थः**—( इन्द्रस्य ) आत्मनः ( अयं घ सः ) एष खलु सः ( तुरः प्रियः-मदः-वर्धत ) त्वरणशीलः प्रियो हर्षकरः सोमः शान्तस्वरूपः परमात्मा तस्यात्मनो हृदये वर्धते—साक्षाद् भवति। ( महः कक्षीवतः-विप्रस्य-अयं मतिम्-वर्धयत् ) महतः कक्ष्यावतः *"कक्षीवान् कक्ष्यावान्"* [ *निरु ६ । १०* ] संयमकक्षागतस्य विप्रस्य स्तुति-प्रेरकस्य बुद्धिं वर्धयति। ( वः-मदे वि ) त्वां हर्षनिमित्तं विशिष्टतया स्तुमः ( विवक्षसे ) त्वं महानसि ॥ १० ॥

भाषान्वयार्थ—( इन्द्रस्य ) आत्मा का ( अयं घ सः ) यह सचमुच वह ( तुरः प्रियः-मदः-वर्धत ) शीघ्र स्वभाव वाला प्रिय हर्षदायक शान्तस्वरूप परमात्मा आत्मा के हृदय में बढ़ता है—साक्षात् होता है। ( महः कक्षीवतः-विप्रस्य-अयं मतिम्-वर्धयत् ) महान् तथा संयम बांधने वाले स्तुति कर्त्ता विद्वान् की बुद्धि को बढ़ाता है। ( वः-मदे-वि ) तेरी हर्षनिमित्त विशिष्ट रूप से हम स्तुति करते हैं। ( विवक्षसे ) तू महान् है ॥ १० ॥

भावार्थ—शीघ्र प्रियकारी परमात्मा उपासक के हृदय में साक्षात् होता है। वह संयमी उपासक की बुद्धि को बढ़ाता है, उन्नत करता है। इसलिये उसकी स्तुति करनी चाहिये ॥ १० ॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः।
अयं सप्तभ्य आ वरं वि वो मदे प्रान्धं श्रोणं च तारिषद्विवक्षसे ॥११॥

अयम्। विप्राय। दाशुषे। वाजान्। इयर्ति। गोऽमतः। अयम्। सप्तऽभ्यः। आ। वरम्। वि। वः। मदे। प्र। अन्धम्। श्रोणम्। च। तारिषत्। विवक्षसे ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अयम् ) एष शान्तस्वरूपः परमात्मा ( दाशुषे विप्राय ) स्वात्मसमर्पणं कृतवते स्तोत्रे ( गोमतः-वाजान्-इयर्ति ) स्तुतियोग्यान्-अमृतान्नभोगान् *"अमृतोऽन्नं वै वाजः"* [ *जै० ३ । १८३* ] प्रेरयति प्रयच्छति ( अयं सप्तभ्यः ) एष सृप्तेभ्यः प्रगतिशीलेभ्य उपासकेभ्यः ( वरम्-आ० ) वरणीयं मोक्षपदमावहति। (अन्धं श्रोणं च प्र तारिषत् ) आध्यानीयं श्रोतव्यं च *"श्रोणं श्रोतव्यम्"* [ *ऋक् १ । १६१ । १० दयानन्दः* ] तेभ्यः-मोक्षानन्दं प्रवर्धयति ( वः-मदे वि ) त्वां हर्षनिमित्तं विशिष्टतया स्तुमः ( विवक्षसे ) त्वं महानसि ॥ ११ ॥

भाषान्वयार्थ—( अयम् ) शान्तस्वरूप परमात्मा ( दाशुषे विप्राय ) स्वात्म-समर्पण-कर्त्ता स्तुति करने वाले के लिये ( गोमतः-वाजान्-इयर्ति ) स्तुतियोग्य अमृत-अन्न भोगों को प्रदान करता है ( अयं सप्तभ्यः ) यह प्रगतिशील उपासकों के लिये ( वरम्-आ० ) वरणीय मोक्ष-पद को प्राप्त कराता है। ( अन्धं श्रोणं च प्र तारिषत् ) भली भांति ध्यान करने योग्य और

श्रवण करने योग्य उस मोक्षानन्द को बढ़ाता है ( वः-मदे वि ) हर्षनिमित्त विशेष रूप से हम तेरी स्तुति करते हैं ( विवक्षसे ) तू महान् है ॥ ११ ॥

भावार्थ—स्वात्मसमर्पण-कर्त्ता उपासक के लिये परमात्मा प्रशंसनीय अमृत भोगों को प्रदान करता है। उन प्रगतिशील उपासकों के लिये श्रवण करने और साक्षात् करने योग्य उत्कृष्ट वर मोक्षानन्द को बढ़ाता है। उसकी स्तुति करनी चाहिये ॥ ११ ॥



# षड्विंशं सूक्तम्

ऋषिः—पूर्ववत् ।

देवताः—पूषा ।

छन्दः—१ उष्णिक् । ४ आर्षी निचृदुष्णिक् । ३ ककुम्मत्यनुष्टुप् । ५-८ पादनिचृदनुष्टुप् । ९ आर्षी विराडनुष्टुप् । २ आर्ची स्वराडनुष्टुप् ।

स्वरः—१, ४ ऋषभः । २, ३, ५-९ गान्धारः ।

विषयः—अस्मिन् सूक्ते पूषन्नामतः परमात्मा तद्गुणोपकारस्तुतयश्च वर्ण्यन्ते ।

इस सूक्त में पूषा नाम से परमात्मा और उसके गुण उपकार स्तुति का उपदेश है ।

प्र ह्यच्छा मनीषाः स्पार्हा यन्ति नियुतः ।
प्र दस्रा नियुद्रथः पूषा अविष्टु माहिनः ॥ १ ॥

प्र । हि । अच्छ । मनीषाः । स्पार्हाः । यन्ति । निऽयुतः । प्र । दस्रा । नियुत्ऽरथः । पूषा । अविष्टु । माहिनः ॥ १ ॥

**संस्कृतान्वयार्थः**—( स्पार्हाः ) अस्माकं वाञ्छनीयाः (नियुतः) नियताः स्थिराः प्रत्यहं कर्त्तव्याः ( मनीषाः ) मनस ईषा मानसिक्यः स्तुतयः ( अच्छ हि ) अभिमुखमेव ( प्र यन्ति ) पूषणं पोषकं परमात्मानं प्रकृष्टं गच्छन्ति ( दस्रा माहिनः ) दर्शनीयः सुस्थाने आकारादेशश्छान्दसः, महान् *"माहिनः-महन्नाम"* [ *निघ० ३ । ३* ] ( नियुद्रथः ) स्थिरो नित्यो रमणयोग्यो मोक्षो यस्य सः ( पूषा ) पोषणकर्त्ता परमात्मा ( प्र-अविष्टु ) प्रकृष्टं स्थानमवतु-रक्षतु-रक्षतीत्यर्थः ॥ १ )

**भाषान्वयार्थ**—( स्पार्हाः ) हमारी वाञ्छनीय ( नियुतः ) नियत-स्थिर प्रतिदिन करने योग्य ( मनीषाः ) मानसिक स्तुतियां ( अच्छ हि ) अभिमुख ही ( प्रयन्ति ) पोषक परमात्मा को प्राप्त होती हैं। ( दस्रा माहिना ) वह दर्शनीय महान् ( नियुद्रथः ) नित्यरमणयोग्य मोक्ष जिसका है ऐसा ( पूषा ) पोषणकर्त्ता परमात्मा ( प्र-अविष्टु ) उस श्रेष्ठ स्थान मोक्ष को हमारे लिये सुरक्षित रखे-रखता है ॥ १ ॥

**भावार्थ**—उपासकों की प्रशस्त मानसिक स्तुतियाँ पोषणकर्त्ता परमात्मा को जब प्राप्त

  

होती हैं तो वह दर्शनीय महान् मोक्षदाता परमात्मा उनके लिये मोक्षस्थान को सुरक्षित रखता है ॥ १ ॥

यस्य त्यन्महित्वं वाताप्यमयं जनः ।
विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनाम् ॥ २ ॥

यस्य । त्यत् । महिऽत्वम् । वाताप्यम् । अयम् । जनः । विप्रः । आ । वंसत् । धीतिऽभिः । चिकेत । सुऽस्तुतीनाम् ॥ २ ॥

**संस्कृतान्वयार्थः**—( अयं विप्रः-जनः ) सर्वप्राणिषु मेधावी जनः ( यस्य ) यस्य पूष्णः पोषयितुः परमात्मनः ( महित्वम् ) महित्वेन महत्या कृपया "व्यत्ययेन तृतीयास्थाने प्रथमा" ( त्यत्-वाताप्यम् ) तत्-वातापेः-इन्द्रस्य जीवात्मनो भोज्यम्-अन्नम् "इन्द्र उ वातापिः-स वातमाप्त्वा शरीराण्यहंन प्रतिप्रैति" *[ कौ० २० । ४ ]* ( धीतिभिः ) स्वकर्मभिः *"धीतिभिः कर्मभिः" [ निरु० ११ । १६ ]* ( आवंसत् समन्तात् सम्भजते संसेवते भुङ्क्ते सः ( सुष्टुतीनां चिकेत ) शोभनस्तुतिभिः "व्यत्ययेन तृतीयास्थाने षष्ठी" तं परमात्मानं स्मरेत्-स्मरति ॥ २ ॥

**भाषान्वयार्थ**—(अयं विप्रः-जनः) सब प्राणियों में मेधावि जन ( यस्य) जिस पोषण करने वाले परमात्मा की ( महित्वम् ) महती कृपा से ( त्यत्-वाताप्यम् ) उस जीवात्मा के अन्नादि भोग को ( धीतिभिः ) अपने कर्मों से-अपने कर्मानुसार ( आवंसत् ) भली भांति भोगता है ( सुष्टुतीनां चिकेत ) उत्तम स्तुतियों द्वारा परमात्मा का स्मरण करे ॥ २ ॥

**भावार्थ**—बुद्धिमान् मनुष्य को चाहिये कि जिस पोषण-कर्त्ता परमात्मा की कृपा से अन्नादि भोग को अपने कर्मानुसार प्राप्त करता है सेवन करता है उस परमात्मा को स्तुतियों द्वारा स्मरण करे ॥ २ ॥

स वेद सुष्टुतीनामिन्दुर्न पूषा वृषा ।
अभि प्सुरः प्रुषायति व्रजं न आ प्रुषायति ॥ ३ ॥

सः । वेद । सुऽस्तुतीनाम् । इन्दुः । न । पूषा । वृषा । अभि । प्सुरः । प्रुषायति । व्रजम् । नः । आ । प्रुषायति ॥ ३ ॥

**संस्कृतान्वयार्थः**—( पूषा ) पोषयिता परमात्मा ( इन्दुः- न वृषा ) चन्द्र इवानन्दवर्षकः ( सः-सुष्टुतीनां वेद ) स खल्वस्माकं शोभनस्तुतीर्वेद जानाति तदनुरूपमनुग्रहं करोति "द्वितीयास्थाने षष्ठी व्यत्ययेन" ( प्सुरः-अभि प्रुषायति ) साक्षाद्भूतः सन् स्वानन्दरसेनास्मानुपासकान् सिञ्चति ( नः-व्रजम्-आप्रुषायति ) अस्माकमिन्द्रियव्रजं स्वानन्दरसेन प्रवाहयति ॥ ३ ॥

**भाषान्वयार्थ**—( पूषा ) पोषणकर्त्ता परमात्मा ( इन्दुः-न वृषा ) चन्द्रमा की भाँति आनन्दवर्षक ( सः-सुष्टुतीनां वेद ) वह हमारी शोभन स्तुतियों को जानता है तदनुसार अनुग्रह करता है ( प्सुरः-अभि प्रुषायति ) साक्षात् हुआ अपने आनन्दरस से हम उपासकों को सींचता है—तृप्त करता है ( नः-व्रजम्-आप्रुषायति ) हमारे इन्द्रियस्थान को अपने आनन्दरस से भरपूर करता है ॥ ३ ॥

**भावार्थ**—पोषणकर्त्ता परमात्मा स्तुतियों द्वारा चन्द्रमा की भाँति अपने आनन्द रस से उपासकों को तृप्त करता है और प्रत्येक इन्द्रियस्थान में भी अपने आनन्द की अनुभूति कराता है ॥ ३ ॥

**मंसीमहि त्वा वयमस्माकं देव पूषन् ।**
**मतीनां च साधनं विप्राणां चाधवम् ॥ ४ ॥**

मंसीमहि । त्वा । वयम् । अस्माकम् । देव । पूषन् । मतीनाम् । च । साधनम् । विप्राणाम् । च । आऽधवम् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( पूषन् देव ) हे पोषयितर्देव परमात्मन् ! ( अस्माकं मतीनां च ) अस्मद्विधानां तव अस्तित्वं मन्यमानानां मेधाविनाम् *"मतयो मेधाविनाम"* [ *निघं० ३ । १५* ] ( साधनम् ) साधयितारम्, तथा ( विप्राणां च ) स्तुतिभिस्त्वां प्रीणयितॄणां च ( आधवम् ) समन्तादग्रे गमयितारं त्वाम् ( मंसीमहि ) अर्चामः-स्तुवीमहि *"मन्यते-अर्चतिकर्मा"* [ *निघं ३ । १४* ] ॥ ४ ॥

**भाषान्वयार्थ**—( पूषन् देव ) हे पोषणकर्त्ता परमात्मदेव ! ( अस्माकं मतीनां च ) हम तेरे अस्तित्व को मानने वालों के ( साधनम् ) ज्ञान एवं सुखसम्पन्न कराने वाले ( विप्राणां च) और स्तुतियों के द्वारा तुझे प्रसन्न करने वालों के ( आधवम् ) भली भांति आगे ले जाने वाले अथवा पाप कर्म से शोधने वाले तुझको ( मंसीमहि ) मानते हैं—पूजते हैं ॥ ४ ॥

**भावार्थ**—उसके अस्तित्वको मानने वाले, उस उन्नत पथपर ले जाने वाले पापनाशक परमात्मा को उपासक जन स्तुतियों द्वारा प्रसन्न करते हैं-अनुकूल बनाते हैं ॥ ४ ॥

**प्रत्यर्धिर्यज्ञानामश्वहयो रथानाम् ।**
**ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः ॥ ५ ॥**

प्रतिऽअर्धिः । यज्ञानाम् । अश्वऽहयः । रथानाम् । ऋषिः । सः । यः । मनुःऽहितः । विप्रस्य । यवयत्ऽसखः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( यज्ञानां प्रत्यर्धिः) यज्ञानां श्रेष्ठकर्मणां प्रतिवर्धकः "प्रति-पूर्वाद्-ऋधधातोर्बाहुलकादिन् प्रत्ययः" [ औणादिकः ] ( रथानाम्-अश्वहयः ) रमणीयानां पदार्थानां व्यापकप्रेरकः ( सः-यः-मनुः-हितः ) स यः खलु मननशीलानां

हितो हितकरः ( विप्रस्य यावयत्सखः ) मेधाविन उपासकस्य मिश्रणधर्मणा समाप्तिं कुर्वतां पूषा-पोषयिता ( ऋषिः ) सर्वज्ञः परमात्माऽस्ति ॥ ५ ॥

भाषान्वयार्थ—( यज्ञानां प्रत्यर्धिः ) श्रेष्ठ कर्मों का प्रतिवर्धक-अत्यन्त बढाने वाला या पोषक ( रथानाम्-अश्वहयः ) रमणीय पदार्थों का व्यापक प्रेरणा करने वाला (सः-यः-मनु-हितः) वह परमात्मा मननशील उपासकों का हितकर है ( विप्रस्य यावयत्सखः ) बुद्धिमान् उपासकों का समागम करने वाला मित्र ( ऋषिः ) सर्वज्ञ परमात्मा है ॥ ५ ॥

भावार्थ—परमात्मा समस्त श्रेष्ठ कर्मों का पोषक, रमणीय पदार्थों का महान् प्रेरक, मननशील उपासकों का हितकर मिलने वाला मित्र और पोषणकर्त्ता सर्वज्ञ है ॥ ५ ॥

आधीषमाणायाः पतिः शुचायाश्च शुचस्य च ।
वासोवायोऽवीनामा वासांसि मर्मृजत् ॥ ६ ॥

आऽधीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च । वासःऽवायः । अवीनाम् । आ । वासांसि । मर्मृजत् ॥ ६ ॥

संस्कृतान्वयार्थः—( शुचायाः-आधीषमाणायाः ) प्रकाशमानायाः-आ समन्ताद् धार्यमाणायाः-उषसः ( च ) तथा ( शुचस्य च ) प्रकाशमानस्य प्रकाशकस्य सूर्यस्य च ( पतिः ) स्वामी स पोषयिता परमात्मा ( वासः-वायः ) "अत्र वाचकलुप्तोपमालङ्कारः" वस्त्रवायस्तन्तुवाय इव ( अवीनाम् ) पृथिव्यादीनां पिण्डानाम् "इयं पृथिव्यविः" [ श० ६ । १ । २ । ३३ ] ( वासांसि ) आच्छादनानि तद्गतिमण्डलानि ( आ मर्मृजत् ) उषसा सूर्येण समन्तात्-शोधयति ॥ ६ ॥

भाषान्वयार्थ—( शुचायाः-आधीषमाणायाः ) प्रकाशमान भली भांति धारण करने योग्य उषा का ( शुचस्य च ) तथा प्रकाशमान प्रकाशक सूर्य का ( पतिः ) स्वामी व पोषक परमात्मा ( वासः-वायः ) वस्त्र बुनने वाले तन्तुवाय के समान ( अवीनाम् ) पृथिवी आदि पिण्डों के ( वासांसि ) आच्छादन-मण्डलों आवरणों को ( आ मर्मृजत् ) उषा और सूर्य के द्वारा भली भांति शोधता है ॥ ६ ॥

भावार्थ—उषा और सूर्य का स्वामी परमात्मा समस्त पृथिव्यादि पिण्डों के वस्त्ररूप मण्डलों आवरणों को उषा और सूर्य के द्वारा शोधन करता है ॥ ६ ॥

इनो वाजानां पतिरिनः पुष्टीनां सखा ।
प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अदाभ्यः ॥ ७ ॥

इनः । वाजानाम् । पतिः । इनः । पुष्टीनाम् । सखा । प्र । श्मश्रु । हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( इनः ) स पूषा पोषयिता स्वामी परमात्मा (वाजानां पतिः) बलानां स्वामी ( इनः पुष्टीनां सखा ) स परमात्मा पोषणानां पालकः सखा ( हर्यतः ) कामयमानस्य स्तोतुः ( श्मश्रु ) श्मश्रूणि सर्वाङ्गाणां रोमाणि हर्षेण ( वृथा प्रदूधोत् ) अनायासेन प्रधुनोति प्रहर्षयति ( यः-अदाभ्यः ) यः पूषा परमात्माऽहिंस्योऽस्ति ॥ ७ ॥

**भाषान्वयार्थ**—( इनः ) पोषणकर्त्ता परमात्मा जगत् का स्वामी ( वाजानां पतिः ) बलों का स्वामी ( इनः पुष्टीनां सखा ) आत्म-पुष्टि वालों का पालक स्वामी ( हर्यतः ) कामयमान स्तोता उपासक के ( श्मश्रु ) सब अंगों के रोमों को ( वृथा प्र दूधोत् ) अनायास प्रहर्षित करता है ( यः-अदाभ्यः ) जो परमात्मा अहिंसनीय है ॥ ७ ॥

**भावार्थ**—परमात्मा सब जगत् का स्वामी सब बलों का स्वामी सब आत्म-पुष्टि वालों का सखा रूप स्वामी है। कामना करने वाले उपासक का रोम हर्षित कर देता है। ऐसा वह अबाध्य स्वामी उपासनायोग्य है ॥ ७ ॥

**आ ते रथस्य पूषन्नजा धुरं ववृत्युः ।**
**विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥ ८ ॥**

आ । ते । रथस्य । पूषन् । अजाः । धुरम् । ववृत्युः । विश्वस्य । अर्थिनः । सखा । सनःऽजाः । अनपऽच्युतः ॥ ८ ॥

**संस्कृतान्वयार्थः**—( पूषन् ) हे पोषयितः परमात्मन् ( ते रथस्य धुरम् ) तव रमणीयस्य मोक्षस्य धारणं प्रापणं *"धूः धारयतेः"* [ *निरु०* ३ । ९ ] ( अजाः-आववृत्युः ) वाचः स्तुतयः *"वाग्वा अजा [ श० ६ । ४ । ४ । १५ ]* आवर्तन्ते-आवर्तयन्ति-आस्थापयन्ति यतस्त्वम् ( विश्वस्य-अर्थिनः ) सर्वस्योपासकस्य प्रार्थिनः ( सनोजाः-अनपच्युतः सखा ) सनातनकालात् प्रसिद्धः शाश्वतिकोऽनश्वरः सखाऽस्ति ॥ ८ ॥

**भाषान्वयार्थ**—( पूषन् ) हे पोषक परमात्मन् ! ( ते रथस्य धुरम् ) तेरे रमणीय मोक्ष के धारण-साधन को ( अजाः-आववृत्युः ) स्तुतियां आवर्तित करती हैं—आस्थापित करती हैं ( विश्वस्य-अर्थिनः ) सब उपासक प्रार्थी का ( सनोजाः-अनपच्युतः सखा ) शाश्वतिक अनश्वर मित्र है ॥ ८ ॥

**भावार्थ**—परमात्मा के आश्रय मोक्ष धाम की प्राप्ति उसकी स्तुतियों के द्वारा होती है। प्रत्येक उपासक का वह शाश्वतिक अनश्वर मित्र है ॥ ८ ॥

**अस्माकमूर्जा रथं पूषा अविष्टु माहिनः ।**
**भुवद्वाजानां वृध इमं नः शृणवद्धवम् ॥ ९ ॥**

अस्माकम् । ऊर्जा । रथम् । पूषा । अविष्टु । माहिनः । भुवत् । वाजानाम् । वृधः । इमम् । नः । शृणवत् । हवम् ॥ ९ ॥

संस्कृतान्वयार्थः—( माहिनः पूषा ) महान् पोषयिता परमात्मा ( अस्माकं रथम् ) अस्माकमभीष्टं यद्वाऽस्मभ्यम् "चतुर्थ्यर्थे बहुलं छन्दसि" [ अष्टा० २ । ३ । ६३ ] षष्ठी रमणीयं मोक्षम् ( ऊर्जा-अविष्टु ) स्वकीयेन शाश्वतिकज्ञानबलेन रक्षतु ( वाजानां वृधः-भुवत् ) सोऽमृतान्नभोगानाम् "अमृतोऽन्नं वै वाजः" [ जं० २ । १९२ ] वर्धको भवेत् ( नः-इमं हवं शृणवत् ) अस्माकमिदं प्रार्थनावचनं शृणुयात् ॥ ६ ॥

भाषान्वयार्थ—( माहिनः पूषा ) महान् पोषक परमात्मा ( अस्माकं रथम् ) हमारे अभीष्ट या हमारे लिये रमणीय मोक्ष को ( ऊर्जा-अविष्टु ) अपने शाश्वतिक ज्ञान बल से सुरक्षित रखे–रखता है ( वाजानां वृधः-भुवत् ) वह अमृत अन्न भोगों का बढ़ाने वाला हो–है ( नः-इमं हवं शृणवत् ) हमारे इस प्रार्थना वचन को सुने–स्वीकार करे–स्वीकार करता है ॥ ६ ॥

भावार्थ—परमात्मा महान् पोषक है वह अपने शाश्वतिक ज्ञान बल से हमारे लिये मोक्ष को प्रदान करता है और विविध अमृतान्न भोगों का बढ़ाने वाला हमारी प्रार्थना को स्वीकार करने वाला है ॥ ६ ॥



२७

# सप्तविंशं सूक्तम्

ऋषिः—पूर्ववत् ।

देवता—इन्द्रः ।

छन्दः—१, ५, ८, १०, १४, २२ त्रिष्टुप् । २, ९, १६, १८ विराट् त्रिष्टुप् । ३, ४, ११, १२, १५, १९–२१, २३ निचृत् त्रिष्टुप् । ६, ७, १३, १७, पादनिचृत् त्रिष्टुप् । २४ भुरिक् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अत्र सूक्ते परमात्मजीवात्मगुणाः सृष्टिरचना शरीर-रचनादयो विविधा विषयाः प्रदर्श्यन्ते ।

इस सूक्त में परमात्मा जीवात्मा के गुण सृष्टिरचना शरीररचना आदि का उपदेश है ।

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षम् ।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम् ॥ १ ॥

असत् । सु । मे । जरितरिति । सः । अभिऽवेगः । यत् । सुन्वते । यजमानाय । शिक्षम् । अनाशीःऽदाम् । अहम् । अस्मि । प्रऽहन्ता । सत्यऽध्वृतम् । वृजिनऽयन्तम् । आभुम् ॥ १ ॥

**संस्कृतान्वयार्थः**—( जरितः ) हे स्तोतः *"जरिता स्तोतृनाम [ निघं० ३ । १६ ]* ( मे ) मम ( सः-अभिवेगः ) 'मन्त्रे सन्धिश्छान्दसः' "सुपां सुलुक्० [ अष्टा० ७ । १ । ३९ ] इति सोर्लुकि कृते' स खल्वभिवेगः शाश्वतिकः स्वभावः ( सु-असत् ) शोभनोऽस्ति ( यत् ) यतः ( सुन्वते यजमानाय शिक्षम् ) उपासनारसं निष्पादयते स्वात्मानं समर्पयते ऽध्यात्मयाजिने निजानन्तानन्दं ददामि *"शिक्षतिर्दानकर्मा [ निघं ३ । २० ]* ( अनाशीर्दाम् ) आशीः प्रार्थना *"बह्वी वै यजुः स्वाशीः" [ श० १ । २ । १ । ७ ]* *"अथेयमितराशीराशास्ते"* *[ निरु० ६ । ८ ]* अनाशीर्दाः-अस्तुतिप्रार्थनाकर्त्ता सामर्थ्यात्–अस्तोता नास्तिकस्तम् (अहं प्रहन्ता अस्मि) अहं प्रहन्मीति शीलवानस्मि (सत्यध्वृतं वृजिनायन्तम्-आभुम्) सत्यविनाशकं पापमाचरन्तमाक्रमणकारिणं जनं च प्रहन्मि ॥ १ ॥

भाषान्वयार्थ—( जरितः ) हे स्तुति करने वाले उपासक ! ( मे ) मेरा ( सः-अभिवेगः ) वह शाश्वतिक स्वभाव ( सु-असत् ) कल्याणकारी है ( यत् ) कि जो ( सुन्वते यजमानाय शिक्षम् ) उपासनारस निष्पादन करने वाले-अपने आत्मा को समर्पित करने वाले आत्मयाजी के लिये निज आनन्द को मैं देता हूँ ( अनाशीर्दाम् ) प्रार्थना न करने वाले-नास्तिक ( सत्यध्वृतं वृजिनायन्तम्-आभुम् ) एवं सत्यविनाशक पापाचरण करने वाले आक्रमणकारी को ( अहं-प्रहन्ता-अस्मि ) मैं नष्ट करता हूँ ॥ १ ॥

भावार्थ—परमात्मा का यह शाश्वतिक स्वभाव है कि वह अपने प्रति समर्पणकर्त्ता उपासक को अपना आनन्द प्रदान करता है, और नास्तिक पापाचरण अन्यथा पीडक मनुष्य को नष्ट करता है ॥ १ ॥

यदीदहं युधये संनयान्यदेवयून् तन्वा३ शूशुजानान् ।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पञ्चदशं निषिञ्चम् ॥ २ ॥

यदि । इत् । अहम् । युधये । सम्ऽनयानि । अदेवऽयून् । तन्वा । शूशुजानान् । अमा । ते । तुम्रम् । वृषभम् । पचानि । तीव्रम् । सुतम् । पञ्चऽदशम् । नि । सिञ्चम् ॥ २ ॥

संस्कृतान्वयार्थः—( ते-अमा ) हे इन्द्र-ऐश्वर्यवन् परमात्मन् ! तव साहाय्येन ( यदि-इत्-अहम् युधये ) यदि ह्यहमुपासको युद्धाय खलूद्यतो भवेयम् ( तन्वा शूशुजानान् ) शरीरेण शूशुचानान् जाज्वल्यमानान् 'चकारस्थाने जकारश्छान्दसः' ( अदेवयून् ) ये त्वां स्वदेवं परमात्मानं न मन्यन्ते तथाभूतान् नास्तिकान् ( सम्-नयानि ) सम्प्रभावयामि त्वदुपासकान्-आस्तिकान् सम्पादयामि ( तुम्रं वृषभं पचामि ) आहन्तारम् "तुम्रः-आहन्ता" [ ऋ० ३ । ५० । १ दयानन्दः ] वृषभमिव पापं भक्षयामि-नाशयामि ( तीव्रं सुतम्-पञ्चदशं नि षिञ्चम् ) प्रबलं निष्पन्नमोजः "ओजो वै पञ्चदशः" [ मै० ३ । २ । १० ] निजे मनसि यद्वा-आत्मनि निषिञ्चामि-निधारयामि ॥ २ ॥

भाषान्वयार्थ—( ते-अमा ) हे ऐश्वर्यवन् परमात्मन् ! तेरी सहायता से ( यदि-इत्-अहं युधये ) यदि तो मैं उपासक युद्ध के लिये उद्यत हो जाऊँ ( तन्वा शूशुजानान् ) शरीर से जाज्वल्यमान क्रोधित हुए ( अदेवयून् ) जो तुझे अपना इष्टदेव नहीं मानते उन ऐसे नास्तिकों को ( सम्-नयानि ) सम्यक् प्रभावित करता हूँ—तेरे उपासक आस्तिक बनाता हूँ । ( तुम्रं वृषभं पचानि ) घोर घातक वृषभ समान पाप को खा जाता हूँ—नष्ट करता हूँ ( तीव्रं सुतम् पञ्चदशं नि षिञ्चम् ) प्रबल सिद्ध ओज को अपने मन में आत्मा में पूर्ण धारण करता हूँ ॥ २ ॥

भावार्थ—परमात्मा की सहायता से उपासक जन बड़े क्रोधी और नास्तिक जनों के साथ आत्मशक्ति से युद्ध करके उनको परमात्मा के उपासक—आस्तिक बनाते हैं, और अपने अन्दर के प्रबल पापों को समाप्त करते हैं तथा निज मन और आत्मा में ओज—आत्मिक तेज को धारण करते हैं ॥ २ ॥

नाहं तं वेद य इति ब्रवीत्यदेवयून्त्समरणे जघन्वान् ।
यदावाख्यत्समरणमृघावदादिद्ध मे वृषभा प्र ब्रुवन्ति ॥ ३ ॥

न । अहम् । तम् । वेद । यः । इति । ब्रवीति । अदेवऽयून् । सम्ऽअरणे । जघन्वान् । यदा । अवऽअख्यत् । सम्ऽअरणम् । ऋघावत् । आत् । इत् । ह । मे । वृषभा । प्र । ब्रुवन्ति ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अदेवयून् समरणे जघन्वान् ) मां देवं न मन्यमानान् संग्रामे हन्मि ( इति यः-ब्रवीति ) एवं यो ब्रवीति घोषयति ( तम्-न अहं वेद ) न खलु-अहमित्थं वेद्मि जानामि-मन्ये, मया विना न कोपि इत्थं वक्तुमर्हति मम साहाय्येनैव हन्तुमर्हति ( यदा समरणे-अवाख्यत् ) यदा संग्रामे साक्षात् पश्यति स्वाभ्यन्तरे ( ऋघावत्-आत्-इत्-ह ) परस्परं देवासुरवृत्तयः सत्यासत्यविवेचिका मतयो विद्यन्ते यस्मिन् स ऋघावान्-तद्वत् *"ऋघाः सत्यासत्यविवेचिका मतयो विद्यन्ते यस्मिन् सः-ऋहन् शत्रून् घ्नन्ति यस्मिन् हन् धातोर्वर्णव्यत्ययेन हस्य घ न लोपश्च"* [ ऋ० १ । १५२ । २ । *दयानन्दः* ] अनन्तरं हि ( मे वृषभा प्रब्रुवन्ति ) तदा मम बलवन्ति कर्माणि स्वाभ्यन्तरे प्रशंसन्ति ॥ ३ ॥

**भाषान्वयार्थ**—( अदेवयून् समरणे जघन्वान् ) मुझे अपना इष्टदेव न मानने वालों को संग्राम में मारता हूं ( इति यः-ब्रवीति ) ऐसी जो घोषणा करता है ( तम्-न-अहं वेद ) मैं उसे नहीं जानता क्योंकि मेरे बिना कोई ऐसा नहीं कह सकता है, मेरी सहायता से ही मार सकता है ( यदा समरणे-अवाख्यत् ) जब संग्राम को अपने अन्दर साक्षात् देखता है ( ऋघावत्-आत्-इत्-ह) परस्पर देवासुर वृत्तियां सत्य-असत्य-विवेचक जिसमें मतियां होती हैं वह ऋघावान् उसकी भांति तुरन्त ही ( मे वृषभा प्रब्रुवन्ति ) मेरे बलवान् कर्मों को प्रशंसित करते हैं ॥ ३ ॥

**भावार्थ**—मनुष्य किसी भी संग्राम-प्रसंग में अपने विरोधी को बिना परमात्मा की सहायता पाये परास्त नहीं कर सकता। देवासुर वृत्तियों के आन्तरिक संग्राम में जैसे परमात्मा की सहायता की आवश्यकता है। अतः उस परमात्मा के गुण कर्म पौरुष की स्तुति करनी चाहिये ॥ ३ ॥

यदज्ञातेषु वृजनेष्वासं विश्वे सतो मघवानो म आसन् ।
जिनामि वेत्क्षेम आ सन्तमाभुं प्र तं क्षिणां पर्वते पादगृह्य ॥ ४ ॥

यत् । अज्ञातेषु । वृजनेषु । आसम् । विश्वे । सतः । मघऽवानः । मे । आसन् । जिनामि । वा । इत् । क्षेमे । आ । सन्तम् । आभुम् । प्र । तम् । क्षिणाम् । पर्वते । पादऽगृह्य ॥ ४ ॥

**संस्कृतान्वयार्थः**—( यत् ) यतः (अज्ञातेषु वृजनेषु ) अन्यैरज्ञातेष्वज्ञातव्येषु

  

**संस्कृतान्वयार्थः**—( इमाः-रेवतीः-जीवधन्याः-आ-अग्मन् ) एताः श्रीमत्यः खलु जीवेषु धन्याः प्राणिषु पोषणधनाय हिताः *"जीवधन्या जीवेषु धन्या धनाय हिताः"* [ *ऋ० १। ८०। ४ दयानन्दः* ] प्रजाः खलु राजसूययज्ञमागच्छन्ति ( अध्वर्यवः सखायः सादयत ) हे राजसूययज्ञस्य नेतारो विद्वांसः ! यूयं ता उपवेशयत ( बर्हिषि निधत्तन ) राष्ट्रलोके नियोजयत *"अयं लोको बर्हिः"* [ *श० १। ४। १। १४* ] ( सोम्यासः ) राज्यैश्वर्यसम्पादिनोऽध्वर्यवः ( अपां नप्त्रा संविदानासः-एनाः ) यत एताः प्रजाः प्रजानां न पातयित्रा राज्ञा सहैकमत्यं गता यद्वा तेन सह मन्त्रणां कुर्वाणा वर्त्तन्ते तस्मात्ता उपवेशयत ॥ १४ ॥

**भाषान्वायार्थ**—( इमाः-रेवतीः-जीवधन्याः-आ-अग्मन् ) ये ऐश्वर्यवाली प्राणियों में पोषण रूप धन की प्रेरणा करने वाली प्रजायें राजसूय यज्ञ में आती हैं ( अध्वर्यवः सखायः सादयत ) हे राजसूययज्ञ के नेता विद्वानो ! उन्हें तुम सद्भाव से बैठाओ ( बर्हिषि निधत्तन ) तथा राष्ट्र के योग्य अधिकार में नियुक्त करो ( सोम्यासः ) हे सोम सम्पादन करने वाले ऋत्विक् लोगो ! ( अपां नप्त्रा संविदानासः-एनाः ) प्रजाओं के पालन करने वाले राजा द्वारा एक मत हुई प्रजाओं को मन्त्रणा में भाग दो ॥ १४ ॥

**भावार्थ**—प्रजायें राष्ट्र में राष्ट्रिय जीवन को बल देने वाली होती हैं। उनसे यथायोग्य सहयोग लेना और अवसर अवसर पर मन्त्रणा करनी चाहिये ॥ १४ ॥

आग्मन्नाप॑ उश॒तीर्ब॒र्हिरेदं न्य॑ध्व॒रे अ॑सद॒न्देव॒यन्तीः॑ ।
अध्व॑र्यवः सुनु॒तेन्द्रा॑य॒ सोम॒मभू॑दु वः सु॒शका॑ देव॒यज्या॑ ॥ १५ ॥

आ । अ॒ग्म॒न् । आपः॑ । उ॒श॒तीः । ब॒र्हिः । आ । इ॒दम् । नि । अ॒ध्व॒रे । अ॒स॒द॒न् । दे॒व॒ऽयन्तीः॑ । अध्व॑र्यवः । सु॒नु॒त । इन्द्रा॑य । सोम॑म् । अभू॑त् । ऊँ इति॑ । व॒ः । सु॒ऽशका॑ । दे॒व॒ऽयज्या॑ ॥ १५

**संस्कृतान्वयार्थः**—( अध्वरे ) राजसूययज्ञे ( उशतीः-देवयन्तीः-आपः ) सुखं कामयमानास्तथा सुखदातारं राजानं स्वोपरि शासनकर्त्तारमिच्छन्त्यः प्रजाः ( आ-अग्मन् ) आगच्छन्–आगच्छन्ति, अथ ( इदं बर्हिः-नि-असदन् ) इमं यज्ञमण्डपमुपाविशन्-उपविशन्ति ( अध्वर्यवः ) हे राजसूययज्ञस्य नेतारः ! यूयम् ( इन्द्राय ) राज्ञे ( सोमं सुनुत ) सोम्यं राजैश्वर्यपदं सम्पन्नं कुरुत ( वः-देवयज्या सुशका-अभूत् ) युष्माकं सुखदातृ राज्ञ इष्टिः प्रजासहयोगेन सुगमतया कर्तुं शक्या सम्भवति ॥ १५ ॥

भाषान्वयार्थ—( अध्वरे ) राजसूययज्ञ में ( उशतीः-देवयन्तीः-आपः ) सुख की कामना करती हुई तथा सुखदाता राजा को अपने ऊपर शासनकर्त्ता चाहने वाली प्रजायें ( आ-अग्मन् ) आती हैं और ( इदं बर्हिः-नि-असदन् ) इस यज्ञमण्डप को प्राप्त होती हैं ( अध्वर्यवः ) हे राजसूययज्ञ के नेता विद्वानो ! तुम ( इन्द्राय ) राजा के लिये ( सोमं सुनुत ) राजैश्वर्यपद को सम्पन्न करो ( वः-देवयज्या सुशका-अभूत् ) तुम्हारे सुखदाता राजा का यज्ञ प्रजा के सहयोग से सुगमतापूर्वक कर सकना सम्भव है ॥ १५ ॥

भावार्थ—प्रजायें अपने ऊपर सुखदाता शासनकर्त्ता राजा को चाहती हैं। राजसूययज्ञ में विराजें और ऋत्विज् लोग राजसूययज्ञ को चलाते हुए प्रजा के सहयोग से राजा के राजैश्वर्यपद को सम्पन्न करें ॥ १५ ॥



# एकत्रिंशं सूक्तम्

ऋषिः—कवष ऐलूषः ।

देवता—विश्वेदेवाः ।

छन्दः—१, ८ निचृत् त्रिष्टुप् । २, ४, ५, ७, ११ त्रिष्टुप् । ३-१० विराट् त्रिष्टुप् । ६ पादनिचृत् त्रिष्टुप् । ९ आर्ची स्वराट् त्रिष्टुप् ।

स्वरः—धैवतः ।

अस्मिन्सूक्ते योगिनां संगत्या ज्ञानग्रहणं परमात्मध्यानेनानन्दप्राप्तिः सृष्टेः प्रसारणं परमात्मकार्यं प्रदर्श्यते ।

इस सूक्त में योगियों की संगति से ज्ञान परमात्मा के ध्यान से आनन्द की प्राप्ति सृष्टि का प्रसार परमात्मा का कार्य दिखाया गया है ।

आ नो॑ दे॒वाना॒मुप॑ वेतु॒ शंसो॒ विश्वे॑भिस्तु॒रैरव॑से॒ यज॑त्रः ।
तेभि॑र्व॒यं सु॑ष॒खायो॑ भवेम॒ तर॑न्तो॒ विश्वा॑ दु॒रिता॒ स्या॑म ॥ १ ॥

आ । नः॒ । दे॒वाना॑म् । उप॑ । वे॒तु॒ । शंस॑ः । विश्वे॑भिः । तु॒रैः । अव॑से । यज॑त्रः । तेभि॑ः । व॒यम् । सु॒ऽस॒खाय॑ः । भ॒वे॒म॒ । तर॑न्तः । विश्वा॑ । दुः॒ऽइ॒ता । स्या॒म॒ ॥ १ ॥

**संस्कृतान्वयार्थः**—( देवानां नः शंसः-यजत्रः ) कामयमानानामस्माकं शंसनीयः स्तोतव्यः सङ्गमनीयश्च परमात्मा (उप-आ वेतु) उपागच्छतु साक्षाद् भवतु (विश्वेभिः-तुरैः-अवसे ) समस्तैर्यमैर्यतिभिर्योगिभिः सह *"तुर इति यमनाम तरतेः"* *[ निरुक्त १२ । १४ ]* संसारसागरं पारयितुं यतमानैः रक्षणाय योगिनामुपदेशं श्रुत्वा वयं परमात्मनः साक्षात्कारे प्रवृत्ता भवेमेति यावत् ( तेभिः-सुसखायः-वयं भवेम ) तैर्योगिभिर्वयं समानधर्माणः-समानपरमात्मसाक्षात्कारवन्तो भवेम ( विश्वा दुरिता तरन्तः स्याम ) समस्तानि पापानि पारयन्तो भवेम ॥ १ ॥

**भाषान्वयार्थ**—( देवानां नः शंसः-यजत्रः ) कामना करते हुए हम लोगों का प्रशंसनीय—स्तुतियोग्य सङ्गमनीय परमात्मा ( उप-आ वेतु ) समीप प्राप्त हो—साक्षात् हो ( विश्वेभिः तुरैः-अवसे ) सब या प्रवेश पाए हुए यतियोगियों संसारसागर को पार करने में यत्न करने वालों के

द्वारा रक्षा के लिए अर्थात् उनके उपदेश सुनकर हम परमात्मसाक्षात्कार में प्रवृत्त रहें ( तेभिः सुसखायः-वयं भवेम ) उन यतियोगियों के साथ समानधर्मी हम होवें । ( विश्वा दुरिता तरन्तः स्याम ) समस्त पापों को पार किये हुए हम होवें ॥ १ ॥

**भावार्थ**—परमात्मा के साक्षात् समागम की कामना करनी चाहिए, यतियोगियों के सत्सङ्ग उपदेशों के अनुसार साधना कर निष्पाप हो संसारसागर को पार करें ॥ १ ॥

**परि॑ चि॒न्मर्तो॒ द्रवि॑णं ममन्यादृ॒तस्य॑ प॒था नम॒सा वि॑वासेत् ।**

**उ॒त स्वेन॒ क्रतु॒ना सं व॑देत॒ श्रेयां॑सं॒ दक्षं॒ मन॑सा जगृभ्यात् ॥ २ ॥**

परि॑ । चि॒त् । मर्तः॑ । द्रवि॑णम् । म॒म॒न्या॒त् । ऋ॒तस्य॑ । प॒था । नम॑सा । आ । वि॒वा॒से॒त् । उ॒त । स्वेन॑ । क्रतु॑ना । सम् । व॒दे॒त॒ । श्रेयां॑सम् । दक्ष॑म् । मन॑सा । ज॒गृ॒भ्या॒त् ॥ २ ॥

**संस्कृतान्वयार्थः**—( मर्तः-द्रविणं परि चित्-ममन्यात् ) मनुष्यो ज्ञानधनं सर्वतोऽपि कामयेत ( ऋतस्य पथा मनसा विवासेत् ) अमृतस्य-मोक्षस्य *"ऋतममृतमित्याह"* *[ जं० २ । १६ ]* मार्गेण स्वान्तःकरणेन श्रद्धया सेवेत ( उत स्वेन क्रतुना संवदेत ) अपि स्वकीयेन प्रज्ञानेन *"क्रतुः प्रज्ञानाम"* *[ निघं० ३ । ६ ]* विचारयेत् ( श्रेयांसं दक्षं मनसा जगृभ्यात् ) श्रेष्ठमात्मबलं मनसा-मनोभावेन गृह्णीयात् ॥ २ ॥

**भाषान्वयार्थ**—( मर्तः-द्रविणं परिचित्-ममन्यात् ) मनुष्य ज्ञानधन को सब ओर से कामना करे ( ऋतस्य पथा मनसा विवासेत् ) अमृत अर्थात् मोक्ष के मार्ग से अपने अन्तःकरण अर्थात् श्रद्धा से उसे सेवन करे ( उत स्वेन क्रतुना संवदेत ) और अपने प्रज्ञान से–चिन्तन से विचार करे ( श्रेयांसं दक्षं मनसा जगृभ्यात् ) श्रेष्ठ बल अर्थात् आत्मबल को मनोभाव से पकड़े ॥ २ ॥

**भावार्थ**—ज्ञानधन जहाँ से भी मिले ले लेना चाहिये और उसका सबसे अधिक सदुपयोग मोक्षमार्ग में लगाना है । वह मानव का श्रेष्ठ बल है ॥ २ ॥

**अधा॑यि धी॒तिरस॑सृग्र॒मंशा॑स्ती॒र्थे न द॒स्ममुप॒ यन्त्यू॒माः ।**

**अ॒भ्या॑नश्म सुवि॒तस्य॑ शू॒षं नवे॑दसो अ॒मृता॑नामभूम ॥ ३ ॥**

अधा॑यि । धी॒तिः । अस॑सृग्रम् । अंशाः॑ । ती॒र्थे । न । द॒स्मम् । उप॑ । यान्त॒ । ऊ॒माः॑ । अ॒भि । आ॒न॒श्म॒ । सु॒वि॒तस्य॑ । शू॒षम् । नवे॑दसः । अ॒मृता॑नाम् । अ॒भू॒म ॥ ३ ॥

**संस्कृतान्वयार्थः**—( धीतिः-अधायि ); योगप्रज्ञा *"ऋतस्य धीतिः-ऋतस्य प्रज्ञा"* *[ निरु० १० । ४० ]* धारिता सम्पादिता भवति ( न-अंशाः-ऊमाः ) सम्प्रति तदा ध्यानप्रवाहाः-रक्षणकर्त्तारो भवन्तः ( तीर्थे ) संसारसागरस्य तारकनिमित्तम् "तीर्थेन हि

तरन्ति तद्यथा समुद्रतीर्थेन प्रतरेयुः [ गो० १ । ५ । २ ] ( असस्रूग्रं दस्मम्-उपयन्ति ) अनुपममपूर्वमध्यात्मजन्म दर्शनीयमुपगमयन्ति "अत्रान्तर्गतो णिजर्थः", (सुवितस्य शूषम्-अभ्यानश्म ) सुगतस्य शोभनरूपस्य परमात्मनः सुखं प्राप्नुमः "शूषं सुखनाम" [ निघ० ३ । ६ ] ( नवेदसः-अमृतानाम्-अभूम ) वयं नवेदसः-अवश्यं वेत्तारो वयं ज्ञानिनः "नभ्राण्नपान्नवेद......" [ अष्टा० ६ । ३ । ७३ ] इति निपातनं न-अवेद मुक्तानां मध्ये भवेम ॥ ३ ॥

भाषान्वयार्थ—( धीतिः-अधायि ) योगप्रज्ञा–योगबुद्धि धारण की जाती है ( न-अंशाः-ऊमाः ) तो तब ही ध्यान के प्रवाह उपासक के रक्षा करने वाले हो जाते हैं, जो कि ( तीर्थे ) संसार सागर से तराने के निमित्त ( असस्रूग्रं दस्मम्-उपयन्ति ) अपूर्व अध्यात्म जन्म दर्शनीय को प्राप्त कराते हैं ( सुवितस्य शूषम्-अभ्यानश्म ) शोभनरूप परमात्मा के सुख को हम प्राप्त होवें ( नवेदसः-अमृतानाम् अभूम ) हम अवश्य ज्ञानवान् हुए मुक्तों में हो जावें मुक्त हो जावें ॥ ३ ॥

भावार्थ—योग बुद्धि प्राप्त हो जाने पर ध्यान के प्रवाह योगी को संसार सागर से तारने वाले बन जाते हैं, और उसका अपूर्व अध्यात्म जन्म होकर वह मुक्ति का अधिकारी बन जाता है ॥ ३ ॥

**नित्यश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान ।**
**भगो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥ ४ ॥**

नित्यः । चाकन्यात् । स्वऽपतिः । दमूनाः । यस्मै । ऊँ इति । देवः । सविता । जजान । भगः । वा । गोभिः । अर्यमा । ईम् । अनज्यात् । सः । अस्मै । चारुः । छदयत् । उत । स्यात् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( नित्यः-स्वपतिः-दमूनाः ) शाश्वतिकः सदा वर्त्तमानः सुखस्य स्वामी दानमनाः "दमूना दानमनाः" [ निरु० ४ । ५ ] ( यस्मै-उ सविता देवः-जजान ) यस्मै–उपासकाय स्वकर्मफलं दातुमुत्पादकः परमात्मदेवः-तत्कर्मफलमुत्पादयति ( अर्यमा ) स फलस्य दाता ( चाकन्यात् ) कामयेत् ( ईम्-अनज्यात् ) व्यक्तं करोति ( सः-अस्मै ) सोऽस्यै जनाय ( चारुः-छदयत् ) शोभनभूतो रक्षति ( उत ) अपि ( गोभिः-वा भगः स्यात् ) स्तुतिभिश्च भगप्रदो भवेत् ॥ ४ ॥

भाषान्वयार्थ—( नित्यः-स्वपतिः-दमूनाः ) सदा वर्त्तमान सुख धन का स्वामी अपने सुख धन को देने का इच्छुक ( सविता देवः-यस्मै-उ जजान ) उत्पादक परमात्मा देव जिस उपासक के लिये कर्म के प्रतीकार में उस सुख फल को उत्पन्न करता है–प्रसिद्ध करता है । (अर्यमा-चाकन्यात्) वह दाता परमात्मा उसे देना चाहता है, अतः ( ईम्-अनज्यात् ) उसे व्यक्त करता है–पकाता है ( सः-अस्मै ) वह इसके लिये ( चारुः-छदयत् ) कल्याणकारी होता हुआ सुरक्षित रखता है ( उत ) और ( गोभिः-वा भगः स्यात् ) स्तुतियों द्वारा सुख ऐश्वर्य का देने वाला होता है ॥ ४ ॥

**भावार्थ**—परमात्मा कर्मफलों का दाता है स्तुतियों के द्वारा वह उपासक को उसके कमनीय सुखों को देने वाला है ॥ ४ ॥

**इयं सा भूया उषसामिव क्षा यद्ध क्षुमन्तः शवसा समायन् ।**
**अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यन्तु वाजाः ॥ ५ ॥**

इयम् । सा । भूयाः । उषसाम्ऽइव । क्षाः । यत् । ह । क्षुऽमन्तः । शवसा । सम्ऽआयन् । अस्य । स्तुतिम् । जरितुः । भिक्षमाणाः । आ । नः । शग्मासः । उप । यन्तु । वाजाः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( इयं सा क्षाः-उषसाम्-इव ) इयं सा पृथिवी प्रतिदिनं प्राप्ताया उषसः प्रकाशमानायाः समाना विकसिता भवति ( यत्-ह ) यदा खलु ( क्षुमन्तः शवसा समायन् ) अन्नवन्तः शब्दवन्तश्च मेघाः "क्षु-अन्ननाम" [ *निघ० २ । ७* ] "क्षु शब्दे" [ *अदादि०* ] क्विपि तुगभावश्छान्दसः' बलेन पूर्णवर्षणेन समागच्छन्ति, तदेवं ( अस्य जरितुः स्तुतिं भिक्षमाणाः ) अस्य स्तुतिकर्त्तुः स्तुतिं परमात्मोपदेशं याचमानाः ( नः शग्मासः-वाजः-उप-आ-यन्तु ) अस्माकं कल्याणकराः-ज्ञानवन्तो जनाः-उपागच्छन्ति लडर्थे लोट् ॥ ५ ॥

**भाषान्वयार्थ**—( इयं सा क्षाः-उषसाम्-इव ) यह वह पृथिवी हमारे समक्ष प्रतिदिन प्रकाशमान उषा के समान फैली रहती है ( यत्-ह ) जब कि ( क्षुमन्तः शवसा समायन् ) अन्न देने वाले और शब्द करने वाले मेघ वर्षणबल से पृथिवी पर आते हैं। उसी समय ( अस्य जरितुः स्तुतिं भिक्षमाणाः ) इस स्तुति करने वाले के स्तुति-परमात्म उपदेश को चाहने वाले ( नः शग्मासः-वाजाः-उप-आ-यन्तु ) कल्याणकारी ज्ञानवान् जन हमारे पास आते हैं ॥ ५ ॥

**भावार्थ**—परमात्मा की रचित पृथिवी हमें सदा आधार देने वाली उषा के समान सहायक है। मेघ अन्न उत्पत्ति के निमित्त बरसते हैं, और परमात्मा के उपदेश वाले हमें उसकी कृपा से प्राप्त होते हैं ॥ ५ ॥

**अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः ।**
**अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥ ६ ॥**

अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या । भूमना । गौः । अस्य । सऽनीळाः । असुरस्य । योनौ । समाने । आ । भरणे । बिभ्रमाणाः ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अस्य-इत्-एषा सुमतिः पूर्व्या गौः पप्रथाना भूमना-अभवत् ) अस्य परमात्मन एव हि खल्वेषा सुमतिः सुस्तुतियोग्या शाश्वतिकी वाक् विस्तारमाप्नुवाना बहुरूपा भवति ( अस्य-असुरस्य ) एतस्य सर्वेभ्यः प्राणप्रदस्य ( समाने

योनौ ) समाने खल्वाश्रये ( भरणे ) धारणीये स्वरूपे ( बिभ्रमाणाः ) स्वात्मानं धरन्तः ( सनीळाः-आ ) समानस्थाना आतिष्ठेम ॥ ६ ॥

भाषान्वयार्थ—( अस्य-इत् ) इस परमात्मा की ( एषा पूर्व्या सुमतिः-गौः ) यह अच्छी स्तुतियोग्य शाश्वतिक-सदा से चली आई वाणी ( पप्रथाना भूमना-अभवत् ) विस्तार को प्राप्त होती हुई बहुतरूप वाली है ( अस्य-असुरस्य ) इस सबको प्राण देने वाले परमात्मा के ( समाने योनौ ) समान आश्रय ( भरणे ) धारणीय स्वरूप में ( बिभ्रमाणाः ) अपने को समर्पित करते हुए ( सनीळाः-आ ) समानस्थानी होकर रहें ॥ ६ ॥

भावार्थ—प्राणस्वरूप परमात्मा की स्तुति शाश्वतिक वेदवाणी द्वारा विस्तृत होती है। तदनुसार स्तुति करने वाले मोक्ष में समान आश्रय को प्राप्त होते हैं ॥ ६ ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त ॥ ७ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति । निःऽततक्षुः । संतस्थाने इति सम्ऽतस्थाने । अजरे इति । इतऊती इतीतःऽऊती । अहानि । पूर्वीः । उषसः । जरन्त । ॥ ७ ॥

संस्कृतान्वयार्थः—(किं स्वित्-वनम्) किं खलु वनमरण्यम् (कः-उ सः-वृक्षः-आस) तत्रत्यः को हि स वृक्षः-अस्ति ( यतः-द्यावापृथिवी निष्टतक्षुः ) यतो हि द्युलोकं पृथिवीलोकं च निष्पादितवान् परमात्मा बहुवचनमादरार्थम् ये च द्यावापृथिव्यौ ( सन्तस्थाने ) सम्यक् स्थिरे ( अजरे ) जरारहिते सामान्येन नाशरहिते ( इतः-ऊती ) इतो लोकात्-प्राणिलोकात् सुरक्षिते स्तः ( अहानि पूर्वीः–उषसः-जरन्त ) ययोर्मध्ये वर्त्तमानानि दिनानि पूर्वतः प्रवृत्ताः-उषसो जीर्णतां गच्छन्ति, इति विश्वकर्मणः परमात्मनः कर्मशिल्पं विवेच्यते ॥ ७ ॥

भाषान्वयार्थ—( किं स्वित्-वनम् ) वह वन कौनसा है ( कः-उ सः-वृक्षः-आस ) और कौन वह वृक्ष है ( यतः-द्यावापृथिवी निष्टतक्षुः ) जिससे कि द्युलोक और पृथिवी लोक को रचा है। ( सन्तस्थाने ) जो कि सम्यक् संस्थित ( अजरे ) जरा रहित ( इत-ऊती ) इस प्राणी लोक से सुरक्षित हैं ( अहानि पूर्वीः-उषसः-जरन्त ) जिनके मध्य में वर्त्तमान दिन–अहोरात्र और पूर्व से चली आईं उषाएँ परम्परा से प्राप्त प्रातः वेलाएँ जीर्ण हो जाती हैं ॥ ७ ॥

भावार्थ—परमात्मा ने अपने व्यापक तथा प्रकाशक स्वरूप से सृष्टि के प्रमुख द्युमण्डल और पृथिवीमण्डल को रचा है और इनके बीच में दिन रातों तथा प्रभात वेलाओं को प्रकट किया जो अन्य प्राणी आदि वस्तुओं की जीर्णता के साथ जीर्णता को प्राप्त होती रहती हैं ॥ ७ ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥ ८ ॥

न । एतावत् । एना । परः । अन्यत् । अस्ति । उक्षा । सः । द्यावापृथिवी इति । बिभर्ति । त्वचम् । पवित्रम् । कृणुत । स्वधाऽवान् । यत् । ईम् । सूर्यम् । न । हरितः । वहन्ति ॥ ८ ॥

**संस्कृतान्वयार्थः**—( सः-उक्षा द्यावापृथिवी बिभर्त्ति ) स शक्तिसेचकः परमात्मा द्युलोकं पृथिवीलोकं च द्यावापृथिवीमयं जगद् धारयति पालयति ( एना-एतावत् परः-अन्यत्-न-अस्ति ) अस्मात्-एतावतः सत्तावतो भिन्नो नान्योऽस्ति सामर्थ्यवानिति शेषः, ( त्वचं पवित्रं-कृणुते ) यः खलु जगतस्त्वचमावरणं ज्योतिष्मन्तं रक्षणाय करोति ( स्वधावान्-यत्-ईम् ) स्वधारणशक्तिमान् यतो हि ( हरितः-न सूर्यं वहन्ति ) यथा हरणशीला रश्मयः हरितो हरणा *"हरितः-हरणानादित्यरश्मीन्"* [ निरु० ४ । १३ ] सूर्यं वहन्ति प्रापयन्ति द्योतयन्ति तद्वत् परमात्मानं जगत्पदार्था द्योतयन्ति ॥ ८ ॥

**भाषान्वयार्थ**—( सः-उक्षा द्यावापृथिवी बिभर्ति ) वह शक्ति का सींचने वाला-भरने वाला परमात्मा द्युलोक और पृथिवी लोक को अर्थात् यह द्यावापृथिवीमय जगत् को धारण करता है-पालता है ( एना-एतावत् परः-अन्यत्-न-अस्ति ) इस इतने सत्ताधारी से भिन्न अन्य सामर्थ्यवान् नहीं है ( त्वचं पवित्रं कृणुते ) जो जगत् के आवरण को ज्योतिष्मान् करता है ( स्वधावान्-यत-ईम् ) स्वधारणशक्ति वाला जिससे है ( हरितः-न सूर्यं वहन्ति ) जैसे हरणशील-रसों को हरण करने वाली किरणें सूर्य को वहन करती हैं-द्योतित करती हैं । उसी भांति जगत्-पदार्थ परमात्मा को द्योतित करते हैं ॥ ८ ॥

**भावार्थ**—परमात्मा द्यावापृथिवीमय जगत् को शक्ति देता है । उससे कोई बड़ा शक्तिमान् नहीं है । जैसे सूर्यकिरणें सूर्य के आश्रित हो सूर्य को दर्शाती हैं ऐसे ही जगत्पदार्थ परमात्मा के आश्रित हो उसे दर्शाते है ॥ ८ ॥

**स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।**
**मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥ ९ ॥**

स्तेगः । न । क्षाम् । अति । एति । पृथ्वीम् । मिहम् । न । वातः । वि । ह । वाति । भूम । मित्रः । यत्र । वरुणः । अज्यमानः । अग्निः । वने । न । वि । असृष्ट । शोकम् ॥ ९ ॥

**संस्कृतान्वयार्थः**—( स्तेगः-न पृथ्वीम्-अत्येति ) रश्मिसंघाती सूर्यः-इव *"स्त्यै ष्ट्यै संघाते"* [ भ्वादि० ] परमात्मा प्रथितां सृष्टिमतिक्राम्यति तदन्तरे सर्वा सृष्टिः ( वातः-न मिहं ह भूम वि वाति ) तीव्रवायुर्यथा मेहसमर्थं मेघं खलु बहुत्र विविधं प्रेरयति तद्वत् परमात्मा सृष्टिं विविधं प्रक्षिपति ( यत्र ) यस्मिन्-यस्याश्रये ( मित्रः ) विद्युतः प्रक्षेपणवेगः

( वरुणः ) विद्युत आकर्षणवेगश्च वर्त्तते तथा ( अज्यमानः-अग्निः ) व्यज्यमानो व्यक्तीभवन्-अग्निः ( वने-न शोकं व्यसृष्ट ) वृक्षसमूहे स्वज्वलनं विसृज्य प्रकाशयति तद्वत् परमात्मा सर्वं जगत् स्वप्रकाशेन प्रकाशयति ॥ ९ ॥

भाषान्वयार्थ—( स्तेगः-न पृथ्वीम्-अत्येति ) किरणसमूहवान् सूर्य के समान परमात्मा फैली हुई सृष्टि के पार तक चला जाता है। सारी सृष्टि इसके अन्दर रहती है। ( वातः-न मिहं ह भूम वि वाति ) वेगवान् वायु जैसे बरसने वाले मेघ को बहुत स्थानों पर विविध रूप से फेंक देता है वर्षा देता है वैसे ही परमात्मा विविध सृष्टि को फैला देता है ( यत्र ) जिसके आश्रय पर ( मित्रः ) विद्युत् का प्रक्षेपण वेग तथा ( वरुणः ) विद्युत् का आकर्षण वेग और ( अज्यमानः-अग्निः ) व्यक्त हुआ–प्रज्वलित होता हुआ अग्नि ( वने न शोकं व्यसृष्ट ) समूह में जैसे अपने ज्वलन–तेज को छोड़ कर प्रकाशित करता है, इसी भाँति परमात्मा अपने तेज से जगत् को प्रकाशित करता है ॥ ९ ॥

भावार्थ—परमात्मा समस्त फैली हुई सृष्टि के अन्दर और बाहर भी है। सारे पृथिवी आदि पिण्डों को दूर–दूर तक बिखेरे हुए है। सब उस परमात्मा के आश्रय पर विद्युत्, अग्नि आदि पदार्थ हैं। अपने प्रकाश से वह संसार को प्रकाशित कर रहा है ॥ ९ ॥

**स्तरीर्यत्सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा ।**
**पुत्रो यत्पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥ १० ॥**

स्तरीः । यत् । सूत । सद्यः । अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा । पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट । शम्याम् । गौः । जगार । यत् । ह । पृच्छान् ॥ १० ॥

संस्कृतान्वयार्थः—( यत् सद्यः-अज्यमाना सूत स्तरीः ) यदा तत्कालं कालमनु वृषभेण सिच्यमाना सती गौर्वत्सं प्रसूतेऽथ निवृत्तप्रसवा सा ( व्यथिः स्वगोपा-अव्यथीः कृणुत ) व्यथमाना सती स्वगोप्त्रा रक्षकेणात्मानं व्यथारहितां करोति वचनव्यत्ययोऽत्र छान्दसः ( यत् पित्रोः पूर्वः पुत्रः- अजनिष्ट ) यतो द्यावापृथिव्योः पूर्वः श्रेष्ठः पुत्रो जीवो जातः सन् ( शम्यां गौः-जगार यत्-ह-पृच्छान् ) अध्ययनकर्मणि गतिशीलो जागृतवान् तदा परमात्मानमर्चति *"पृच्छतिरर्चतिकर्मेति [ निघं० ३ । १४ ]* तदा स संसारजन्म-पीडातो मुच्यते ॥ १० ॥

भाषान्वयार्थ— ( यत् सद्यः-अज्यमाना सूत स्तरीः ) जैसे समय पर वृषभ द्वारा गर्भित हुई गौ बच्चे को उत्पन्न करते ही प्रसव से निवृत्त होती हुई ( व्यथिः) पीड़ित होती है। ( स्वगोपा-अव्यथीः कृणुत ) गोपाल के द्वारा अपने को पीडारहित करती है ऐसे ही ( यत् पित्रोः पूर्वः पुत्रः-अजनिष्ट ) द्युलोक और पृथिवीलोक का पुत्ररूप प्रथम से या श्रेष्ठ जीव उत्पन्न होता है वह ( शम्यां गौः-जगार यत् ह पृच्छान् ) अध्ययन कर्म में गतिशील हुआ जाग जाता है और परमात्मा की अर्चना करता है संसार की पीड़ा से छूट जाता है ॥ १० ॥

भावार्थ—संसार में मनुष्य या जीव शरीर धारण करते हैं। सांसारिक या औत्पत्तिक पीड़ा प्रत्येक को होनी अनिवार्य है। परन्तु जब वेदाध्ययन कर परमात्मा की अर्चना करता है तो सब पीड़ाओं से छूट जाता है ॥ १० ॥

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।
प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥ ११ ॥

उत । कण्वम् । नृऽसदः । पुत्रम् । आहुः । उत । श्यावः । धनम् । आ । अदत्त । वाजी । प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतम् । अत्र । नकिः । अस्मै । अपीपेत् ॥ ११ ॥

संस्कृतान्वयार्थः—( कण्वम्-उत नृषदः पुत्रम्-आहुः ) उपासकं मेधाविनं "कण्वः-मेधाविनाम" [ निघं० ३ । १५ ] प्राणस्वरूपस्य परमात्मनः पुत्रं कथयन्ति "प्राणो वै नृषत्" [ श० ६ । ७ । ३ । १२ ] ( उत ) अपि ( श्यावः-वाजी धनम्-आ-अदत्त ) गतिशीलो ज्ञानी बलवान्–उपासकः परमात्मन आनन्दधनं प्राप्नोति ( कृष्णाय रुशत्-ऊधः प्र-अपिन्वत ) यः परमात्मगुणं कर्षयति तस्मै परमात्मा प्रकाशरूपो निजानन्दरसं पूर्णं स्वरूपं सिञ्चति ( उत ) अपि ( अत्र-ऋतं नकिः-अस्मै-अपीपेत् ) अत्र संसारे ज्ञानममृतं वा कश्चनापि न खल्वस्मै-उपासकाय परमात्मनो भिन्नः प्रवर्धयेत् ॥ ११ ॥

भाषान्वयार्थ—( कण्वम्-उत नृषदः पुत्रम्-आहुः ) मेधावी उपासक को प्राणस्वरूप परत्मामा का पुत्र कहते हैं ( उत ) और ( श्यावः-वाजी धनम्-आ-अदत्त ) गतिशील ज्ञानी बलवान् उपासक परमात्मा के आनन्दघन को प्राप्त करते हैं ( कृष्णाय रुशत्-ऊधः प्र अपिन्वत ) परमात्मगुणों को अपने अन्दर आकर्षित करने वाले उपासक के लिये निज आनन्द रस को सींचता है ( उत ) और ( अत्र ऋतं नकिः-अस्मै-अपीपेत् ) इस संसार में ज्ञान या अमृत को इस उपासक के लिये परमात्मा से भिन्न कोई भी नहीं बढ़ाता है ॥ ११ ॥

भावार्थ—ज्ञानी उपासक परमात्मा के पुत्र समान होता है। संसार में जैसे पिता अपनी अमूल्य सम्पत्ति पुत्र को दे देता है ऐसे ही परमात्मा भी अपने ज्ञान अमृत आनन्द को ज्ञानी उपासक के लिये दे देता है ॥ ११ ॥



# द्वात्रिंशं सूक्तम्

ऋषिः—कवष ऐलूषः ।

देवता—विश्वेदेवाः ।

छन्दः—१, २ विराड् जगती । ३ निचृज्जगती । ४ पादनिचृज्जगती । ५ आर्ची भुरिग्जगती । ६ त्रिष्टुप् । ७ आर्ची स्वराट् त्रिष्टुप् । ८, ९ निचृत् त्रिष्टुप् ।

स्वरः—१-५ निषादः । ६ -९ धैवतः ॥

अस्मिन् खल्वादर्शगृहस्थस्य वर्णनं तत्र च परमात्मन आदेशमनुसरन् जरावस्थाञ्च सुखेन वाहयति ।

इस सूक्त में आदर्श गृहस्थ का वर्णन है और परमात्मा के आदेशानुसार चलते हुए जरावस्था को सुख से व्यतीत करता है ।

प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः ।
अस्माकमिन्द्र उभयं जुजोषति यत्सोम्यस्यान्धसो बुबोधति ॥ १ ॥

प्र । सु । ग्मन्ता । धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः । अस्माकम् । इन्द्रः । उभयम् । जुजोषति । यत् । सोम्यस्य । अन्धसः । बुबोधति ॥ १ ॥

संस्कृतान्वयार्थः—( इन्द्रः ) ऐश्वर्यवान् परमात्मा ( अस्माकम्-उभयं जुजोषति ) अस्माकं खलूभयं श्रेष्ठं कर्म तथा ज्ञानं च प्रीणाति ( सोम्यस्य अन्धसः-यत्-बुबोधति ) उपासनानिष्पन्नस्य-आध्यानीयस्वरूपस्य यत् फलं बोधयति प्रापयति "जुजोषति बुबोधति" इत्युभयत्र श्लुश्छान्दसः, तस्य ( धियसानस्य ) ध्यायमानस्य "ध्यै धातोः सिपि सम्प्रसारणं छान्दसम्" ( वरेभिः-वरान् अभि प्रसीदतः ) श्रेष्ठैः सुखैः श्रेष्ठान् जनान् प्रसादय, अन्तर्गतणिजर्थः (सक्षणि) सङ्गमे ( प्र ग्मन्ता ) गार्हस्थ्यप्रगतिं कुर्वन्तौ स्त्रीपुरुषौ ( प्र सु० ) प्रकृष्टं सु प्रसीदतः सुप्रसन्नौ भवतः ॥१॥

भाषान्वयार्थ—( इन्द्रः ) ऐश्वर्यवान् परमात्मा ( अस्माकम्-उभयं जुजोषति ) हमारे दोनों श्रेष्ठ कर्म और ज्ञान को पसन्द करता है ( सोम्यस्य-अन्धसः-यत् बुबोधति ) उपासना से

निष्पन्न अच्छे ध्याये हुए स्वरूप के फल को प्राप्त कराता है ( धियसानस्य ) ध्यान में आये हुए ( वरेभिः-वरान् अभि प्रसीदतः ) उत्तम सुखों से उत्तम महानुभावों को प्रसन्न करे ( सक्षणि ) उनके संग में ( प्र ग्मन्ता ) गृहस्थ जीवन को प्रगति देते हुए स्त्री पुरुष ! ( प्र सु० ) प्रकृष्ट रूप से सुप्रसन्न होवें ॥ १ ॥

भावार्थ—परमात्मा हमारे श्रेष्ठ कर्म और श्रेष्ठ ज्ञान को पसन्द करता है। उपासना द्वारा ध्यान करने योग्य अपने स्वरूप को प्राप्त कराता है उसकी संगति में। गृहस्थजन गृहस्थ को उन्नत करते हुए प्रसन्न रहते हैं ॥ १ ॥

वीन्द्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत ।
ये त्वा वहन्ति मुहुरध्वराँ उप ते सु वन्वन्तु वग्वनाँ अराधसः ॥ २ ॥

वि । इन्द्र । यासि । दिव्यानि । रोचना । वि । पार्थिवानि । रजसा । पुरुऽस्तुत । ये । त्वा । वहन्ति । मुहुः । अध्वरान् । उप । ते । सु । वन्वन्तु । वग्वनान् । अराधसः ॥ २ ॥

संस्कृतान्वयार्थः—( पुरुष्टुत-इन्द्र ) हे बहुस्तोतव्य परमात्मन् ! ( दिव्यानि रोचना वि यासि ) त्वं दिवि भवानि प्रकाशमयानि नक्षत्राणि व्याप्नोषि ( पार्थिवानि रजसा वि० ) पृथिव्यां भवानि रजांसि रजनात्मकानि वस्तूनि च व्याप्नोषि 'रजसा' *"सुपां सुलुक्पूर्वसवर्णाच्छेया०........"*[ अष्टा० ७ । १ । ३९ ] इत्याकारादेशः । ( ये मुहुः-अध्वरान् त्वा वहन्ति ) ये आत्मयाजिनस्त्वां लक्षयित्वा-अध्यात्मयज्ञान्-अनुतिष्ठन्ति ( ते ) ते जनाः ( अराधसः ) धनरहिताः अपि ( वग्वनान् ) स्तुतिवाण्या सेवनीयान् सुखविशेषान् ( सु-उप वन्वन्तु ) सुगमतया सम्भजन्ताम्–इति देवयानमार्गस्य-वर्णनम् ॥ २ ॥

भाषान्वयार्थ—( पुरुष्टुत-इन्द्र ) हे बहुत स्तुति योग्य परमात्मन् ! ( दिव्यानि रोचना वि यासि ) तू आकाश में प्रकाशमान नक्षत्रों में व्याप्त हो रहा है। ( पार्थिवानि रजसा वि ) पृथ्वीसम्बन्धी रञ्जनात्मक–मनोरञ्जन करने वाली वस्तुओं में व्याप रहा है ( ये मुहुः- अध्वरान् त्वा वहन्ति ) जो आत्मयाजी तुझे लक्ष्य करके अध्यात्मयज्ञों का सेवन करते हैं ( ते ) वे जन ( अराधसः ) धन रहित होते हुए भी ( वग्वनान् ) स्तुतिवाणी के द्वारा सेवनीय विशेष सुखों को ( सु-उप वन्वन्तु ) सुगमता से सेवन करते हैं ॥ २ ॥

भावार्थ—परमात्मा आकाश ग्रह नक्षत्रों और पृथिवी के मनो भावन पदार्थों में यहाँ पर व्याप्त हो रहा है। उपासक जन उसकी स्तुति द्वारा विशेष सुख प्राप्त करते हैं ॥ २ ॥

तदिन्मे छन्त्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति ।
जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः ॥ ३ ॥

तत् । इत् । मे । छन्त्सत् । वपुषः । वपुःऽतरम । पुत्रः । यत् । जानम । पित्रोः । अधिऽइयति । जाया । पतिम् । वहति । । वग्नुना । सुऽमत् । पुंसः । इत् । भद्रः । वहतुः । परिऽष्कृतः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( पित्रोः पुत्रः-यत्-जानम्-अधि-इयति ) मातापित्रोः पुत्रो यदा जन्माधिगच्छति धारयति ( तत्-इत्-मे वपुषः-वपुष्टरं छन्त्सत् ) तदेव मम गृहस्थस्य सुन्दरस्य सुन्दरतरं सुखं परमात्मा कामयेत ( वग्नुना जाया पतिं वहति ) अतएव स्तुतिवाण्या भार्या पतिं प्राप्नोति ( सुमत् पुंसः-इत् ) पुरुषस्य सुहर्षकरं सुखं भवति ( भद्रः-वहतुः परिष्कृतः ) भजनीयः प्रापणीयो गृहस्थाश्रमस्य सुपरिणामः ॥ ३ ॥

**भाषान्वयार्थ**—( पित्रोः पुत्रः यत्-जानम्-अधि-इयति ) माता पिता का पुत्र जब जन्म धारण करता है, ( तत्-इत्-मे-वपुषः-वपुष्टरं छन्त्सत् ) उसी समय मुझ सुन्दर गृहस्थ का सुन्दर सुख परमात्मा मेरे लिये चाहे—प्राप्त कराये (वग्नुना जाया पतिं वहति) अतः उसकी स्तुतिवाणी से—उसकी कृपा से पत्नी मुझ पति को प्राप्त होती है ( सुमत् पुंसः-इत् ) उत्तम हर्षप्रद सुख पुरुष का भी प्राप्त होता है ( भद्रः-वहतुः परिष्कृतः) गृहस्थ आश्रम का यह भजनीय—प्रापणीय उत्तम परिणाम है ॥३॥

**भावार्थ**—पति पत्नी का सम्बन्ध होना गृहस्थ आश्रम कहलाता है। और वह सन्तान की उत्पत्ति के लिये है। वह उसका सच्चा सुख है। सुयोग्य पत्नी और सुयोग्य पति ईश्वर की कृपा से प्राप्त होते हैं। यही गृहस्थ का सुन्दर फल है ॥ ३ ॥

**तदित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः ।**
**माता यन्मन्तुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः ॥ ४ ॥**

तत् । इत् । सधऽस्थम् । अभि । चारु । दीधय । गावः । यत् । शासन् । वहतुम् । न । धेनवः । माता । यत् । मन्तुः । यूथस्य । पूर्व्या । अभि । वाणस्य । सप्तऽधातुः । इत् । जनः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( तत्-इत्-चारु सधस्थम्-अभि दीधय ) तदेव सुन्दरं समानस्थानं परिवारवासयोग्यं गृहमभिधारयाभिसम्पादय "धीङ् आधारे" [ दिवादि० ] 'परस्मैपदाभ्यासदीर्घत्वं शप् च सर्वं छान्दसम्' ( यत् ) यत्र ( गावः-धेनवः-वहतुं न शासन् ) दुग्धदात्र्यो गावो सर्वं निर्वाहसाधनमिव वर्त्तेरन् ( यत् ) यत्र च ( मन्तुः-यूथस्य पूर्व्या माता ) मानकर्त्तुः सन्तानसमूहस्य श्रेष्ठगुणैः पूर्णा माता स्यात् ( जनः ) जन्यमानः पुत्रः ( वाणस्य ) इन्द्रियसंस्थानस्य देहस्य ( सप्तधातुः ) रसरक्तादि-सप्तधातुभिः पूर्णः पुष्टः सकलाङ्गः ( इत् ) एव ( अभि० ) अभिष्यात्—अवश्यं भवेत् ॥ ४ ॥

**भाषान्वयार्थ**—( तत-इत-चारु सधस्थम्-अभिदीधय ) उसे ही सुन्दर समानस्थान परिवारवासयोग्य घर को आधार बना—सम्पन्न कर ( यत ) जहाँ ( गावः-धेनवः-वहतुं न शासत )

दूध देने वाली गौवें सब निर्वाहसाधन के समान बनी रहें ( यत् ) और जहाँ ( मन्तुः- यूथस्य पूर्व्या माता ) मान करने वाले सन्तानवर्ग की श्रेष्ठ गुणों से पूर्ण माता हो (जनः ) और उत्पन्न हुआ पुत्र ( वाणस्य ) इन्द्रिय-संस्थान अर्थात् देह का ( सप्तधातुः ) रस रक्तादि सात धातुओं से युक्त पुष्टाङ्ग बनाओ ( इत् ) ऐसा ही ( अभि० ) होना चाहिये ॥ ४ ॥

भावार्थ—गृहस्थ के घर में गौवें दूध देने वाली हों और सन्तानों की माता श्रेष्ठ गुणों से युक्त तथा पुत्र सर्वाङ्गपूर्ण होवें ऐसा घर आदर्श है ॥ ४ ॥

प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः ।
जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिञ्चता मधु ॥ ५ ॥

प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदम् । एकः । रुद्रेभिः । याति । तुर्वणिः । जरा । वा । येषु । अमृतेषु । दावने । परि । वः । ऊमेभ्यः । सिञ्चत । मधु ॥ ५ ॥

संस्कृतान्वयार्थः—( एकः-देवयुः ) देवानां नेता प्रापयिता वा परमात्मा केवल ( वः ) युष्मभ्यम् ( पदम्-अच्छ प्र रिरिचे ) प्रापणीयं सुफलं मोक्षं सम्यक्-नियतं करोति ( रुद्रेभिः-तुर्वणिः-याति ) यश्च दुष्टानां रोदयितृभिर्बलैः शीघ्रकारी शीघ्रमायाति ( येषु-अमृतेषु जरा दावने परि ) अथ च येषु मुमुक्षुषु परमात्मनः स्तुतिर्दानाय परितः सर्वतो वर्त्तते ( वः-ऊमेभ्यः-मधु सिञ्चत ) यूयं तेभ्यो रक्षकेभ्यो मधुरं भोज्यं पेयं च समर्पयत ॥ ५ ॥

भाषान्वयार्थ—( एकः-देवयुः ) विद्वानों का नेता केवल परमात्मा है ( वः ) हे विद्वानो ! तुम्हारे लिये ( पदम्-अच्छ प्र रिरिचे) प्रापणीय सुफल–मोक्ष को सम्यक् नियत करता है ( रुद्रेभिः-तुर्वणिः-याति ) और जो दुष्टों को रुलाने वाले बलों के साथ शीघ्रकारी प्राप्त होता है ( येषु-अमृतेषु जरा दावने परि ) और जिन मुमुक्षुओं में परमात्मा की स्तुति सर्वभाव से देने के लिये वर्त्तमान रहती है ( वः-ऊमेभ्यः-मधु सिञ्चत ) तुम लोग उन रक्षकों मुमुक्षुओं के लिये मधुर खाने पीने योग्य वस्तु समर्पित करो ॥ ५ ॥

भावार्थ—मुमुक्षु विद्वानों का इष्ट देव नेता परमात्मा ही है । वह उनके लिये मोक्ष पद प्रदान करता है । मुमुक्षुजनों के लिये मधुर खान पान की वस्तुएँ समर्पित करना पुण्य कार्य है । दुष्टों को रुलाने वाले उसके बल हैं ॥ ५ ॥

निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ६ ॥

निऽधीयमानम् । अपऽगूळ्हम् । अप्ऽसु । प्र । मे । देवानाम् । व्रतऽपाः । उवाच । इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे ज्ञानप्रकाशक परमात्मन् ! ( देवानां व्रतपाः ) विद्याकामानां व्रतपालक आचार्यः ( अप्सु-अपगूळ्हं निधीयमानम्-त्वा-मे-प्र-उवाच ) सर्वत्र व्याप्तेषु प्रकृतिपरमाणुषु तथा मदीयशरीरस्थप्राणेषु खल्वन्तर्हितं तथा स्वतः स्थीयमानं मह्यं प्रावोचत्-यतः ( विद्वान् इन्द्रः-हि ) विद्वान् ज्ञानदीप्तिमान् आचार्यो हि ( अनुचचक्ष ) त्वामनुदृष्टवान्-अनुभूतवान् (तेन-अनुशिष्टः-अहम्-आ-अगाम् ) तेन विदुषा प्रखरेणाचार्येण लब्धशिक्षोऽहं त्वां द्रष्टुं साक्षात्कर्तुं ध्यानस्थानमागतोऽस्मि ॥ ६ ॥

**भाषान्वयार्थ**—( अग्ने ) हे ज्ञानप्रकाशक परमात्मन् ! ( देवानां व्रतपाः ) विद्याकी कामना करने वालों का व्रतपालक आचार्य ( अप्सु-अपगूळ्हं निधीयमानम्-त्वा-मे-प्र-उवाच ) सब ओर व्याप्त परमाणुओं में तथा प्राणों में अन्तर्हित स्वयं विराजमान तुझे मेरे लिये उपदेश देता है । क्योंकि ( विद्वान्-इन्द्रः-हि ) ज्ञान दीप्तिमान् ही आचार्य ( अनु चचक्ष ) अनुदृष्ट किया–अनुभव किया ( तेन-अनुशिष्टः-अहम्-आ-अगाम् ) उस प्रखर विद्वान् आचार्य के द्वारा शिक्षा पाया हुआ मैं तुझे साक्षात् करने को–ध्यान को प्राप्त हुआ हूं ॥ ६ ॥

**भावार्थ**—विद्या की कामना करने वाले का आचार्य संसार के परमाणु परमाणु में और प्राणों में व्याप्त है । उपासक उसको अपने अन्दर साक्षात् करते हैं ॥ ६ ॥

**अक्षेत्रवित्क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः ।**
**एतद्वै भद्रमनुशासनस्योत स्रुतिं विन्दत्यञ्जसीनाम् ॥ ७ ॥**

अक्षेत्रऽवित् । क्षेत्रऽविदम् । हि । अप्राट् । सः । प्र । एति । क्षेत्रऽविदा । अनुऽशिष्टः । एतत् । वै । भद्रम् । अनुऽशासनस्य । उत । स्रुतिम् । विन्दति । अञ्जसीनाम् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अक्षेत्रवित्-क्षेत्रविदं हि-अप्राट् ) यः खलु किमपि क्षेत्रं ज्ञानक्षेत्रं न जानाति स खल्वन्यं तत्क्षेत्रस्य ज्ञानक्षेत्रस्य वेत्तारं पृच्छति हि ( सः-क्षेत्रविदा-अनुशिष्टः प्रैति ) स तत्क्षेत्रवेत्ता लब्धशिक्षः सन् तत् क्षेत्रं ज्ञानक्षेत्रं प्राप्नोति ( एतत्-वै भद्रम् ) एतत् खलु भद्रं कल्याणकर भजनीयं वा वस्तु ( उत ) अपि च ( अञ्जसीनां स्रुतिं विन्दति ) प्रसिद्धानां पद्धतीनाम् "*अञ्जसी प्रसिद्धा*" [ *ऋक्० १ । १०४ । ४ दयानन्दः* ] स्रुतिं सरणिं जनः परम्परया प्राप्नोति ॥ ७ ॥

**भाषान्वयार्थ**—( अक्षेत्रवित्-क्षेत्रविदं हि-अप्राट् ) जो किसी ज्ञानक्षेत्र को नहीं जानता है

वह उस ज्ञान क्षेत्र के वेत्ता को पूछता है ( सः-क्षेत्रविदा-अनुशिष्टः प्रैति ) वह उस ज्ञानक्षेत्र के वेत्ता से शिक्षा पाया हुआ उस ज्ञानक्षेत्र को प्राप्त होता है ( एतत्-वै-भद्रम् ) यह कल्याणकारी या सेवनीय वस्तु है ( उत ) और ( अञ्जसीनां स्रुतिं विन्दति ) प्रसिद्ध पद्धतियों की सरणि–रीति को मनुष्यपरम्परा से प्राप्त होता है ॥ ७ ॥

भावार्थ—किसी विद्या विशेष को न जानने वाला उसके जानने वाले के पास जाकर ज्ञान प्राप्त करे यह कल्याणकारी व्यवहार है और परम्परा से चली आई पद्धतियो में रीति है ॥ ७ ॥

अद्येदु प्राणीदममन्निमाहापीवृतो अधयन्मातुरूधः ।
एमेनमाप जरिमा युवानमहेळन्वसुः सुमना बभूव ॥ ८ ॥

अद्य । इत् । ऊँ इति । प्र । आनीत् । अममन् । इमा । अहा । अपिऽवृतः । अधयत् । मातुः । ऊधः । आ । ईम् । एनम् । आप । जरिमा । युवानम् । अहेळन् । वसुः । सुऽमनाः । बभूव ॥ ८ ॥

संस्कृतान्वयार्थः—( अद्य-इत्-ऊ ) सम्प्रत्येव हि खलु ( प्राणीत् ) गृहिण्या गर्भे प्राप्त आत्मा प्राणिति ( इमा-अहा-अपिवृतः-अममन् ) इमानि गर्भवासभवानि दिनानि गर्भान्तर्हितः सन् स्वात्मानं मन्यते, अथ बहिरागत्य ( मातुः-ऊधः-अधयत् ) स्वमातुः स्तनं पिबति ( एनं युवानम्-ईम्-जरिमा-आ-आप ) एतं युवानं सन्तं पुनर्जरावस्था प्राप्नोति तथापि यावज्जीवति ( अहेळन् वसुः सुमनाः बभूव ) तां जरावस्थामनाद्रियमाणोऽपि "हेडृ अनादरे" [ भ्वादि० ] शरीरं वसिता वासशीलः प्रसन्नमना भवति ॥ ८ ॥

भाषान्वयार्थ—( अद्य-इत्-उ ) अभी जो ( प्राणीत् ) स्त्री के गर्भ में आया हुआ आत्मा प्राण लेता है ( इमा-अहा-अपिवृतः-अमीमन् ) इन गर्भवास के दिनों में गर्भ के अन्दर रहता हुआ अपने को मानता है–अनुभव करता है फिर बाहर आकर ( मातुः-ऊधः-अधयत ) अपनी माता के स्तन को पीता है ( एनं युवानम्-ईम्-जरिमा-आ-आप ) इस युवा होते हुए को फिर जरावस्था प्राप्त होती है तो भी जब तक जीता है ( अहेळन् वसुः सुमनाः बभूव ) उस जरावस्था का अनादर न करता हुआ शरीर में वसा रहता हुआ प्रसन्न मन वाला होता है ॥ ८ ॥

भावार्थ—आत्मा जैसे ही गर्भ में रहता है प्राण लेना–श्वास लेना आरम्भ कर देता है। गर्भ में रहता हुआ अपने को अनुभव करता है। गर्भ से बाहर आकर माता के स्तन को पीता है, पुनः युवा बनता है, फिर जरावस्था को प्राप्त हुआ भी उसका अनादर न करता हुआ भी शरीर में प्रसन्न रहता है ॥ ८ ॥

एतानि भद्रा कलश क्रियाम कुरुश्रवण ददतो मघानि ।
दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि यं बिभर्मि ॥ ९ ॥

एतानि । भद्रा । कलश । क्रियाम । कुरुऽश्रवण । ददतः । मघानि । दानः । इत् । वः । मघऽवानः । सः । अस्तु । अयम् । च । सोमः । हृदि । यम् । बिभर्मि ॥ ९ ॥

**संस्कृतान्वयार्थः**—( कलश कुरुश्रवण ) हे ज्ञानकलापूर्ण कुरव आज्ञाकारिणः श्रवणयोग्याः शिष्या यस्य तादृश ! आचार्य ! ( ददतः ) तव ज्ञानं प्रयच्छतः प्रतीकाराय ( एतानि मघानि ) इमानि विविधानि धनवस्त्रादीनि वयमुपहरामः ( मघवानः ) हे विविधधनवस्त्राणि विद्यन्ते दानाय येषां तं यूय धनवन्तः शिष्याः ( वः सः-दानः-इत्-अस्तु ) युष्माकं स दातव्यपदार्थः स्वीकृतोऽस्तु ( अयं सोमः-च ) एष सोम्यज्ञानप्रवाहः शिक्षणविषयश्च युष्मासु तिष्ठतु ( यं हृदि बिभर्मि ) यं सोम्यं ज्ञानविषयं स्वहृदये खल्वहं धारयामि ॥ ६ ॥

**भाषान्वयार्थ**—( कलश कुरुश्रवण ) ज्ञान कलाओं से पूर्ण तथा आज्ञाकारी श्रवणयोग्य शिष्यों वाले हे आचार्य ! ( ददतः ) तुझ ज्ञान देते हुए के प्रतीकारार्थ ( एतानि मघानि ) ये विविध धन वस्त्रादि हम लोग भेंट देते हैं ( मघवानः ) हे विविध धनवस्त्र आदि दान देने वाले शिष्यो ! ( वः-सः-दानः-इत्-अस्तु ) तुम्हारा वह दातव्य पदार्थ स्वीकार करने योग्य है ( अयं सोमः-च ) और यह सोम्य ज्ञानप्रवाह शिक्षण विषय भी तुम्हारे अन्दर स्थिर हो (यं हृदि बिभर्मि ) जिस ज्ञानविषय को अपने हृदय में मैं धारण कर रहा हूं ॥ ६ ॥

**भावार्थ**—समस्त ज्ञान कलाओं से पूर्ण और आज्ञाकारी सुनने वाले शिष्य जिसके हों वह आचार्य कहलाता है । उसके लिये भांति-भांति के धन वस्त्र आदि भेंट करने चाहियें । वह आचार्य भी अपने ज्ञान का दान उनके हृदयों में भली भांति बिठा दे ॥ ६ ॥



# त्रयस्त्रिंशं सूक्तम्

ऋषिः—कवष ऐलूषः ।

देवता—१ विश्वेदेवाः । २, ३ इन्द्रः । ४, ५ कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः । ६-९ उपमश्रवा मित्रातिथिपुत्रः ।

छन्दः—१ त्रिष्टुप् । २ निचृद् बृहती । ३ भुरिग् बृहती । ४-७, ९ गायत्री । ८ पादनिचृद् गायत्री ।

स्वरः—१ धैवतः । २, ३ मध्यमः । ४-९ षड्जः ।

विषयः—अत्र सूक्ते गर्भदुःखस्य संसारे मरणत्रासस्यापवारणाय परमात्मनः स्तुतिप्रार्थनोपासना ज्ञानपूर्विका अनुष्ठेया इति वर्णनम् ।

इस सूक्त में गर्भदुःख और संसार में मरणत्रास के निवारणार्थ परमात्मा की स्तुति प्रार्थना उपासना करनी चाहिये इस विषय का वर्णन है ।

प्र मां युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमन्तरेण ।
विश्वे देवासो अध मामरक्षन् दुःशासुरागादिति घोष आसीत् ॥ १ ॥

प्र । मा । युयुज्रे । प्रऽयुजः । जनानाम् । वहामि । स्म । पूषणम् । अन्तरेण । विश्वे । देवासः । अध । माम् । अरक्षन् । दुःऽशासुः । आ । अगात् । इति । घोषः । आसीत् ॥ १ ॥

**संस्कृतान्वयार्थः**—( जनानां प्रयुजः ) ज्ञानं प्रदाय मनुष्याणां प्रेरयितारो विद्वांसो गुरवः ( मा प्रयुयुज्रे ) मां ज्ञानदानेन प्रेरितवन्तः प्रेरयन्ति वा, अत एव ( अन्तरेण पूषणं वहामि स्म ) अन्तःस्थेन-अन्तःकरणेनाहं पोषयितारं परमात्मानं धारयामि-अनुभवामि ( अध ) अनन्तरं तस्मादेव ( विश्वे देवासः-माम् अरक्षन् ) प्राणाः *"प्राणा वै विश्वेदेवाः"* *[ तै० ५ । २ । २ । १ ]* मां रक्षन्ति ( दुःशासुः-आ-अगात्-इति घोषः-आसीत् ) दुःखेन यः शसति हिनस्ति स मृत्युः कठिनरोगो वा *"शसु हिंसायाम्"* *[ भ्वादि० ]* ततः-उण् बाहुलकात् स मारको मृत्युः-आगमिष्यति-इति जनघोषोऽस्ति हि ॥ १ ॥

**भाषान्वयार्थ**—( जनानां प्रयुजः ) ज्ञान द्वारा मनुष्यों को प्रेरित करने वाले विद्वान् ( मा प्रयुयुज्रे ) मुझे ज्ञान देकर प्रेरित करें या करते हैं ततः ( अन्तरेण पूषणं वहामि स्म ) अन्तःकरण–मन से पोषण करने वाले परमात्मा को में धारण करता हूं–मैं अनुभव करता हूं ( अध ) पुनः ( विश्वे देवासः-माम्-अरक्षन् ) मेरे प्राण भी मेरी रक्षा करते हैं ( दुःशासुः-आ-अगात्-इति घोषः-आसीत् ) दुःख से पीड़ित करने वाला मृत्यु या कठिन रोग मुझे आ दबाता है ऐसा प्रत्येक मनुष्य का घोष चिल्लाना पुकारना होता है ॥ १ ॥

**भावार्थ**—विद्वान् गुरुजन ज्ञान देकर मनुष्यों को सत्कर्म में प्रेरित करते हैं तथा परमात्मा की ओर प्रवृत्त करते हैं। जिससे कि वे परमात्मा को आन्तरिक भाव से अनुभव करते हैं। संसार में वे अधिक काल तक जीवन धारण करते हैं अन्यथा मृत्यु या कठिन रोग के भारी दुःख को भोगते हैं ॥ १ ॥

**सं मा॑ तपन्त्य॒भित॑: स॒पत्नी॑रिव॒ पर्श॑वः ।**
**नि बा॑धते॒ अम॑तिर्न॒ग्नता॒ जसु॒र्वेर्न वे॑वीयते म॒तिः ॥ २ ॥**

सम् । मा॒ । त॒प॒न्ति॒ । अ॒भित॑: । स॒पत्नी॑:ऽइव । पर्श॑वः । नि । बा॒ध॒ते॒ । अम॑तिः । न॒ग्नता॑ । जसु॑: । वेः । न । वे॒वी॒य॒ते॒ । म॒तिः ॥ २ ॥

**संस्कृतान्वयार्थः**—( मा पर्शवः सपत्नीः-इव-अभितः सं तपन्ति ) मृत्योरनन्तरं पुनर्जन्मनि मां मातृगर्भाशये मातृदेहपर्शवः-अन्यपत्न्य इवोभयतः सम्पीडयन्ति ( अमतिः-नग्नता निबाधते ) तदाऽज्ञताऽबोधावस्था निर्लज्जता वस्त्रविहीनतेव साधनहीनता–अकर्मण्यता अन्तर्दुःखयति ( जसुः-वेः-न मतिः-वेवीयते ) पुनः संसारे जीवन्तं युवानं चोपक्षयकर्त्ता जराप्रवाहोऽपि पीडयति ततस्तु यथा पक्षिणो मतिर्बुद्धिरुपक्षयितुर्व्याधाद् 'जसुः' षष्ठी स्थाने प्रथमा भृशं विचलिता भवति ॥ २ ॥

**भाषान्वयार्थ**—( मा पर्शवः सपत्नीः-इव-अभितः-संतपन्ति ) मृत्यु के पश्चात् पुनर्जन्म में गर्भाशय में मातृदेह की पसलियां मुझे सपत्नियों की भांति इधर उधर से पीड़ित करती हैं ( अमतिः-नग्नता निबाधते ) और तब मतिरहितता–अज्ञता तथा निर्लज्जता वस्त्र-विहीनता की भांति साधनहीनता दुःख देती है ( जसुः-वेः-न मतिः-वेवीयते ) पुनः संसार में जीते हुए युवक को क्षीण करने वाला जराप्रवाह भी पीड़ित करता है जैसे पक्षी की मति नाश करने वाले शिकारी के भय से विचलित हो जाती है ॥ २ ॥

**भावार्थ**—जीवात्मा जब माता के गर्भ में जाता है तो तंग स्थान में पीड़ा अनुभव करता है तथा अज्ञता और कर्म करने में असमर्थता भी उसे पीड़ित करती है मृत्यु का भय भी छाया हुआ रहता है ॥ २ ॥

**मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्य॑: स्तो॒तारं॑ ते शतक्रतो ।**
**स॒कृत्सु नो॑ मघवन्निन्द्र मृळया॒धा॑ पि॒तेव॑ नो भव ॥ ३ ॥**

मूषः । न । शिश्ना । वि । अदन्ति । मा । आऽध्यः । स्तोतारम् । ते । शतक्रतो इति शतक्रतो । सकृत् । सु । नः । मघऽवन् । इन्द्र । मळय । अध । पिताऽइव । नः । भव ॥ ३ ॥

**संस्कृतान्वयार्थः**—( शतक्रतो-इन्द्र ) हे बहुप्रज्ञानवन् परमेश्वर ! ( मा-आध्यः ) मां मानसवासनाः कामनाः *"आध्यः कामाः"* [ निरु० ४ । ७ ] ( व्यदन्ति ) विविधं खादन्ति ( मूषः-न शिश्ना ) यथा मूषिकाः खल्वन्नरसादिषु क्लिन्नानि सूत्राणि स्वाङ्गानि पुच्छादीनि वा *"स्नातानि सूत्राणि स्वाङ्गाभिधानं वा"* [ निरु० ४ । ७ ] विविधं खादन्ति तद्वत् ( मघवन् ) हे ऐश्वर्यवन् ! परमात्मन् ! ( सकृत्-नः सुमृळय ) एकवारं तु अस्मान् सम्यक् सुखय मोक्षप्रदानेन ( नः-पिता-इव भव ) त्वमस्माकं पिता-इव पितृसमानो भव ॥ ३ ॥

**भाषान्वयार्थ**—( शतक्रतो-इन्द्र ) हे बहुत प्रज्ञानवन् परमेश्वर ! ( मा-आध्यः ) मुझे मानसिक वासनायें ( वि-अदन्ति ) विविध रूप से खा रही हैं-सता रही हैं ( मूषः-न शिश्ना ) जैसे चूहे अन्नादि रस से लिप्त सूत्रों को या अपने पुच्छादि अंगों को खाते हैं ( मघवन् ) हे ऐश्वर्यवन् परमात्मन् ! ( सकृत् नः सुमृळय ) एक बार तो हमें मोक्ष प्रदान कर सुखीकर ( नः पिता-इव भव ) तू हमारे पिता के समान हो—है ॥ ३ ॥

**भावार्थ**—मानसिक वासनायें मनुष्य के आन्तरिक जीवन को खाती रहती हैं। उनसे बचने का उपाय केवल परमात्मा की शरण है या उसकी उपासना है। मानव के सांसारिक कल्याण और मोक्ष पाने का भी परम साधन है ॥ ३ ॥

**कुरुश्रवणमावृणि राजानं त्रासदस्यवम् ।**
**मंहिष्ठं वाघतामृषिः ॥ ४ ॥**

कुरुऽश्रवणम् । आऽवृणि । राजानम् । त्रासदस्यवम् । मंहिष्ठम् । वाघताम् । ऋषिः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( ऋषिः ) अध्यात्मदृष्ट्या दर्शनशील उपासकोऽहम् ( कुरुश्रवणम् ) अध्यात्मर्त्विजां तत्कृतप्रार्थनायाः श्रवणकर्त्तारम् ( त्रासदस्यवम् ) भयोपक्षयितृणां प्रमुखम् ( वाघतां मंहिष्ठम् ) अध्यात्मर्त्विजाम् अतिशयेन ज्ञानसुखदातारम् (राजानम् ) स्वामिनं परमात्मानम् ( आवृणि ) याचे प्रार्थये ॥ ४ ॥

**भाषान्वयार्थ**—( ऋषिः ) अध्यात्म दृष्टि से दर्शनशील मैं उपासक ( कुरुश्रवणम् ) अध्यात्म ऋत्विजों के द्वारा की हुई प्रार्थना के सुनने वाले—( त्रासदस्यवम् ) भयनाशक—(वाघतां मंहिष्ठम् ) अध्यात्म ऋत्विजों के अत्यन्त सुख दाता—( राजानम् ) स्वामी परमात्मा को ( आवृणि ) प्रार्थना में लाता हूँ ॥ ४ ॥

भावार्थ—अध्यात्मदर्शी विद्वानों द्वारा उपदेश पाया हुआ उपासक सुखदाता परमात्मा की प्रार्थना नित्य किया करे ॥ ४ ॥

यस्य मा हरितो रथे तिस्रो वहन्ति साधुया ।

स्तवै सहस्रदक्षिणे ॥ ५ ॥

यस्य । मा । हरितः । रथे । तिस्रः । वहन्ति । साधुऽया । स्तवै । सहस्रऽदक्षिणे ॥ ५ ॥

संस्कृतान्वयार्थः—( यस्य ) यस्य परमात्मनः ( सहस्रदक्षिणे ) बहुफललाभकरेऽध्यात्मपदे ( रथे ) रमणीयमोक्षे ( मा तिस्रः-हरितः साधुया वहन्ति ) मां तिस्रः स्तुतिप्रार्थनोपासनाः–हरणशीलाऽऽहरणाः साधु प्रापयन्ति 'साधुया' "सुपां सुलुक्०" याच् प्रत्ययः ( स्तवै ) तं प्रशंसामि ॥ ५ ॥

भाषान्वयार्थ—( यस्य ) जिस परमात्मा के ( सहस्रदक्षिणे रथे ) बहुत लाभ वाले रमणीय मोक्ष पद में ( मा तिस्रः-हरितः ) मुझे तीन स्तुति प्रार्थनोपासनायें सुख पहुँचाने वाली ( साधुया वहन्ति ) सुगमता से पहुँचाती हैं ( स्तवै ) उस परमात्मा की मैं प्रशंसा करता हूँ ॥ ५ ॥

भावार्थ—परमात्मा की स्तुति प्रार्थना उपासना द्वारा मनुष्य मोक्ष का भागी बनता है ॥ ५ ॥

यस्य प्रस्वादसो गिर उपमश्रवसः पितुः ।

क्षेत्रं न रण्वमूचुषे ॥ ६ ॥

यस्य । प्रऽस्वादसः । गिरः । उपमऽश्रवसः । पितुः । क्षेत्रम् । न । रण्वम् । ऊचुषे ॥ ६ ॥

संस्कृतान्वयार्थः—( यस्य-उपमश्रवसः पितुः ) यस्य खलूपरि मानवतः श्रवः श्रवणं वेदश्रवणं यस्मात् तस्य सर्वोत्कृष्टज्ञानवतः सर्वपालकस्य परमात्मनः ( गिरः प्रस्वादसः ) वाचो मन्त्रवाचः प्रकृष्टानन्ददायिन्यः सन्ति तस्य परमात्मनः शरणम् ( ऊचुषे रण्वं क्षेत्रं न) परमात्मनः स्तुतिमुक्तवते–उपासकाय रमणीयं सर्वसुखप्रदान्नवत्क्षेत्रमिवास्ति ॥ ६ ॥

भाषान्वयार्थ—( यस्य-उपमश्रवसः पितुः ) जिस सर्वोच्च ज्ञान वाले पिता परमात्मा की ( गिरः प्रस्वादसः ) मन्त्रवाणियाँ प्रकृष्ट आनन्द देनेवाली हैं उस परमात्मा की ( ऊचुषे रण्वं क्षेत्रं न ) स्तुति करने वाले उपासक के लिये रमणीय सर्व-सुखप्रद अन्नक्षेत्र की भाँति उसकी शरण है ॥ ६ ॥

भावार्थ—उच्च ज्ञान श्रवण कराने वाला परमात्मा पिता के समान है उसकी मन्त्रवाणियाँ बहुत आनन्दरस प्रदान करती हैं । स्तुति करने वाले के लिये रमणीय शरण प्राप्त होती है ॥ ६ ॥

अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि ।
पितुष्टे अस्मि वन्दिता ॥ ७ ॥

अधि । पुत्र । उपमऽश्रवः । नपात् । मित्रऽअतिथेः । इहि । पितुः । ते । अस्मि । वन्दिता ॥ ७ ॥

**संस्कृतान्वयार्थः**—( मित्रातिथेः-नपात् ) स्नेहिनोऽतिथेस्तव शरणं प्राप्तस्योपासकस्य हे न पातयितः ! अपितूत्कर्षयितः ! ( उपमश्रवः ) उपरिश्रवणीय वेदज्ञानवन् ! परमात्मन् ! ( ते पितुः-वन्दिता पुत्र-अस्मि-अधि ) अहं पितृभूतस्य तव स्तोता पुत्रोऽस्मि पुत्र इति सोर्लुक् "सुपां सुलुक्" [ अष्टा० ७ । १ । ३९ ] तस्मान्मयि ( इहि ) विराजस्व ॥ ७ ॥

**भाषान्वयार्थ**—( मित्रातिथेः-नपात् ) स्नेही अतिथि अर्थात् तुझसे स्नेह करने वाले उपासक के हे न गिराने वाले किन्तु उत्कर्ष की ओर ले जाने वाले ( उपमश्रवः ) हे उच्चश्रवणीय ज्ञानवाले परमात्मन् ! ( ते पितुः-वन्दिता पुत्र-अस्मि-अधि ) तुझ पिता के समान का स्तुतिकर्त्ता में पुत्र हूँ अतः मेरे अन्दर ( इहि ) विराजमान होवो ॥ ७ ॥

**भावार्थ**—परमात्मा अनुरागी उपासक का उत्कर्ष की ओर ले जाने वाला और वेदज्ञान-श्रवण का कराने वाला है। पुत्र की भाँति उसका मान करना चाहिये ॥७॥

यदीशीयामृतानामुत वा मर्त्यानाम् ।
जीवेदिन्मघवा मम ॥ ८ ॥

यत् । ईशीय । अमृतानाम् । उत । वा । मर्त्यानाम् । जीवेत् । इत् । मघऽवा । मम ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अमृतानाम्-उत वा मर्त्यानां यत्-ईशीय ) हे परमात्मन् । मोक्षसुखानां तथा चापि संसारसुखानामहं यदपि स्वामित्वं कुर्याम, अभ्युदयनिःश्रेयससुखानां स्वामी भवेयं तर्हि ( मम मघवा जीवेत्-इत् ) ममात्मा जीवतीति मन्येऽहम् ॥ ८ ॥

**भाषान्वयार्थ**—( अमृतानाम्-उत वा मर्त्यानां यत्-ईशीय ) हे परमात्मन् ! मोक्ष सुखों तथा सांसारिक सुखों का भी मैं स्वामी हो जाऊँ तो ( मम मघवा जीवेत्-इत् ) मेरा आत्मा—जीवात्मा जीता है ऐसा मैं समझता हूँ ॥ ८ ॥

**भावार्थ**—मानव का संसार में जीना सफल तभी समझा जाता है जब कि वह सांसारिक सुख लाभ लेने के साथ अमृत—मोक्ष सुख का भी अपने को पात्र या अधिकारी बनावे ॥ ८ ॥

न देवानामति व्रतं शतात्मा चन जीवति ।
तथा युजा वि वावृते ॥ ९ ॥

न । देवानाम् । अति । व्रतम् । शतऽआत्मा । चन । जीवति । तथा । युजा । वि । ववृते ॥ ९ ॥

**संस्कृतान्वयार्थः**—( देवानां व्रतम्-अति न शतात्मा चन जीवति ) विदुषां दिव्यपदार्थानां कर्मनियमं वाऽतिक्रम्य नहि शतसंवत्सरः शतसंवत्सरायुष्कः *"संवत्सर आत्मा"* [ तै० सं० ७ । ५ । २५ । १ ] कश्चन जीवति ( तथा युजा विवावृते ) तथैव योक्त्र्येन परमात्मना च वियुज्यते वियुक्तो भवति ॥ ९ ॥

**भाषान्वयार्थ**—( देवानां व्रतम्-अति न शतात्मा चन जीवति ) विद्वानों के उपदिष्ट आचरण को तथा दिव्य पदार्थों के नियम को लाँघकर–तोड़कर सौ वर्ष आयु वाला कोई भी जी नहीं सकता ( तथा युजा विवावृते ) वैसे ही समागमयोग्य परमात्मा से वियुक्त हो जाता है ॥ ९ ॥

**भावार्थ**—विद्वानों द्वारा उपदिष्ट आचरण तथा अग्नि सूर्य आदि पदार्थों के नियमों को तोड़कर सौ वर्ष की आयु को कोई प्राप्त नहीं कर सकता और परमात्मा के समागम से भी उसे अलग होना पड़ता है ॥ ९ ॥



# चतुस्त्रिंशं सूक्तम्

ऋषिः—कवष ऐलूषोऽक्षो वा मौजवान् ।

देवताः—१, ७, ९, १२, १३ अक्षप्रशंसा । २-६, ८, १०, ११, १४ अक्षकितवनिन्दा ।

छन्दः—१, २, ८, १२, १३ त्रिष्टुप् । ३, ६, ११, १४ निचृत् त्रिष्टुप् । ४, ५, ९, १०, विराट् त्रिष्टुप् । ७ जगती ।

स्वरः—१-६, ८-१४ धैवतः । ७ निषादः ॥

अत्र सूक्ते द्यूतक्रीडाया दुष्परिणामप्रदर्शनपूर्विका निन्दा कृषिप्रशंसा च प्रदर्श्यते ।

इस सूक्त में द्यूत-जुआ खेलने के दुष्परिणाम दिखलाते हुए कृषि की प्रशंसा दिखलाई है ।

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥ १ ॥

प्रावेपाः । मा । बृहतः । मादयन्ति । प्रवातेऽजाः । इरिणे । वर्वृतानाः । सोमस्यऽइव । मौजवतस्य । भक्षः । विऽभीदकः । जागृविः । मह्यम् । अच्छान् ॥ १ ॥

**संस्कृतान्वयार्थः**—( बृहतः प्रावेपाः ) महतो विभीतकस्य फलानि—अक्षाः प्रवेपिणः प्रकम्पनशीलाः "प्रवेपिणो महतो विभीदकस्य फलानि" [ निरु० ९ । ६ ] ( प्रवातेजाः ) निम्नस्थाने पर्वतस्योपत्यके जाताः "प्रवातेजाः प्रवणे जाः" [ निरु० ९ । ६ ] ( इरिणे वर्वृतानाः ) निर्जले निरोषधिके प्रदेशे जङ्गले वर्त्तमानाः [ निरु० ९ । ६ ] ( मा मादयन्ति ) मां हर्षयन्ति ( मौजवतस्य सोमस्य-इव भक्षः ) मूजवति मुञ्जवति पर्वते जातस्य "मूजवान् पर्वतो मुञ्जवान्" [ निरु० ९ । ६ ] सोमस्यौषधिविशेषस्य भक्षो भक्षणं यथा तथा विभीदकस्तत्फलभक्षो भक्षणं स्वादु देवने द्यूतक्रीडने भवति ( मह्यं जागृविः-अच्छान् ) मह्यं जागृतिप्रदः सन् मामचच्छदत् ॥ १ ॥

**भाषान्वयार्थ**—( बृहतः प्रावेपाः ) महान् विभीदक वृक्ष के फल—अक्ष कम्पनशील या कम्पाने वाले हैं ( प्रवातेजाः ) निम्न स्थान पर्वत की उपत्यका में उत्पन्न हुए ( इरिणे वर्वृतानाः ) जलरहित ओषधिरहित वनप्रदेश में होने वाले ( मा मादयन्ति ) मुझे हर्षित करते हैं ( मौजवतस्य सोमस्य इव भक्षः ) मूंजवाले पर्वत पर उत्पन्न हुए सोम ओषधि विशेष के भक्षण

की भाँति विभीदक वृक्ष के फल का भक्षण स्वाद वाला द्यूत क्रीडन स्थान में होता है ( मह्यं-जागृविः-अच्छान् ) मुझे जागृति देने वाला होता हुआ मेरे ऊपर छाया हुआ है ॥ १ ॥

भावार्थ—अक्ष जुआ खेलने के पाशे जुआरी को जुआ खेलने में सोम पान जैसा हर्ष अनुभव कराते हैं और जागृति देते हैं ऐसा वह समझा करता है ॥ १ ॥

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥ २ ॥

न । मा । मिमेथ । न । जिहीळे । एषा । शिवा । सखिऽभ्यः । उत । मह्यम् । आसीत् । अक्षस्य । अहम् । एकऽपरस्य । हेतोः । अनुऽव्रताम् । अप । जायाम् । अरोधम् ॥ २ ॥

संस्कृतान्वयार्थः—( एषा ) इयं मे पत्नी ( मा ) माम् ( न मिमेथ ) न हिनस्ति-पीडयति ( न जिहीळे ) नह्यनाद्रियते "हेडृ अनादरे" [ भ्वादि० ] ( सखिभ्यः-उत मह्यम् ) सहयोगिभ्योऽपि च मह्यम् ( शिवा-आसीत् ) कल्याणकरी खल्वस्ति ( अक्षस्य-एकपरस्य हेतोः ) द्यूतस्यैकमात्रदोषप्रधानस्य हेतोरेव ( अहम्-अनुव्रतां जायाम्-अप-अरोधम् ) अहमनुकूलमाचरन्तीं पत्नीं नारक्षम् ॥ २ ॥

भाषान्वयार्थ—( एषा ) यह मेरी पत्नी ( मा ) मुझे ( न मिमेथ ) पीडा नहीं पहुँचाती—दुःख नहीं देती है ( न जिहीळे ) न अनादर करती है, तथा ( सखिभ्यः-उत मह्यम् ) मेरे सहयोगियों के लिये और मेरे लिये ( शिवा-आसीत् ) कल्याणी है—सुख देने वाली है, परन्तु खेद है ! ( अक्षस्य-एकपरस्य हेतोः ) एक मात्र जुए के दोष के कारण ( अहम्-अनुव्रतां जायाम्-अप-अरोधम् ) में अनुकूल आचरण करती हुई पत्नी को न रख सका—नहीं रख सकता वह मुझ से अलग हो जाती है या में स्वयं उसको नहीं रख सकता ॥ २ ॥

भावार्थ—द्यूतदोष के कारण मनुष्य सुख देने वाली आदर करने वाली अनुकूल पत्नी को भी अपने से अलग कर बैठता है ॥ २ ॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम् ।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥ ३ ॥

द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि । न । नाथितः । विन्दते । मर्डितारम् । अश्वस्यऽइव । जरतः । वस्न्यस्य । न । अहम् । विन्दामि । कितवस्य । भोगम् ॥ ३ ॥

**संस्कृतान्वयार्थः**—( श्वश्रूः-द्वेष्टि ) कितवस्य श्वश्रूस्तं द्वेष्टि नाद्रियते ( जाया-अपरुणद्धि ) जाया तं कितवं न वाञ्छति ततोऽपगता भवति ( नाथितः-मर्डितारं न विन्दते ) तद्दोषेण पीडितः सन् सुखयितारं न प्राप्नोति न लभते न कश्चित् साहाय्यं ददाति ( वस्न्यस्य-अश्वस्य जरतः-इव ) मूल्यार्हस्य बहुमूल्यस्य जरागतस्याश्वस्येव स्थितो ऽहं यथा जरागतो बहुमूल्यवान् भोगपदार्थमुचितं न लभते तद्वत् स्थितोऽहं कुतश्चिदपि ( भोगं न विन्दामि ) भोगं न लभे यतः ( कितवस्य ) कः कितवस्य भोगं दद्यात् ॥ ३ ॥

भाषान्वयार्थ—(श्वश्रूः द्वेष्टि) कितव–जुआ खेलने वाले की सास द्वेष करती है—आदर नहीं करती है (जाया-अप रुणद्धि) पत्नी उसे नहीं चाहती—अलग हो जाती है (नाथितः-मर्डितारं न विन्दते) जुए के दोष से पीड़ित हुआ सुख देने वाले को प्राप्त नहीं करता है—कोई उसकी सहायता नहीं करता है (वस्न्यस्य-अश्वस्य-जरतः-इव) मूल्यवान्-बहुमूल्य जराजीर्ण उचित-भोगरहित घोड़े के समान (भोगं न विन्दामि) भोग प्राप्त नहीं करता हूँ (कितवस्य) कौन जुआ खेलने वाले के लिये भोग पदार्थ दे ॥३॥

भावार्थ—जुआ खेलने वाले के प्रति उसकी सास घृणा करती है। पत्नी उसे नहीं चाहती है। कोई सुख देने वाला उसे नहीं मिलता। उचित भोगों से वञ्चित रहता है ॥३॥

**अन्ये जायां परिमृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।**
**पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥ ४ ॥**

अन्ये । जायाम् । परि । मृशन्ति । अस्य । यस्य । अगृधत । वेदने । वाजी । अक्षः । पिता । माता । भ्रातरः । एनम् । आहुः । न । जानीमः । नयत । बद्धम् । एतम् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( यस्य वाजी-अक्षः-वेदने-अगृधत् ) यस्य कितवस्य बलवान् द्यूतपाशः द्यूतधननिमित्तमभिकांक्षति यद् धनमागच्छेत् कुतश्चिदपि चौर्यकर्मणापि वा ( अस्य जायाम्-अन्ये परिमृशन्ति ) अस्य तादृशस्य कितवस्य द्यूतव्यसनिनः पत्नीमन्ये जनाः कितवाः परितः स्पृशन्ति वस्त्राभूषणादिग्रहणाय दूषयन्ति ( पिता माता भ्रातरः-न जानीमः-एनम्-आहुः ) पित्र्यादय पारिवारिकजना एनं न जानीमहे–इति ते कथयन्ति ( एतं बद्धं नयत ) हे कितवाः राज्यकर्मचारिणो वा, एतं बद्धं कृत्वा नयत ॥ ४ ॥

भाषान्वयार्थ—(यस्य वाजी-अक्षः-वेदने-अगृधत्) जिस कितव–जुआ खेलने वाले का द्यूत-पाश-जुए का पाशा धन को चाहता है कि धन आये, कहीं से चोरी का भी आये (अस्य जायाम्-अन्ये परिमृशन्ति) इस जुआरी की पत्नी को अन्य जुआरी जन सब ओर से वस्त्र आभूषणादि पकड़ते हुए दूषित करते हैं (पिता माता भ्रातरः) पिता माता भाई लोग (न जानीमः-एनम्-आहुः) इसे हम नहीं जानते ऐसा कहते हैं (एतं बद्धं नयत) हे जुआरियो या राजकर्मचारियो! इसे बांधकर ले जाओ ॥४॥

भावार्थ—जुए का व्यसन जब किसी को लग जाता है तो वह कहीं से भी धन मिले चाहे चोरी से मिले उसे जुए पर लगा देता है। धन खोकर अपनी पत्नी की दुर्दशा कराता है माता पिता भाई उसका साथ नहीं देते। इस प्रकार दुखी होकर अपने जीवन को समाप्त कर देता है ॥४॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥ ५ ॥

यत्। आऽदीध्ये। न। दविषाणि। एभिः। परायत्ऽभ्यः। अव। हीये। सखिभ्यः। निऽउप्ताः। च। बभ्रवः। वाचम्। अक्रत। एमि। इत्। एषाम्। निःऽकृतम्। जारिणीऽइव ॥ ५ ॥

संस्कृतान्वयार्थः—( यत्-आदीध्ये-एभिः-न दविषाणि ) यदा संकल्पयामि-एभिरक्षैर्न क्रीडिष्यामि ( परायद्भ्यः सखिभ्यः अवहीये ) परागच्छद्भ्यः स्वयं बलादागच्छद्भ्यः कितवेभ्योऽवस्थितो भवामि स्तब्धो भवामि (बभ्रवः-न्युप्ताः-च वाचम्-अक्रत ) बभ्रुवर्णा अक्षाः क्षिप्ताश्च शब्दं कुर्वन्ति तदा ( एषां निष्कृतं जारिणी-इव-एमि ) एषामक्षाणां सम्पादितं स्थानं व्यभिचारिणीव गच्छामि ॥ ५ ॥

भाषान्वयार्थ—(यत्-आदीध्ये-एभिः-न दविषाणि) जब मैं सङ्कल्प करता हूँ इन पाशों से नहीं खेलूँगा (परायद्भ्यः सखिभ्यः-अवहीये) मुझ पर प्रभाव डालने वाले आते हुए जुआरी साथियों से मैं दब जाता हूँ (बभ्रवः-न्युप्ताः-च वाचम्-अक्रत) चमकते हुए जुए के पाशे फेंके हुए जब शब्द करते हैं (एषां निष्कृतं जारिणी-इव-एमि) इन पाशों के सजे हुए स्थान की ओर व्यभिचारिणी स्त्री की भाँति चला जाता हूँ ॥५॥

भावार्थ—जुए का व्यसन जब किसी को पड़ जाता है उससे बचना कठिन हो जाता है बचने की भावना या सङ्कल्प होते हुए भी पुराने साथियों को ओर जुए के स्थान को देखकर जुए की ओर फिर चल पड़ता है। यह व्यसन बहुत बुरा है और इससे बचना चाहिये ॥५॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३शूशुजानः।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥ ६ ॥

सभाम्। एति। कितवः। पृच्छमानः। जेष्यामि। इति। तन्वा। शूशुजानः। अक्षासः। अस्य। वि। तिरन्ति। कामम्। प्रतिऽदीव्ने। दधतः। आ। कृतानि। ॥ ६ ॥

संस्कृतान्वयार्थः—( कितवः-तन्वा शूशुजानः पृच्छमानः सभाम्-एति ) द्यूतक्रीडीजनः शरीरेण दीप्यमानः कितवकर्मणि प्रसिद्धः पृच्छमानः प्रष्टुं यतमानः कितवः

सभां गच्छति ( जेष्यामि ) अहं जयं करिष्यामि ( प्रतिदीव्ने-अक्षासः-अस्य कृतानि-आ दधतः कामं वितरन्ति ) द्यूते प्रतिपक्षिणे–प्रतिपक्षिणं लक्षयित्वा–अक्षाः-अस्य कितवस्य द्यूतकर्माणि समन्ताद् धारयतः कितवस्य कामं जयं प्रयच्छन्ति ॥ ६ ॥

भाषान्वयार्थ—(कितवः-तन्वा शूशुजानः पृच्छमानः सभाम्-एति) जुआ खेलने वाला शरीर से आवेश में आता हुआ द्यूत क्रीडा में प्रसिद्ध हुआ पूछने हेतु जुआरी की मण्डली में जाता है (जेष्यामि) प्रकट करता है कि मैं जीतूंगा (प्रतिदीव्ने-अक्षासः-अस्य कृतानि-आदधतः कामं वितरन्ति) जुए में प्रतिपक्ष को लक्ष्य करके पाशे इसके कर्मों को भलीभाँति धारण करते हुए के यथेच्छ जय को प्रदान करते हैं ॥६॥

भावार्थ—जुआरी शरीर में आवेश खाया हुआ बोलता हुआ जुआरियों की मण्डली में जय की इच्छा से जाता है प्रतिपक्षी को लक्ष्य करके कि ये पाशे मुझे जय दिलायेंगे ऐसी उसकी भावना है ॥६॥

अक्षास इदंङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥ ७ ॥

अक्षासः । इत् । अङ्कुशिनः । निऽतोदिनः । निऽकृत्वानः । तपनाः । तापयिष्णवः । कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥ ७ ॥

संस्कृतान्वयार्थः—( अक्षासः-इत् ) अक्षाः खलु हि ( अङ्कुशिनः-नितोदिनः ) अङ्कुशवन्तः–अङ्कुशधारिण इव नितोदकाः-व्यथाकारिणः ( निकृत्वानः ) वंशच्छेदकाः ( तपनाः-तापयिष्णवः ) सन्तापकास्तापशीलाः ( कुमारदेष्णाः ) कुत्सितमृत्युर्देयं येषां तथाभूता अतिकष्टमृत्युहेतुकाः *"देष्णं दातुं योग्यम्" [ ऋ० २ । ६ । ४ दयानन्दः ]* ( जयतः कितवस्य पुनर्हणः ) जयं कुर्वतः कितवस्य पुनर्घातकाः ( मध्वा बर्हणा सम्पृक्ताः ) परिवृद्धेन मधुना संयुक्ता विषवत् सन्ति ॥ ७ ॥

भाषान्वयार्थ—(अक्षासः-इत्) पाशे अवश्य (अंकुशिनः-नितोदिनः) अंकुशधारी पीड़ा देने वालों के समान (निकृत्वानः) वंशच्छेदक (तपनाः-तापयिष्णवः) सन्तापक ताप स्वभाव वाले (कुमारदेष्णाः) बुरी तरह मृत्यु देने वाले (जयतः कितवस्य पुनर्हणः) जीतते हुए जुआरी के पुनः पुनः घातक (मध्वा बर्हणा सम्पृक्ताः) मधु से युक्त विष के समान हैं ॥७॥

भावार्थ—जुए के पाशे जीतते हुए के लिये भी पीड़ा देने वाले, बुरी तरह मृत्यु कराने वाले मिठाई से लिप्त विषान्न के समान हैं, इनसे सदा बचना ही चाहिए ॥७॥

त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥ ८ ॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव । सविता । सत्यऽधर्मा । उग्रस्य । चित् । मन्यवे । न । नमन्ते । राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ ८ ॥

**संस्कृतान्वयार्थः**—( एषां व्रातः ) एतेषामक्षाणां समूहः ( सत्यधर्मा सविता-देवः-इव ) स्थिरनियमवान् सूर्यो देव इव प्रभावकारी ( त्रिपञ्चाशः क्रीडति ) त्रयश्च पञ्च च त्रिपञ्च-अष्टसंख्याकदिशस्तासु दीर्घश्छन्दसि *"अन्येषामपि दृश्यते"* [ *अष्टा० ६ । ३ । १२५* ] विहरति, ( उग्रस्य मन्यवे चित्-न नमन्ते ) एतेऽक्षाः क्रूरस्य क्रोधाय तत्क्रोधाग्रे न नम्रीभवन्ति ( राजा चित्-एभ्यः-नमः-इत् कृणोति ) राजाऽपि खल्वेभ्योऽक्षेभ्यो नमस्कारं करोति-एषां वशीभवति तथाभूता दुष्प्रभावकारिण एते, न तैः सह क्रीडनीयं कदाचित् ॥ ८ ॥

**भाषान्वयार्थ**—(एषां व्रातः) इन पाशों का समूह (सत्यधर्मा सविता देवः-इव) स्थिर निमम वाले सूर्य देव के समान प्रभावकारी (त्रिपञ्चाशः क्रीडति) तीन और पांच अर्थात् आठों दिशाओं में खेलता है–विहार करता है (उग्रस्य मन्यवे चित्-न नमन्ते) ये पाशे क्रूर के क्रोध के लिये–क्रोध के आगे नहीं झुकते हैं (राजा चित्-एभ्यः-नमः-इत् कृणोति) राजा भी इनके लिये नमस्कार करता है–इनके वश हो जाता है ये ऐसे दुष्प्रभावकारी हैं, इनसे न खेलना चाहिए ॥८॥

नीचा वर्त्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

नीचा । वर्त्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तवन्तम् । सहन्ते । दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥ ९ ॥

**संस्कृतान्वयार्थः**—( नीचा वर्त्तन्ते-उपरि स्फुरन्ति ) एतेऽक्षा द्यूत-साधनपदार्थाः कदाचित् खलु नीचा नीचैर्गताः स्वाधीना वर्त्तन्ते कदाचित् खलूपरि प्रगच्छन्ति कितवस्य पराजयकरा भवन्ति ( अहस्तासः-हस्तवन्तं सहन्ते ) हस्तरहिताः सन्तो हस्ताच्च्युता वा हस्तवन्तं हस्तेन क्षेप्तारं कितवं द्यूतकारिणं जनमभिभवन्ति । ( दिव्याः-अङ्गाराः ) अलौकिका अङ्गाराः ( इरिणे न्युप्ताः शीताः सन्तः ) ओषधिरहिते तृणकाष्ठादिरहिते प्रदेशे *"इरिणं निर्ऋणमृ-ऋणातेरपार्णं भवति अपरता अस्मादोषधय इति वा"* [ निरु० ६ । ६ ] निक्षिप्ताः शीताः सन्तोऽपि ( हृदयं निर्दहन्ति ) कितवस्य द्यूतकारिणो हृदयमन्तःकरणं निर्दग्धं कुर्वन्ति, इति द्यूतस्य दुष्फलम् ॥ ९ ॥

**भाषान्वयार्थ**—(नीचा वर्त्तन्ते-उपरि स्फुरन्ति) ये जुए के पाशे कभी नीचे गये हुए अर्थात् स्वाधीन होते हैं कभी ऊपर अर्थात् जुआरी को हराने वाले होते हैं (अहस्तासः-हस्तवन्तं सहन्ते) हाथों से रहित हुए या हाथ से छूटे हुए हाथ वाले–हाथ से फेंकने वाले जुआरी मनुष्य को

अभिभूत करते हैं—उसे दबाते हैं (दिव्याः-अङ्गाराः) अलौकिक अङ्गारे बने हुए (इरिणे न्युप्ताः शीताः सन्तः) तृणकाष्ठ आदि रहित प्रदेश में गिरे हुए ठण्डे होते भी (हृदयं निर्दहन्ति) जुआरी के अन्तःकरण को दग्ध करते हैं—जलाते हैं। यह जुए का दुष्फल है ॥९॥

भावार्थ—जुए के पाशे चाहे हराते हुए हों चाहे जिताते हुए हों वे ठण्डे अङ्गारे से बनकर जुआरी के हृदय को जलाते रहते हैं—अशान्त किये रहते हैं इसलिये जुआ खेलना बुरा है ॥९॥

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥ १० ॥

जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् । ऋणऽवा । बिभ्यत् । धनम् । । इच्छमानः । अन्येषाम् । अस्तम् । उप । नक्तम् । एति ॥ १० ॥

संस्कृतान्वयार्थः—( कितवस्य हीना जाया तप्यते ) द्यूतकारिणो जनस्य धना-भूषणैः क्षीणा सती पत्नी सन्तापयुक्ता भवति ( माता क्वस्वित्-चरतः पुत्रस्य ) क्वापि विचरतः पुत्रस्य माताऽपि पीडिता भवति ( ऋणावा बिभ्यत् ) ऋणवान् सन् बिभेति-ऋणदातृतः ( धनम्-इच्छमानः ) धनमाकांक्षन् ( अन्येषाम्-अस्तं नक्तम् उप-एति ) अन्येषां गृहं रात्रौ गच्छति चौर्यकरणाय, इति द्यूतकारिणो दुर्दशा भवति ॥ १० ॥

भाषान्वयार्थ—( कितवस्य हीना जाया तप्यते) जुआरी की पत्नी धन आभूषण से क्षीण हुई सन्तप्त रहती है (क्व स्वित्-चरतः पुत्रस्य माता) कहीं कहीं-इधर उधर भटकते हुए जुआरी पुत्र की माता भी सन्तप्त रहती है (ऋणावा बिभ्यत्) ऋणी होकर ऋण देने वाले से डरता रहता है (धनम्-इच्छमानः) धन को चाहता हुआ (अन्येषाम्-अस्तं नक्तम्-उप-एति) दूसरों के घर रात्रि में चोरी करने चला जाता है यह जुआरी की दुर्दशा होती है।

भावार्थ—जुआरी के घर में पत्नी भी दुःखी रहती है और माता भी दुःखी रहती है। स्वयं भी वह ऋण देने वाले से भय खाये रहता है। दुखी होकर दूसरे के घरों में चोरी करने लगता है। यह दुर्दशा जुआ खेलने से होती है ॥१०॥

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥ ११॥

स्त्रियम् । दृष्ट्वाय । कितवम् । तताप । अन्येषाम् । जायाम् । सुऽकृतम् । च । योनिम् । पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् । सः । अग्नेः । अन्ते । वृषलः । पपाद ॥ ११ ॥

**संस्कृतान्वयार्थः**—( कितवम् ) कितवो द्यूतव्यसनी जनः "विभक्तिव्यत्ययश्छान्दसः" ( स्त्रियं दृष्ट्वाय ) स्वकीयपत्नीं दुःखितां दृष्ट्वा ( अन्येषां जायां सुकृतं योनिं च ) अन्येषां जनानां पत्नीं सुखयुक्तां सुशोभितगृहं च *"योनिः गृहनाम [ निघं० ३ । ४ ]* दृष्ट्वेति सम्बन्धः ( ततापः ) तप्यते पीडितो भवति ( पूर्वाह्णे-बभ्रून्-अश्वान् युयुजे ) प्रातरेव पोषकान् इन्द्रियप्राणान् *"इन्द्रियाणि हयानाहुः" [ कठो १ । ३ । ४ ]* युनक्ति ( सः-वृषलः-अग्नेः-अन्ते पपाद ) स धर्मस्य लोपयिता शोकार्तः सन्-अग्रणायकस्य परमात्मनः समीपे–शरणे गतो भवति ॥ ११ ॥

**भाषान्वयार्थ**—(कितवम्) जुआरी मनुष्य (स्त्रियं दृष्ट्वाय) अपनी दुःखित स्त्री को देखकर (अन्येषां जायां सुकृतं योनिं च) अन्य जनों की सुखयुक्त पत्नी को और सुशोभित घर को देखकर (ततापः) पीड़ित होता है (पूर्वाह्णे बभ्रून्-अश्वान् युयुजे) प्रातः ही पोषक इन्द्रियप्राणों से युक्त होता है सावधान होता है तो (सः वृषलः-अग्नेः-अन्ते पपाद) वह धर्म का लोप करने वाला जुआरी शोकार्त हुआ परमात्मा की शरण में जाता है।

**भावार्थ**—जुआरी जुए के परिणाम से अपनी पत्नी को दुःखी देखता हुआ और दरिद्रता का अनुभव करता हुआ तथा अन्यों की पत्नी और घरों को सुखी सम्पन्न पाता हुआ पश्चात्ताप करता है तो रात्रि के पश्चात् प्रातः सावधान हुआ अपने उत्थानार्थ परमात्मा का स्मरण करता है ॥११॥

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।**
**तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ १२ ॥**

यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य । प्रथमः । बभूव । तस्मै । कृणोमि । न । धना । रुणध्मि । दश । अहम् । प्राचीः । तत् । ऋतम् । वदामि ॥ १२ ॥

**संस्कृतान्वयार्थः**—( वः ) हे कितवा द्यूतकारिणः ! युष्माकं मध्ये ( महतः-गणस्य व्रातस्य यः सेनानीः प्रथमः-राजा बभूव ) महतः कितवगणस्य योऽग्रणीः कितवसमूहस्य प्रमुखो राजमानः पुरुषोऽस्ति मे वचनं शृणोतु ( तस्मै धना न रुणध्मि ) तस्मै युष्माकं गणाय व्राताय वा धनानि न स्थापयामि न क्रीडामि, इति संकल्पो जातः ( दश प्राचीः-अहम्-ऋतं वदामि ) अहं प्राच्याद्या दश दिशोऽभिलक्ष्य सत्यं घोषयामि यद्वा सम्मुखस्थिताः-दर्शकप्रजा अभिलक्ष्य सत्यं घोषयामि ॥ १२ ॥

**भाषान्वयार्थ**—(वः) हे जुआरियो ! तुम्हारे मध्य में (महतः-गणस्य व्रातस्य यः सेनानीः) महान् जुआरी समूह का जो अग्रणी (प्रथमः-राजा बभूव) प्रमुख प्रसिद्ध पुरुष है मेरे वचन को सुने (तस्मै धना न रुणध्मि) उस गण के लिये धन नहीं देता हूँ—नहीं खेलूँगा यह सङ्कल्प हो गया (दश प्राचीः-अहम्-ऋतं वदामि) दश पूर्वादि दिशाओं को लक्ष्यकर सत्य घोषित करता हूँ अथवा दर्शक प्रजाओं को लक्ष्य कर सत्य घोषित करता हूँ ॥१२॥

**भावार्थ**—जब जुआ खेलने से पूर्ण ग्लानि हो जावे तो जुआरियों के प्रमुख नेता को स्पष्ट कहदे कि मैं अब जुए में धन नहीं लगाऊँगा तथा खुले स्थान में सब दिशाओं की ओर देखते हुए और सब प्रजाओं के सामने अपने दृढ़ संकल्प की घोषणा करदे कि अब जुआ नहीं खेलूँगा। इस प्रकार इस दुर्व्यसन से बचने का महान् उपाय है ॥१२॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व । बहु । मन्यमानः । तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥ १३ ॥

**संस्कृतान्वयार्थः**—(कितव) हे द्यूतव्यसनिन् ! (अक्षैः-मा दीव्यः) अक्षैर्द्यूतपाशैर्न क्रीड (कृषिम्-इत्-कृषस्व) कृषिं कर्षयान्नमुत्पादय (वित्ते रमस्व) कृषिधने कृषिनिष्पन्न-भोगे त्वमानन्दं कुरु (बहु मन्यमानः) स्वात्मानं धन्यं मन्यमानः यतः (तत्र गावः) तत्कार्ये गावः सुरक्षिताः (तत्र जाया) तत्र खलु पत्नी सुरक्षिता प्रसन्नाऽनुकूला च (अयम्-अर्यः सविता तत्-मे वि चष्टे) एष उत्पादको जगदीशः परमात्मा मह्यमुपासकाय तद् विशिष्टतया कथयति यल्लोकानुपदिश ॥ १३ ॥

**भाषान्वयार्थ**—(कितव) हे द्यूतव्यसनी ! (अक्षैः-मा दीव्यः) जुए के पाशों से मत खेल (कृषिम्-इत्-कृषस्व) कृषि को जोत-खेती कर-अन्न को उपजा (वित्ते रमस्व) खेती से प्राप्त अन्न धन भोग में आनन्द ले (बहु मन्यमानः) अपने को धन्य मानता हुआ प्रसन्न रह क्योंकि (तत्र गावः) उस कार्य में गौएँ सुरक्षित हैं—और रहेंगी (तत्र जाया) उसमें पत्नी सुरक्षित प्रसन्न व अनुकूल रहेगी (अयम्-अर्यः सविता तत्-मे विचष्टे) यह उत्पादक जगदीश परमात्मा मुझ उपासक के लिये कहता है कि लोगों को ऐसा उपदेश दो।

**भावार्थ**—जुए जैसे विषम व्यवहार एवं पाप की कमाई से बचकर स्वश्रम से उपार्जित कृषि से प्राप्त अन्न और भोग श्रेष्ठ हैं। इससे पारिवारिक व्यवस्था और पशुओं का लाभ भी मिलता है परमात्मा भी अनुकूल सुखदायक बनता है ॥१३॥

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥

मित्रम् । कृणुध्वम् । खलु । मृळत । नः । मा । नः । घोरेण । चरत । अभि । धृष्णु । नि । वः । नु । मन्युः । विशताम् । अरातिः । अन्यः । बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥ १४ ॥

**संस्कृतान्वयार्थः**—( मित्रं कृणुध्वं खलु ) हे कितवाः ! यूयं खलु मां मित्रं कुरुत द्यूतकार्यतोऽहं विरक्त इति लक्ष्यीकृत्य मां प्रति द्वेषं न कुरुतापि मयि मैत्रीं भावयत ममोपरि कृपां विधत्त ( नः-मृळत ) अस्मान् सुखयत ( नः-घोरेण धृष्णु मा चरत ) अस्मान् भयङ्करेण "धृष्णुना" तृतीयाविभक्तेर्लुक् धर्षणबलेन न वर्त्तध्वम् ( वः-मन्युः-नु विशताम् ) युष्माकं क्रोधो युष्माकमन्तरे हि निविष्टस्तिष्ठतु ( अन्यः-अरातिः-बभ्रूणां प्रसितौ नु अस्तु ) अन्योऽदाता वञ्चकश्चौरो बभ्रुवर्णानामक्षाणां द्यूतसाधनानां बन्धने जाले *"प्रसितिः प्रसयनात् तन्तुर्वा जालं वा"* *[ निरु० ६ । १२ ]* बद्धो भवतु ॥ १४ ॥

**भाषान्वयार्थ**—(मित्रं कृणुध्वं खलु) हे पुराने साथी जुआरियो ! तुम लोग मुझे मित्र बनाओ–द्यूतकार्य से मैं विरक्त हो गया ऐसा जानकर मुझसे द्वेष न करो और मेरे ऊपर कृपा बनाये रखो (नः-मृळत) हमें सुखी करो (नः-घोरेण धृष्णु मा चरत) हमारे प्रति भयङ्कर दबाव से न वर्त्तो (वः-मन्युः-नु विशताम्) तुम्हारा क्रोध तुम्हारे अन्दर ही विलीन रहे (अन्यः-अरातिः-बभ्रूणां प्रसितौ नु-अस्तु) अन्य कोई वञ्चक–चौर चमकते हुए पाशों के बन्धन में बद्ध होवे ॥१४॥

**भावार्थ**—जुआ खेलने वाला जुए खेलने के दोषदर्शन से विरक्त हो जाता है तो उसके पुराने साथी द्वेष करने लगते हैं। वह उन्हें समझावे कि वे मित्रभाव करने लगें और कोई भी जुए के बन्धन में न फँसे ॥ १४ ॥



# पञ्चत्रिंशं सूक्तम्

ऋषिः—धानाको लुषः ।

देवता—विश्वेदेवाः ।

छन्दः—१, ६, ९, ११, विराड् जगती । २ भुरिग् जगती । ३, ७, १०, १२ पादनिचृज्जगती । ४, ८ आर्ची स्वराड् जगती । ५ आर्ची भुरिग् जगती । १३ निचृत् त्रिष्टुप् । १४ विराट् त्रिष्टुप् ।

स्वरः—१-१२ निषादः । १३, १४ धैवतः ।

विषय—अस्मिन् सूक्ते सूर्योषोद्युलोकपृथिवीलोकपदार्थेभ्य उपयोगग्रहणं, विदुषां योगिनां सङ्गत्या योगशिक्षणं, पारिवारिकजनानां पारस्परिकवर्तनं च वर्ण्यते ।

इस सूक्त में सूर्य उषा द्युलोक पृथिवीलोकों से उपयोग लेना, योगी विद्वानों से योगशिक्षा और पारिवारिक जनों का परस्पर वर्तना दिखलाया है ।

अबुंध्रमु त्य इन्द्रंवन्तो अग्नयो ज्योतिर्भरन्त उषसो व्युंष्टिषु ।
मही द्यावांपृथिवी चैततामपोऽद्या देवानामव आ वृंणीमहे ॥ १ ॥

अबुंध्रम् । ऊँ इतिं । त्ये । इन्द्रंऽवन्तः । अग्नयः । ज्योतिः । भरन्तः । उषसः । विऽउंष्टिषु । मही इतिं । द्यावांपृथिवी इतिं । चेतताम् । अपः । अद्य । देवानाम् । अवः । आ । वृणीमहे ॥ १ ।

संस्कृतान्वयार्थः—( उषसः- व्युष्टिषु ) उषोवेलायास्तमोव्युदसनावसरेषु ( त्ये इन्द्रवन्तः-अग्नयः) ते सूर्यवन्तः सूर्याश्रिताः किरणाः परमात्मवन्तः परमात्मोपासका विद्वांसो वा ( ज्योतिः-भरन्तः ) प्रकाशं धारयन्तो ज्ञानज्योतिर्धारयन्तो वा ( अबुध्रम् ) प्रादुर्भवन्ति प्रबुद्धा भवन्ति वा ( मही द्यावापृथिवी अपः-चेतताम् ) महत्यौ द्यावापृथिव्यौ महत्त्वपूर्णौ द्युलोकपृथिवीलोकौ स्त्रीपुरुषौ वा स्वकीयं कर्म प्रारभेते ( देवानाम्-अवः-अद्य-आ वृणीमहे ) तेषां रश्मिरूपदेवानां विदुषामुपासकानां वा रक्षणं वयं याचामहे निजजीवने धारयितुम् ॥ १ ॥

भाषान्वयार्थ—( उषसः-व्युष्टिषु ) उषोवेला-प्रातर्वेला के अन्धकार दूर होने वाले अवसरों में ( त्ये-इन्द्रवन्तः-अग्नयः ) वे सूर्य वाले-सूर्य के आश्रित रहने वाले किरण या परमात्मा वाले-परमात्मा के आश्रित रहने वाले उपासक विद्वान् जन ( ज्योतिः-भरन्तः ) प्रकाश धारण करने वाले या ज्ञानज्योति धारण करने वाले ( अबुध्रम् ) प्रादुर्भूत होते हैं या प्रबुद्ध हो जाते हैं ( मही द्यावापृथिवी-अपः-चेतताम् ) महत्त्वपूर्ण द्युलोक पृथिवीलोक या स्त्री पुरुष अपना कर्म प्रारम्भ कर देते हैं ( देवानाम्-अवः-अद्य-आवृणीमहे ) उन किरणों या उपासक विद्वानों के रक्षण को हम मांगते हैं-चाहते हैं निज जीवन में धारण करने को ।। १ ।।

भावार्थ—प्रातःकाल होते ही अन्धकार को हटाने वाली सूर्य की किरणें द्युलोक पृथिवीलोक को प्रकाशित कर देती हैं। उन पर कार्य प्रारम्भ हो जाने के लिये जीवनरक्षा के निमित्त उनको सेवन करना चाहिए तथा प्रातः होते ही अज्ञानान्धकार मिटाने वाले परमात्मा के उपासक विद्वान् जाग जाते हैं स्त्री पुरुषों को कार्य-व्यवहार चलाने को ज्ञानप्रकाश देते हैं उनके रक्षण में जीवन को उन्नत करना चाहिए ।। १ ।।

दिवस्पृ॑थि॒व्योरव॒ आ वृ॑णीमहे मा॒तॄन्त्सिन्धू॒न्पर्व॑ताञ्छर्य॒णाव॑तः ।
अ॒ना॒गास्त्वं॒ सूर्य॑मु॒षास॑मीमहे भ॒द्रं सोमः॑ सुवा॒नो अ॒द्या कृ॑णोतु नः ॥ २॥

दि॒वःपृ॒थि॒व्योः॑ । अवः॑ । आ । वृ॒णी॒म॒हे॒ । मा॒तॄन् । सिन्धू॑न् । पर्व॑तान् । श॒र्य॒णाऽव॑तः । अ॒ना॒गाःऽत्वम् । सूर्य॑म् । उ॒षस॑म् । ई॒म॒हे॒ । भ॒द्रम् । सोमः॑ । सु॒वा॒नः । अ॒द्य । कृ॒णो॒तु । नः॒ ॥ २ ॥

संस्कृतान्वयार्थः—( दिवः-पृथिव्योः ) द्यावापृथिव्योः 'दिवः षष्ठ्याः-अलुक् छान्दसः' द्युलोकस्य पृथिवीलोकस्य च तथा ज्ञानदातुरन्नदातुश्च ( अवः-आ वृणीमहे ) रक्षणं वाञ्छामः ( सिन्धून् मातॄन्-शर्यणावतः-पर्वतान् ) ओषधिवनस्पतीनां निर्मातॄन् स्यन्दमानान् जलाशयान्, अन्तरिक्षस्थान् मेघांश्च *'शर्यणावति-शर्यणोऽन्तरिक्षदेशस्तस्यादूरभवे-अत्र 'मध्वादिभ्यश्च' ( अष्टा० ४ । २ । ८६ ) इति मतुप् [ ऋ० ५ । ८४ । १४ दयानन्दः ]* 'आवृणीमहे' वाञ्छामः ( सूर्यम्-उषसम्-अनागास्त्वम्-ईमहे ) सूर्यं सुप्रभातं च निर्दोषं वाञ्छामः ( सुवानः सोमः ) सुनिष्पन्नः प्रकाशमानश्चन्द्रमाश्च ( नः-भद्रम्-अद्य कृणोतु ) अस्मभ्यं सम्प्रति कल्याणं करोतु; यद्वा ( मातॄन् सिन्धून् शर्यणावतः पर्वतान् सूर्यम्-उषसम्-अनागास्त्वम्-ईमहे सुवानः-सोमः-नः-भद्रम्-अद्य कृणोतु ) जननिर्मातॄन् स्रवगतिशीलानुपदेष्टॄन् प्रणवधनुषि स्थितानध्यात्मपर्ववतो योगिनो वाञ्छामो विद्यासूर्यं विद्वांसं तत्सदृशीं ज्ञानप्रवर्तयित्रीं विदुषीं च वाञ्छामः पुनश्चाज्ञानदोषराहित्यं च वाञ्छामः, तथा नवस्नातकोऽपि खल्वस्मभ्यं कल्याणं साधयतु ॥ २ ॥

भाषान्वयार्थ—( दिवः-पृथिव्योः ) द्युलोक पृथिवीलोक के तथा ज्ञानदाता अन्नदाता के ( अवः-आवृणीमहे ) रक्षण को हम चाहते हैं ( सिन्धून्-मातॄन् शर्यणावतः पर्वतान् ) ओषधि वनस्पतियों के निर्माणकर्ता स्यन्दमान-बहते हुए जलाशयों, अन्तरिक्ष वाले मेघों को तथा मनुष्यों

के निर्माणकर्ता सर्वत्र भ्रमणशील उपदेष्टाओं प्रणव धनुष पर स्थित अध्यात्म पर्व वाले योगियों को हम चाहते हैं ( सूर्यम्-उषासम् अनागास्त्वम्-ईमहे ) सूर्य और सुप्रभात वेला के निर्दोष प्रकाश को चाहते तथा विद्यासूर्य विद्वान् को उस जैसी ज्ञानप्रसारिका विदुषी को अज्ञानरहितता को भी चाहते हैं ( सुवानः सोमः-नः-भद्रम्-अद्य कृणोतु ) सुनिष्पन्न चन्द्रमा तथा नवस्नातक भी हमारे लिये अब कल्याण सिद्ध करे ॥ २ ॥

भावार्थ—पृथिवीस्थ जलाशय और आकाश के मेघ हमारे रक्षा करने वाले हैं वे ओषधियाँ उत्पन्न करते हैं सूर्य उषा–सुन्दर प्रभातवेला और चन्द्रमा उत्तम कल्याणप्रद प्रकाश देने वाले हैं तथा माता पिता अन्नज्ञानदाता रक्षक हो सर्वत्र जाने वाले उपदेशक ज्ञानधर्म का उपदेश; विद्यासूर्य विद्वान् और विदुषी तथा नवस्नातक भी कल्याणकारी ज्ञान दें ॥ २ ॥

**द्यावा॑ नो अ॒द्य पृ॑थि॒वी अना॑गसो म॒ही त्रा॑येतां सु॒विता॑य मा॒तरा॑ ।**
**उ॒षा उ॒च्छन्त्यप॑ बाधताम॒घं स्व॒स्त्य१॒॑ग्निं स॑मि॒धानमी॑महे ॥ ३ ॥**

द्यावा॑ । नः॒ । अ॒द्य । पृ॒थि॒वी इति॑ । अना॑गसः । म॒ही इति॑ । त्रा॒ये॒ता॒म् । सु॒वि॒ताय॑ । मा॒तरा॑ । उ॒षाः । उ॒च्छन्ती॑ । अप॑ । बा॒ध॒ता॒म् । अ॒घम् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धान॑म् । ई॒म॒हे॒ ॥ ३ ॥

**संस्कृतान्वयार्थः**—( मही ) महत्यौ ( द्यावापृथिवी मातरा ) द्यावापृथिव्यौ द्यौः पृथिवी चोभे यद्वा ज्ञानप्रकाशिका विद्वत्सभा तथाऽन्नादिव्यवस्थाकारिणी समिति-निर्माणकर्त्र्यौ ( अनागसः-नः ) दोषरहितानस्मान् ( अद्य सुविताय त्रायेताम् ) अस्मिन् जीवनकाले जन्मनि वा सुगतसुखाय रक्षताम् ( उच्छन्ती-उषाः ) प्रादुर्भवन्ती खलूषा ज्योतिर्मयप्रभातवेला तथा प्राप्यमाणा नववधूः ( अघं बाधताम् ) अन्धकारम-ज्ञानान्धकारं नाशयेत् । ( समिधानम्-अग्निं स्वस्ति-ईमहे ) अग्निहोत्रे सम्यग् दीप्यमानं गृह्याग्निं च, तथा–अग्निहोत्रं कुर्वाणं यजमानं च कल्याणं वाञ्छामः *"यजमानोऽग्निः"* [ *श० ६ । ३ । २ । २१* ] ॥ ३ ॥

भाषान्वयार्थ—( मही ) महत्त्वपूर्ण ( द्यावापृथिवी मातरा ) द्युलोक और पृथिवीलोक दोनों अथवा ज्ञानप्रकाशिका विद्वत्सभा और अन्नादि व्यवस्था करने वाली समिति प्रजानिर्माण करने वाली ( अनागसः-नः ) हम दोषरहितों की ( अद्य सुविताय त्रायेताम् ) इस मानव जीवन में सुख के लिये रक्षा करें ( उच्छन्ती-उषाः ) प्रकट होती हुई ज्योतिर्मय प्रभातवेला तथा प्राप्त होती हुई नई वधू ( अघं बाधताम् ) अघ-अन्धकार अज्ञान को नष्ट करते हैं ( समिधानम्-अग्नि स्वस्ति-ईमहे ) अग्निहोत्र में सम्यक् दीप्त हुई अग्नि को तथा अग्निहोत्र करते हुए यजमान को सुखी रूप में चाहते हैं ॥ ३ ॥

भावार्थ—द्युलोक पृथिवीलोक परमात्मा ने निर्दोष मनुष्यों के लिये कल्याणकारी बनाये । प्रातः वेला भी अज्ञान आदि दोषों को दूर करने वाली बनाई है । अग्नि भी मनुष्य का

कल्याण साधने वाली रची है तथा ज्ञान प्रकाश करने वाली विद्वत्सभा और अन्नादि की व्यवस्था करने वाली समिति समाज या राष्ट्र में निर्दोष मनुष्यों की रक्षा करती है। उत्तम सुख प्राप्त कराती है। घर में नई वधू भी दुख को हटाती है। प्रतिदिन अग्निहोत्र करने वाले का कल्याण होता है ॥ ३ ॥

इयं न उस्रा प्रथमा सुदेव्यं रेवत्सनिभ्यो रेवती व्युच्छतु ।
आरे मन्युं दुर्विदत्रस्य धीमहि स्वस्त्यग्निं समिधानमीमहे ॥ ४ ॥

इयम् । नः । उस्रा । प्रथमा । सुऽदेव्यम् । रेवत् । सनिऽभ्यः । रेवती । वि । उच्छतु । आरे । मन्युम् । दुःऽविदत्रस्य । धीमहि । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ४ ॥

**संस्कृतान्वयार्थः**—( इयं प्रथमा-उस्रा रेवती व्युच्छतु ) एषा प्रतमा प्रकृष्टा विस्तृता उत्स्राविणी विकासयित्री पुष्टिमती पुष्टिप्रदा यद्वा वेतस्वती मनुष्यवती सन्तान-शक्तिमती वधूः प्रकाशिता भवतु गृहे विशिष्टतया प्रभवतु ( सनिभ्यः-रेवत्-सुदेव्यम् ) सम्भाजकेभ्योऽस्मभ्यं पुष्टिमत् सुदेवयोग्यं ज्ञानं सन्तानं च प्रयच्छ ( दुर्विदत्रस्य मन्युम्-आरे धीमहि ) दुर्विदत्रस्य परमात्मनो मननीयं स्वरूपं समीपं धारयेम ( समिधानम्-अग्निं स्वस्ति-ईमहे ) पूर्ववत् ॥ ४ ॥

भाषान्वयार्थ—( इयं प्रथमा-उस्रा रेवती व्युच्छतु ) यह प्रकृष्ट विस्तृत विकास करने वाली पुष्टिमती–पुष्टिप्रदा या रेतस्वती–मनुष्य सन्तान शक्तिवाली वधू घर में विशेष रूप से प्रभावशाली हो ( सनिभ्यः-रेवत्-सुदेव्यम् ) सेवन करने वाले हम भागीदारों के लिये पुष्टि वाले ज्ञान और सन्तान को प्रदान करे ( दुर्विदत्रस्य मन्युम्-आरे धीमहि ) कठिनता से जानने योग्य परमात्मा के माननीय स्वरूप को समीप रूप में धारण करें ( समिधानम्-अग्नि स्वस्ति-ईमहे ) आगे अर्थ पूर्ववत् ॥ ४ ॥

भावार्थ—घर में विकसित होती हुई उषा या प्राप्त होती हुई नव वधू घर एवं परिवार का विकास करती हुई आती है। घर में रहने वाले पारिवारिक जनों के लिए प्रकाश और सन्तान को प्रदान करती है। उस द्वारा सन्ध्या आदि धर्माचरण से गृहस्थ परमात्मा की ओर चलता है ॥ ४ ॥

प्र याः सिस्रते सूर्यस्य रश्मिभिर्ज्योतिर्भरन्तीरुषसो व्युष्टिषु ।
भद्रा नो अद्य श्रवसे व्युच्छत स्वस्त्यग्निं समिधानमीमहे ॥ ५ ॥

प्र । याः । सिस्रते । सूर्यस्य । रश्मिऽभिः । ज्योतिः । भरन्तीः । उषसः । विऽउष्टिषु । भद्राः । नः । अद्य । श्रवसे । वि । उच्छत । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ५ ॥

**संस्कृतान्वयार्थः**—( व्युष्टिषु ) तमसो निवृत्तिवेलासु प्रभातवेलासु ( याः-उषसः ) याः खलूष्णाभासो नववध्वः प्रजा वा ( सूर्यस्य ज्योतिः-रश्मिभिः-भरन्तीः ) सूर्यस्य किरणैः, विद्यासूर्यविदुषो ज्ञानमयप्रवचनधाराभिः, ज्योतिर्धारयन्त्यः, ज्ञानज्योतिर्धारयन्त्यः ( प्रसिस्रते ) पृथिव्यां प्रसरन्ति, गृहाश्रमे गृहस्थेषु प्रसरन्ति प्रगच्छन्ति प्रवर्त्तन्ते प्रपूर्वकात् सृधातोः *"बहुलं छन्दसि"* [ अष्टा० २ । ४ । ७६ ] व्यत्ययेनात्मनेपदं च *"सिस्रते सरन्ति प्राप्नुवन्ति"* [ ऋ० ४ । २२ । ६ *दयानन्दः* ] ( अद्य नः श्रवसे भद्रा व्युच्छत ) अद्य प्रतिदिनं अस्मिन् अवसरे वा अन्नाय-अन्नोत्पत्तये *"श्रवः अन्ननाम"* [ *निघं० २ । ७* ] यशसे *"श्रवः श्रवणीयं यशः* [ *निरु० ११ । १६* ] भजनीया सेवनीया-उदिता भवन्तु, उन्नता भवन्तु अग्रे पूर्ववत् ॥ ५ ॥

**भाषान्वयार्थ**— ( व्युष्टिषु ) अन्धकार हटाने वाली प्रभातवेलाओं में ( याः-उषसः ) जो उष्ण आभायें या नई वधू प्रजायें ( सूर्यस्य ज्योतिः-रश्मिभिः-भरन्तीः ) सूर्य की किरणों से या विद्यासूर्य विद्वान् की ज्ञानधाराओं से ज्योति को धारण करती हुई ( प्रसिस्रते ) पृथिवी पर या गृहाश्रम में फैलती हैं ( अद्य नः श्रवसे भद्रा व्युच्छत ) प्रतिदिन या इस अवसर पर अन्नोत्पत्ति के लिये और यश के लिये कल्याण रूप सेवनीय उदय होवें या उन्नत होवें । आगे पूर्ववत् ॥ ५ ॥

**भावार्थ**—प्रातःकाल सूर्य की किरणें ज्योति को लेकर आती हैं और पृथिवी पर फैलती हैं । वह अन्धकार को नष्ट करने के साथ अन्न की उत्पत्ति में कल्याणकारी सिद्ध होती हैं । तथा प्रथम प्रथम घर में विद्वान् पति की नई विदुषी वधू आती है तो शोभा लक्ष्मी का प्रसार करती है । गृहस्थ के लिये यश देती हुई कल्याणकारी बनती है ॥ ५ ॥

**अनमीवा उषस आ चरन्तु न उदग्नयो जिहतां ज्योतिषा बृहत् ।**
**आयुक्षातामश्विना तूतुजिं रथं स्वस्त्यग्निं समिधानमीमहे ॥ ६ ॥**

अनमीवाः । उषसः । आ । चरन्तु । नः । उत् । अग्नयः । जिहताम् । ज्योतिषा । बृहत् । अयुक्षाताम् । अश्विना । तूतुजिम् । रथम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ६ ॥

**संस्कृतान्वयार्थः**—( उषसः-अनमीवाः-नः-आचरन्तु ) अमीवा रोगो न भवति याभिः सेविताभिः, ता रोगनिवारिका रोगसंस्पर्शाद् रक्षिका प्रभातभासोऽस्मान् समन्तात् प्राप्नुवन्तु कमनीया नववध्वः-रोगनिवारिका रोगसम्पर्काद् रक्षिका अस्मान् आचरन्तु सेवन्ताम् ( अग्नयः-बृहत्-ज्योतिषा-उज्जिहताम् ) अग्नयो विविधा महता तेजसा खलूद्गच्छन्तु कार्यं साधयन्तु विद्वांसश्च महतो ज्ञानतेजसा-उद्भवन्तु ( अश्विना ) पुनरहोरात्रौ *"अश्विनावहोरात्रावित्येके"* [ *निरु० १२ । १* ] ( तूतुजिं रथम्-आयुक्षाताम् ) बलवन्तं निरन्तरं रममाणं संसारं समन्ताद् युक्तौ भवेताम्, गृहाश्रमे भार्यापती समन्ताद् रमणीयगृहस्थाश्रमयुक्तौ भवेताम् । *"तूतुजि बलवन्तम्"* [ ऋ० ६ । २० । ८ *दयानन्दः* ] अग्रे पूर्ववत् ॥ ६ ॥

भाषान्वयार्थ—( उषसः-अनमीवाः-नः-आचरन्तु ) अमीवा–रोग जिनके सेवन से नहीं होता है वे ऐसे रोगनिवारक रोगसंस्पर्श से बचाने वाली प्रभात वेलायें हमें भली भाँति प्राप्त हों, तथा कमनीय नववधुएं रोगनिवारिकाएँ रोगसम्पर्क से बचाने वाली होती हुईं हमें सेवन करें ( अग्नयः बृहत्-ज्योतिषा-उज्जिहताम् ) अग्नियां–विविध अग्निहोत्र महान् तेज से उज्ज्वलित हों कार्य को सिद्ध करें, तथा विद्वान् जन महान् ज्ञान तेज से ऊपर उठें ( अश्विनौ ) फिर दिनरात ( तूतुजि रथम्-आयुक्षाताम् ) बलवान् निरन्तर रमणीय संसार को युक्त होवें तथा पति पत्नी रमणीय गृहस्थाश्रम को युक्त होवें । आगे पूर्ववत् ॥ ६ ॥

भावार्थ—प्रभातवेलायें रोगनिवारक हुआ करती हैं। उनसे लाभ उठाना चाहिये। अग्निहोत्र भी सुखदायक होते हैं और संसार में प्रवर्त्तमान दिनरात को भी सुखदायक बनाना चाहिये तथा घर में वधुएँ रोगों का निवारण करने वाली हों और पुरुष भी विद्वान् होते हुए ज्ञान से ऊपर उठें। स्त्री पुरुष गृहस्थ का सच्चा सुख लें ॥ ६ ॥

श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि ।
रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्यग्निं समिधानमीमहे ॥ ७ ॥

श्रेष्ठम् । नः । अद्य । सवितः । वरेण्यम् । भागम् । आ । सुव । सः । हि । रत्नऽधाः । असि । रायः । जनित्रीम् । धिषणाम् । उप । ब्रुवे । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ७ ॥

संस्कृतान्वयार्थः—( सवितः ) हे प्रेरयितः परमात्मन् ! त्वम् ( अद्य ) अस्मिन् जन्मनि ( नः ) अस्मभ्यम् ( श्रेष्ठं वरेण्यं भागम्-आसुव ) प्रशस्यतमं वर्तुमर्हमनिवार्यं वरणीयमध्यात्मलाभरूपं भागं प्रापय ( सः-हि रत्नधाः-असि ) स त्वं हि रमणीयानां धनानां सुखानां वाऽतिशयेन धारको दाता च भवसि ( रायः-जनित्रीं धिषणाम् ) रमणीयस्य धनस्य प्रादुर्भावयित्रीं वाचम् ( उपब्रुवे ) उपस्तौमि ॥ ७ ॥

भाषान्वयार्थ—( सवितः ) हे प्रेरक परमात्मन् ! तू ( अद्य ) इस जन्म में ( नः ) हमारे लिये (श्रेष्ठं वरेण्यं भागम्-आसुव) श्रेष्ठ वरने योग्य अध्यात्म सुखलाभ मोक्ष को प्राप्त करा ( सः-हि रत्नधाः-असि ) वह तू ही रमणीय धनों या सुखों का अत्यन्त धारक और देने वाला है। ( रायः जनित्रीं धिषणाम् ) रमणीय धन भोग की सम्पन्न कराने वाली वाणी को ( उप ब्रुवे ) उपासना रूप में प्रस्तुत करता हूं ॥ ७ ॥

भावार्थ—परमात्मा की उपासना करने से वह सर्वश्रेष्ठ मोक्ष सुख और सांसारिक सच्चे सुख को ही प्रदान करता है ॥ ७ ॥

पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्याऽअमन्महि ।
विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्यग्निं समिधानमीमहे ॥ ८ ॥

पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनम् । देवानाम् । यत् । मनुष्याः । अमन्महि । विश्वाः । इत् । उस्राः । स्पट् । उत । एति । सूर्यः । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ८ ॥

**संस्कृतान्वयार्थः**—( देवानाम्-यत्-ऋतस्य प्रवाचनम् ) सृष्ट्यादौ खल्वग्निप्रभृतीनां परमर्षीणां यत् प्रवाचनमृतं वेदज्ञानं यस्य तैर्ऋषिभिः प्रवचनं कारयति परमात्मा 'ऋतस्ये'ति षष्ठी व्यत्ययेन ( मनुष्याः-अमन्महि ) वयं मनुष्या याचामहे *"मन्महे याच्ञाकर्मा" [ निघ० ३ । १९ ]* ( तत्-मा पिपर्तु ) तदस्मान् रक्षतु यतः ( सूर्यः ) स विद्यासूर्यः परमात्मा ( विश्वाः-उस्राः-इत्-स्पट्-उदेति ) सर्वान् विद्यारश्मीन् हि स्पृशन् जानन् हि "स्पश स्पर्शने" तेषु साक्षाद् भवति ॥ ८ ॥

**भाषान्वयार्थ**—( देवानां यत्-ऋतस्य प्रवाचनम् ) सृष्टि के आदि में अग्नि आदि परम-ऋषियों का जो प्रवचन करने योग्य वेदज्ञान जिसका है उन ऋषियों द्वारा उस का प्रवचन परमात्मा कराता है ( मनुष्याः-अमन्महि ) हम मनुष्य चाहते हैं ( तत्-मा पिपर्तु ) वह मेरी रक्षा करे ( सूर्यः ) वह विद्यासूर्य परमात्मा ( विश्वाः-उस्राः-इत् स्पट्-उदेति ) सारी विद्या-धाराओं को ही जानता हुआ उन ऋषियों के अन्दर साक्षात् होता है ॥ ८ ॥

**भावार्थ**—समस्तविद्याप्रकाशक परमात्मा सृष्टि के आरम्भ में अग्नि आदि परम ऋषियों को उनके अन्दर साक्षात् वेदज्ञान का उपदेश मनुष्यों के कल्याणार्थ देता है ॥ ८ ॥

**अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साधं ईमहे ।**
**आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्य१ग्निं समिधानमीमहे ॥ ९॥**

अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णाम् । योगे । मन्मनः । साधे । ईमहे । आदित्यानाम् । शर्मणि । स्थाः । भुरण्यसि । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ९ ॥

**संस्कृतान्वयार्थः**—( अद्य ) अस्मिन् जन्मनि ( अद्वेषः-बर्हिषः स्तरीमणि ) यस्मिन् द्वेषो न भवति तथाभूतेऽध्यात्मज्ञानस्य *"बर्हि विज्ञानम्" [ ऋ० १ । ८३ । ६ दयानन्दः ]* आच्छादके स्तरे वातावरणे ( ग्राव्णां योगे ) विदुषां सम्बन्धे *"विद्वांसो हि ग्रावाणः" [ श० ३ । ९ । ३-१४ ]* ( मन्मनः साधे-ईमहे ) मननीयस्य मनोरथस्य साधनाय त्वा परमात्मानं याचामहे-प्रार्थयामहे ( आदित्यानां शर्मणि स्थः-भुरण्यसि ) हे परमात्मन् त्वम्-अखण्डब्रह्मचर्यज्ञानवतां विदुषां कल्याणे स्थितः सन् तान् पालयसि, अग्रे पूर्ववत् ॥ ९ ॥

**भाषान्वयार्थ**—( अद्य ) इस जन्म में ( अद्वेषः-बर्हिषः स्तरीमणि ) द्वेष अर्थात् ग्लानि से रहित अध्यात्मज्ञान के रक्षक वातावरण में ( ग्राव्णां योगे ) विद्वानों का सम्बन्ध-संयोग होने

पर ( मन्मनः साधे-ईमहे ) मननीय मनोरथ साधने के लिये तुझ परमात्मा को प्रार्थित करते हैं—चाहते हैं ( आदित्यानां शर्मणि स्थः-भुरण्यसि ) हे परमात्मन् ! तू अखण्ड ब्रह्मचर्य वालों के कल्याण में स्थित होता हुआ उन्हें पालता है उनकी रक्षा करता है । आगे पूर्ववत् ॥ ६ ॥

**भावार्थ**—मानव के वर्त्तमान युग में अध्यात्म ज्ञान की वृद्धि होनी चाहिये । वेद–विद्वानों के संयोग में और ब्रह्मचर्यादि व्रत द्वारा परमात्मा के उपासना रूप शरण में मनोरथों की सिद्धि होती है ॥ ६ ॥

**आ नो॑ ब॒र्हिः स॑ध॒मादे॑ बृ॒हद्दि॒वि दे॒वाँ ई॑ळे सा॒दया॑ स॒प्त होतॄ॑न् ।**
**इन्द्रं॑ मि॒त्रं वरु॑णं सा॒तये॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मि॒धा॒नमी॑महे ॥ १० ॥**

आ । नः॒ । ब॒र्हिः । स॒ध॒ऽमादे॑ । बृ॒हत् । दि॒वि । दे॒वान् । ई॒ळे॒ । सा॒दय॑ । स॒प्त । होतॄ॑न् । इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । सा॒तये॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १० ॥

**संस्कृतान्वयार्थः**—( ईळे ) हे परमात्मन् ! अहं त्वां स्तौमि, अतस्त्वम् ( नः ) अस्माकम् ( सधमादे बृहत्-दिवि बर्हिः ) सहहर्षप्राप्तिस्थाने बृहति ज्ञानप्रकाशकेऽध्यात्मयज्ञे ( देवान् सप्त होतॄन् आसादय ) अध्यात्मयज्ञस्य सप्तहोतॄन् मनोबुद्धिचित्ताहङ्कारान् चक्षुःश्रोत्रवाचश्च समन्तात् साधय ( सातये ) अध्यात्मानन्दलाभाय त्वाम् ( इन्द्रं मित्रं वरुणं भगम् ) ऐश्वर्यवन्तं प्रेरयितारं वरयितारं भजनीयं परमात्मानं खल्वहमीळे स्तौमि (स्वस्त्य०) पूर्ववत् ॥ १० ॥

**भाषान्वयार्थ**—( ईळे ) हे परमात्मन् ! मैं तेरी स्तुति करता हूं अतः तू ( नः ) हमारे ( सधमादे बृहत्-दिवि बर्हिः ) हर्षप्राप्ति के सह स्थान–महान् ज्ञानप्रकाशवाले अध्यात्मयज्ञ में ( देवान् सप्त होतॄन्-आसादय ) अध्यात्म यज्ञ के सात ऋत्विक् दिव्य गुण वाले मन बुद्धि चित्त अहङ्कार नेत्र कान वाणी को सिद्ध कर–शक्तिसम्पन्न कर ( सातये ) आनन्दलाभ के लिये ( इन्द्रं मित्रं वरुणं भगम् ) तुझ ऐश्वर्यवान् प्रेरक वरने वाले भजनीय परमात्मा की मैं स्तुति करता हूं ( स्वस्त्य० ) आगे पूर्ववत् ॥ १० ॥

**भावार्थ**—मन बुद्धि चित्त अहङ्कार नेत्र कान और वाणी के द्वारा परमात्मा का ध्यान उपासना आदि कर्म करके मनुष्य ऐश्वर्यवान् प्रेरक वरने वाले भजनीय परमात्मा को अनुकूल बनाकर ऊँचा अध्यात्म सुख प्राप्त करता है ॥ १० ॥

**त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये वृ॒धे नो॑ य॒ज्ञम॑वता सजोषसः ।**
**बृह॒स्पतिं॑ पू॒षण॑म॒श्विना॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मि॒धा॒नमी॑महे ॥ ११ ॥**

ते । आदित्याः । आ । गत । सर्वतातये । वृधे । नः । यज्ञम् । अवत । सऽजोषसः । बृहस्पतिम् । पूषणम् । अश्विना । भगम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ११ ॥

**संस्कृतान्वयार्थः**—( ते-आदित्याः ) स अखण्ड एकरसः परमात्मा "बहुवचनमादरार्थम्" ( सर्वतातये ) सर्वकर्मततयो यस्मिन् सर्वाणि—अध्यात्मकर्माणि ततानि भवन्ति तथाविधाभ्यासरूपाय योगयज्ञाय ( आगत ) आगच्छ प्राप्तो भव ( नः-वृधे ) अस्माकं जीवनवृद्ध्यै ( सजोषसः-यज्ञम्-अवत ) समानप्रीतिमान् यावतीं प्रीतिमहं करोमि तावतीं प्रीतिं त्वमपि कुरु एतमध्यात्मयज्ञं रक्ष ( बृहस्पतिं पूषणम् अश्विना भगम् ) बृहत्या वेदवाचः स्वामिनं स्तोतॄणां पोषकं तथा ज्योतिमयमानन्दरसमयं च भजनीयं त्वामीळे, स्तौमि, अग्रे पूर्ववत् ॥ ११ ॥

**भाषान्वयार्थ**—( ते-आदित्याः ) वह अखण्ड एक रस परमात्मा ( सर्वतातये ) सब अध्यात्मकर्म फैले हुए हैं जिसमें ऐसे योगरूप अध्यात्म यज्ञ के लिये ( आगत ) आ—प्राप्त हो ( नः-वृधे ) हमारी जीवनवृद्धि के निमित्त ( सजोषसः-यज्ञम्-अवत ) समान प्रीति वाला—जितनी मैं प्रीति करता हूँ उतनी ही तू भी करने वाला होता है इसलिये इस अध्यात्म यज्ञ की रक्षा कर करता है ( बृहस्पतिं पूषणम्-अश्विना भगम् ) तुझ वेदवाणी के स्वामी स्तुतिकर्त्ताओं के पोषक ज्योतिःस्वरूप और आनन्दरसरूप भजनीय की स्तुति करता हूँ। आगे पूर्व के समान अर्थ है ॥ ११ ॥

**भावार्थ**—मनुष्य जब श्रद्धा से योगाभ्यास रूप अध्यात्म यज्ञ का सेवन करता है तो परमात्मा उस उपासक के अनुकूल उसकी जीवनवृद्धि—जीवनविकास के लिये पूर्ण सहायक बनता है ॥ ११ ॥

**तन्नो देवा यच्छत सुप्रवाचनं छर्दिरादित्याः सुभरं नृपाय्यम् ।**
**पश्वे तोकाय तनयाय जीवसे स्वस्त्यग्निं समिधानमीमहे ॥ १२ ॥**

तत् । नः । देवाः । यच्छत । सुऽप्रवाचनम् । छर्दिः । आदित्याः । सुऽभरम् । नृऽपाय्यम् । पश्वे । तोकाय । तनयाय । जीवसे । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ १२ ॥

**संस्कृतान्वयार्थः**-- ( आदित्याः-देवाः ) आदौ भवा हे विद्वांसः ! ( तत् ) ईश्वरोक्तम् ( सुप्रवाचनम् ) प्रवचनीयं वेदज्ञानम् ( नः ) अस्मभ्यम् ( यच्छत ) प्रयच्छत—दत्त ( छर्दिः सुभरं नृपाय्यम् ) यत्प्रकाशमानं "छृदी सन्दीपने" [ चुरादि० ] सम्यग्धारणयोग्यं नृणां रक्षकमस्ति ( पश्वे तोकाय तनयाय जीवसे ) तज्ज्ञानं कल्याणकरं पशवे ज्ञानवते पुत्राय स्वजीवनाय च भवति, अग्रे पूर्ववत् ॥ १२ ॥

भाषान्वयार्थ—( आदित्याः-देवाः ) हे आदि में होने वाले विद्वानो ! ( तत् ) उस ईश्वरोक्त ( सुप्रवाचनम् ) प्रवचनयोग्य वेदज्ञान को ( नः ) हमारे लिये ( यच्छत ) देवो-प्रदान करो ( छर्दिः सुभरं नृपाय्यम् ) वह प्रकाशमान सम्यक् धारण करने योग्य मनुष्यों का रक्षक ( पश्वे तोकाय तनयाय जीवसे ) ज्ञान वाले पुत्र पौत्र के लिये और स्वजीवन के लिये कल्याणकारी होता है आगे पूर्ववत् ।। १२ ।।

भावार्थ—आदि सृष्टि के विद्वान् ईश्वरोक्त वेद ज्ञानका उपदेश जो मनुष्यों के लिये कल्याण-कर है उसका उपदेश दिया करते हैं। उसका अध्ययन प्रत्येक परिवार को करना हितकर है ।।१२।।

**विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भव॒न्त्व॒ग्नयः॒ समि॑द्धाः ।**
**विश्वे॑ नो दे॒वा अव॒सा ग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ १३ ॥**

विश्वे॑ । अ॒द्य । म॒रुतः॑ । विश्वे॑ । ऊ॒ती । विश्वे॑ । भ॒व॒न्तु॒ । अ॒ग्नयः॑ । सम्ऽइ॑द्धाः । विश्वे॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । विश्व॑म् । अ॒स्तु॒ । द्रवि॑णम् । वाजः॑ । अ॒स्मे इति॑ ॥ १३ ॥

संस्कृतान्वयार्थः—( अद्य ) अस्मिन् जीवने जन्मनि वा ( विश्वे मरुतः ) सर्वे प्राणाः *"मरुतः प्राणादयः"* [ *ऋ० १ । ५२ । ६ दयानन्दः* ] ( विश्वे ) सर्वे शरीरावयवाः ( विश्वे समिद्धाः-अग्नयः ) सर्वे सम्यक् प्रकाशमानसूर्यादयः पदार्थाः ( ऊती भवन्तु ) ऊत्यै रक्षणाय भवन्तु ( विश्वे देवाः-नः-अवसा-आ गमन्तु ) सर्वे विद्वांसश्चास्माकं रक्षण-हेतुनाऽऽगच्छन्तु-प्राप्ता भवन्तु ( विश्वं द्रविणं वाजः-अस्मे-अस्तु ) सर्वं विद्यादिधनं बलं चास्मभ्यमुपयुक्तं भवतु ।। १३ ।।

भाषान्वयार्थ—( अद्य ) इस जीवन में या जन्म में ( विश्वे मरुतः ) सारे प्राण (विश्वे) सारे शरीराङ्ग ( विश्वे समिद्धाः-अग्नयः ) सब सम्यक् प्रकाशमान सूर्यादि पदार्थ ( ऊती भवन्तु ) रक्षा के लिये हों ( विश्वे देवाः-नः-अवसा-आ गमन्तु ) सब विद्वान् हमारे रक्षण के हेतु आवें-प्राप्त होवें ( विश्वं द्रविणं वाजः-अस्मे-अस्तु) सब विद्यादिधन और बल हमारे लिये उपयुक्त हो ।। १३ ।।

भावार्थ—परमात्मा ने प्राण और शरीर के अन्य अङ्ग तथा सूर्यादि प्रकाशमान पदार्थ जीवनरक्षा के लिये प्रदान किये हैं विद्वान् जन भी हमारी रक्षा करते हैं। विद्यादि धन और बल हमारे उपयोग के लिये हैं ।। १३ ।।

**यं दे॑वा॒सोऽव॑थ॒ वाज॑साता॒ यं त्राय॑ध्वे॒ यं पि॑पृ॒थात्यंहः॑ ।**
**यो वो॑ गोपी॒थे न भ॒यस्य॒ वेद॒ ते स्या॑म दे॒ववी॑तये तु॒रासः॑ ॥ १४ ॥**

यम् । दे॒वा॒सः॒ । अव॑थ । वाज॑ऽसातौ । यम् । त्राय॑ध्वे । यम् । पि॒पृ॒थ । अति॑ । अंहः॑ । यः । वः॒ । गो॒ऽपी॒थे । न । भ॒यस्य॑ । वेद॑ । ते । स्या॒म॒ । दे॒वऽवी॑तये । तु॒रासः॑ ॥ १४ ॥

**संस्कृतान्वयार्थः**—( देवासः-यं वाजसातौ-अवथ ) हे विद्वांसः ! यं जनं खल्वमृतान्नभोगप्राप्तौ मुक्तिप्राप्तौ रक्षथ सम्पादयत *"अमृतोऽन्नं वै वाजः"* [ जै० १ । १९३ ] ( यं त्रायध्वे ) यमधिकारिणं भयात् त्रायध्वे पृथक् कुरुथ ( यम्-अंहः-अति पिपृथ ) यं पापमतिक्राम्य पालयत ( यः-वः-गोपीथे भयस्य न वेद ) यः खलु युष्माकं वाक्पाने वेदाध्ययने वेदाध्ययनाय किमपि भयं न वेत्ति, तथाभूतानां विदुषां संरक्षणे ( देववीतये ) दिव्यानां भोगानां वीतिः प्राप्तिर्यस्यां तस्यै मुक्त्यै *"देववीतये दिव्यानां····भोगानां प्राप्तिः"* *[ यजु० ५ । ६ दयानन्दः ]* ( ते तुरासः स्याम ) ते वयं संसारसागरं तरन्तः-तीर्णाः *"तुरः-तरतेर्वा"* [ *निरु० १२ । १४* ] भवेम ॥ १४ ॥

**भाषान्वयार्थ**—( देवासः-यं वाजसातौ-अवथ ) हे विद्वानो ! जिस मनुष्य को अमृतान्न भोग की प्राप्ति-मुक्तिप्राप्ति के निमित्त सुरक्षितरखते हो—सम्पन्न करते हो ( यं त्रायध्वे ) जिस अधिकारी को भय से बचाते हो पृथक् करते हो ( यम्-अंहः-अति पिपृथ ) जिसको पाप से पार करके सुरक्षित रखते हो ( यः-वः-गोपीथे भयस्य न वेद ) जो तुम्हारे प्रवचनपान—वेदाध्ययन में अर्थात् वेदाध्ययन के लिये कुछ भी भय नहीं जानता है—अनुभव करता है उन ऐसे आप लोगों के संरक्षण में ( देववीतये ) दिव्य भोगों की प्राप्ति वाली मुक्ति के लिये ( ते तुरासः स्याम ) वे हम संसार सागर को तैरने वाले हों ॥ १४ ॥

**भावार्थ**—विद्वानों के संरक्षण में दोषों से बचकर ज्ञान का सेवन कर संसार सागर को पार करते हुए दिव्य सुखवाली मुक्तिप्राप्ति के लिये यत्न करना चाहिये ॥ १४ ॥



# षट्त्रिंशं सूक्तम्

ऋषिः—धानाको लुशः ।

देवता—विश्वेदेवाः ।

छन्दः—१, २, ४, ६-८, ११ निचृज्जगती । ३ विराड् जगती । ५, ९, १० जगती । १२ पादनिचृज्जगती । १३ त्रिष्टुप् । १४ स्वराट् त्रिष्टुप् ।

स्वरः—१-१२ निषादः । १३, १४ धैवतः ।

अत्र सूक्ते समस्तदिव्यपदार्थाः कल्याणनिमित्ताः परमात्मना रचिताः शरीरे च विविधाः प्राणादयोऽप्यवयवा जीवनहितसाधका रचिताः सन्तीति प्रोक्तम् ।

इस सूक्त में परमात्मा ने समस्त दिव्य पदार्थ तथा प्राण, आदि शरीर के उपयोगी भाग रचे हैं । उनसे लाभ लेना चाहिए यह कहा है ।

उषासानक्ता बृहती सुपेशसा द्यावाक्षामा वरुणो मित्रो अर्यमा ।
इन्द्रं हुवे मरुतः पर्वताँ अप आदित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥

उषासानक्ता । बृहती इति । सुऽपेशसा । द्यावाक्षामा । वरुणः । मित्रः । अर्यमा । इन्द्रम् । हुवे । मरुतः । पर्वतान् । अपः । आदित्यान् । द्यावापृथिवी इति । अपः स्वरिति स्वः ॥ १ ॥

**संस्कृतान्वयार्थः**—( बृहती उषासानक्ता ) महत्त्वपूर्णे अहोरात्रे "अहोरात्र वा उषासानक्तौ [ ऐ. २ । ४ ] उषासानक्ता रात्रिदिने [ यजु० २७ । १७ दयानन्दः ] जीवने ऽभ्युदयनिःश्रेयसौ ( सुपेशसा द्यावाक्षामा सुरूपौ सुनिरूपणीयौ द्युलोकभूलोकौ "इमे वै द्यावापृथिवी द्यावाक्षामा" [ श. ६ । ७ । २ । ३ ] जीवनस्य सुनिरूपणीये ज्ञानकर्मणी ( मित्रः-वरुणः-अर्यमा ) अग्निः-मेघः सूर्यः-जीवने श्वासप्रश्वासौ मुख्य-प्राणश्च ( हुवे ) इत्येतान् आमन्त्रये-धारयामि ( इन्द्रं मरुतः पर्वतान् ) विद्युतं विविध-वायून् पर्वतान् तथा जीवनेऽन्तरात्मानं नाडीगतप्राणान् पर्ववतोऽवयवान् ( अपः-आदि-

त्यान् द्यावापृथिवी ) जलम् किरणान् प्रकाशभूभागौ जीवने रसं रसादातॄन्–आशयान् रक्ताशयान् तेजोधारणबले ( अपः स्वः ) अन्तरिक्षम् *"आपोऽन्तरिक्षनाम"* [*निघं. १ । ३*] प्रकाशलोकं च जीवने शरीरान्तर्गतमवकाशं स्वीरयितारं मस्तिष्कं च हुवे–सम्यग्धारयामि ॥ १ ॥

**भाषान्वयार्थ**—( बृहती उषासानक्ता ) महत्त्वपूर्ण दिन रात या जीवन में अभ्युदय निःश्रेयस ( सुपेशसा द्यावाक्षामा ) उत्तम प्रकार निरूपण करने योग्य द्युलोक पृथिवीलोक जीवन में ज्ञान कर्म ( मित्रः-वरुणः-अर्यमा ) अग्नि, मेघ, सूर्य या जीवन में श्वास प्रश्वास मुख्य प्राण ( हुवे ) इनको आमन्त्रित करता हूँ या धारण करता हूँ ( इन्द्रं मरुतः पर्वतान् ) विद्युत् विविध वायुओं, पर्वतों को जीवन में अन्तरात्मा नाडीगत प्राणों को जो पर्ववाले–जोड़ों वाले अङ्गों को ( अपः-आदित्यान् द्यावापृथिवी ) जल किरणों प्रकाश भूभाग जीवन में रस लेने वाले रक्ताशयों तेज और धारणबल को ( अपः-स्वः ) अन्तरिक्ष प्रकाश लोक को या जीवन में शरीरान्तर्गत अवकाश और सम्यक् प्रेरणा करने वाले मस्तिष्क को धारण करता हूँ ॥ १ ॥

**भावार्थ**—महत्त्वपूर्ण दिन-रात, अग्नि, मेघ, सूर्य, विद्युत्, वायु, पर्वत, जल किरणें प्रकाश, भूतल, अन्तरिक्ष, प्रकाश लोक, परमात्मा ने मनुष्यों के लाभार्थ रचे हैं । इनसे लाभ उठाना चाहिये, तथा अभ्युदय निःश्रेयस श्वास प्रश्वास मुख्य प्राण, अन्तरात्मा नाडीगत प्राण जोड़ों वाले अंग रस लेने वाले रक्ताशय तेज और धारण बल अवकाश–रोम छिद्रादि और मस्तिष्क जीवन में धारण करने योग्य उपयोगी पदार्थ हैं ॥ १ ॥

**द्यौश्च नः पृथिवी च प्रचेतस ऋतावरी रक्षतामंहसो रिषः ।**
**मा दुर्विदत्रा निर्ऋतिर्न ईशत तद्देवानामवो अद्या वृणीमहे ॥ २ ॥**

**द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरी । इत्यृतऽवरी । रक्षताम् । अंहसः । रिषः । मा । दुःऽविदत्रा । निःऽऋतिः । नः । ईशत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ २ ॥**

**संस्कृतान्वयार्थः**—( प्रचेतसा-ऋतावरी द्यौः-च पृथिवी च ) प्रकृष्टं चेतयितारौ तथा सत्यज्ञाननिमित्तभूतौ–सत्याचरणज्ञापयितारौ सूर्यपृथिवीलोकौ तथा मातापितरौ *"द्यौर्मे पिता····माता पृथिवी महीयम्"* [*ऋ० १ । १६४ । ३३*] उभौ ( अंहसः-रिषः-रक्षताम् ) पापाद् हिंसकात् रक्षताम् ( दुर्विदत्रा निर्ऋतिः-नः-मा ईशत ) दुर्विज्ञाना कृच्छ्रापत्ति-रस्मान् मा स्वामित्वे नयेत् ( तत् ) तस्मात् ( देवानाम्-अवः-अद्य वृणीमहे ) उक्तानां सर्वेषां दिव्यपदार्थानां दिव्यगुणवतां शरीरसम्बन्धिनां पदार्थानां जनानां च रक्षण-मस्मिन् जन्मनि याचामहे वाञ्छामः ॥ २ ॥

**भाषान्वयार्थ**—( प्रचेतसा-ऋतावरी द्यौः-च पृथिवी च ) भली प्रकार चेताने वाले तथा सत्यज्ञान के निमित्तभूत सत्याचरण के जनाने वाले सूर्यलोक पृथिवीलोक तथा माता पिता

( अंहसः-रिषः-रक्षताम् ) पापसे हिंसा से रक्षा करें ( दुर्विदत्रा निर्ऋतिः-नः-मा-ईशत ) बुरी अनुभूति कराने वाली कठिन आपत्ति हमें अपने स्वामित्व में न ले अर्थात् हमारे ऊपर अधिकार न करे ( तत् ) तिससे ( देवानाम्-अवः-अद्य वृणीमहे ) सब दिव्य पदार्थों तथा दिव्य गुणों का रक्षण इस जन्म में हम चाहते हैं ॥ २ ॥

भावार्थ—संसार में सूर्य और पृथिवी चेतना और जल देने वाले अन्धकार और पीड़ा से बचाने वाले हैं। इनसे उचित लाभ लेने से घोरापत्ति या अकाल मृत्यु से बच सकते हैं। तथा माता पिता सत्याचरण और ज्ञान का उपदेश देकर चेताने वाले पाप से बचाने वाले और घोर विपत्ति में काम आने वाले हैं। इनका हमें रक्षण प्राप्त करना चाहिये ॥ २ ॥

विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः ।
स्वर्वज्ज्योतिरवृकं नशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ३ ॥

विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः । स्वःऽवत् । ज्योतिः । अवृकम् । नशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ३ ॥

संस्कृतान्वयार्थः—( रेवतः-मित्रस्य वरुणस्य-अदितिः-माता ) पुष्टिमतः सूर्यस्य चन्द्रमसो यद्वा शरीरे प्राणस्यापानस्य निर्मात्री खल्वखण्डनीया ब्रह्मशक्तिः ( विश्वस्मात्-अंहसः-नः पातु ) सर्वस्मात्—हिंसकात्-पापादस्मान् रक्षतु ( स्वर्वत्-अवृकं ज्योतिः-नशीमहि) सुखमयं ज्ञानयुक्तमच्छिन्नं ज्योतिर्वयं प्राप्नुयाम *"नशत् व्याप्तिकर्मा"* [ *निघं. २ । १८* ] ( देवानां तत्-अवः-अद्य वृणीमहे ) पूर्ववत् ॥ ३ ॥

भाषान्वयार्थ—( रेवतः-मित्रस्य वरुणस्य-अदितिः-माता ) पुष्टिमान्—पुष्टिप्रद सूर्य चन्द्रमा की या शरीर में प्राण और अपान की निर्माण करने वाली अखण्ड ब्रह्मशक्ति ( विश्वस्मात्-अंहसः-नः पातु ) सभी हिंसक पाप से हमारी रक्षा करे ( स्वर्वत्-अवृकं ज्योतिः-नशीमहि ) सुखमय ज्ञानयुक्त अच्छिन्न—अनश्वर ज्योति को हम प्राप्त करें ( देवानां तत्-अवः- अद्य वृणीमहे ) अर्थ पूर्ववत् ॥ ३ ॥

भावार्थ—पुष्टि देने वाले सूर्य—चन्द्रमा और प्राण—अपान को निर्माण करने वाली परमात्मशक्ति की शरण लेकर हम दोषों पापों से बचे रहें तो सुखमय अनश्वर ज्योति को प्राप्त कर सकते हैं और भौतिक देवों और विद्वानों का रक्षण भी पा सकते हैं ॥ ३ ॥

ग्रावा वदन्नप रक्षांसि सेधतु दुष्ष्वप्न्यं निर्ऋतिं विश्वमत्रिणम् ।
आदित्यं शर्म मरुतामशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ४ ॥

ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यम् । निःऽऋतिम् । विश्वम् । अत्रिणम् । आदित्यम् । शर्म । मरुताम् । अशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ४ ॥

**संस्कृतान्वयार्थः**—( ग्रावा वदन् ) विद्वान् "विद्वांसो हि ग्रावाणः [ श. ३ । ६ । ३ । १४ ] उपदिशन् सन् ( रक्षांसि ) येभ्यो रक्षन्ति तानि बाधकानि भूतानि ( दुःस्वप्न्यम् ) शयनकाले प्राप्तानि खल्वालस्यादीनि ( निर्ऋतिम् ) मृत्युभीतिम् ( विश्वम्-अत्रिणम् ) सकलमन्तःस्थलस्य भक्षकं शोकादिकम् ( अपसेधतु ) दूरी करोतु ( मरुताम्-आदित्यं शर्म-अशीमहि ) जीवन्मुक्तानाम् "मरुतो हि देवविशः" [ कौ० ७ । ८ ] खल्वखण्डनीयं शरणं सुखं वा प्राप्नुयाम ( तद्देवा० ) अग्रे पूर्ववत् ॥ ४ ॥

भाषान्वयार्थ—( ग्रावा वदन् ) विद्वान् उपदेश करता हुआ ( रक्षांसि ) जिनसे रक्षा करनी चाहिये ऐसी बाधक वस्तुओं ( दुःस्वप्न्यम् ) सोते हुए होने वाले आलस्यादि ( निर्ऋतिम् ) मृत्यु की भयभीतता ( विश्वम्-अत्रिणम् ) सारे अन्तःकरण के भक्षक शोकादि को ( अपसेधतु ) दूर करे-दूर करता है ( मरुताम्-आदित्यं शर्म-अशीमहि ) जीवन्मुक्तों के अखण्डनीय सुख या शरण को प्राप्त हों आगे पूर्ववत् ॥ ४ ॥

भावार्थ—विद्वान् उपदेशक अपने उपदेश द्वारा लोगों के बाधक वस्तु, शयनकाल में प्राप्त आलस्य आदि और जाग्रत् में मृत्यु भय और शोक को दूर करता है–हटाता है। इस प्रकार उन ऊँचे जीवन्मुक्तों की सुखशरण लेनी चाहिये ॥ ४ ॥

**एन्द्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्वो अर्चतु ।**
**सुप्रकेतं जीवसे मन्म धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ५ ॥**

आ । इन्द्रः । बर्हिः । सीदतु । पिन्वताम् । इळा । बृहस्पतिः । सामऽभिः । ऋक्वः । अर्चतु । सुऽप्रकेतम् । । जीवसे । मन्म । धीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ५ ॥

**संस्कृतान्वयार्थः**—( जीवसे ) जीवनहेतवे ( इन्द्रः-बर्हिः-आसीदतु ) ऐश्वर्यवान् परमात्मा हृदयाकाशे समन्तात् सीदति "लडर्थे लोट्" ( इळा पिन्वताम् ) अन्नरसात्मिका सामग्री शरीरं सिञ्चतु ( ऋक्वः-बृहस्पतिः-सामभिः-अर्चतु ) स्तुतिमान् स्तुतिकर्त्ताऽऽत्मा "बृहस्पतिर्मे आत्मा नृमणा नाम हृद्यः" [ अथर्व० १६ । ३ । ५ ] शान्तवाग्भिः स्तुतिभिः "यद्वै शिवं शान्तं वाचस्तत्साम" [जै० ३ । ५३] परमात्मानमर्चतु ( सुप्रकेतं मन्म धीमहि) शोभनप्रज्ञानं मननं च वयं धारयेम ( तद्देवा० ) पूर्ववत् ॥ ५ ॥

भाषान्वयार्थ—( जीवसे ) जीवन के लिये ( इन्द्रः-बर्हिः-आसीदतु ) ऐश्वर्यवान् परमात्मा हृदयाकाश में विराजमान हो–साक्षात् हो ( इळा पिन्वताम् ) अन्नरसरूप भोग-सामग्री शरीर को

सींचे–परिपुष्ट करे ( ऋक्वः-बृहस्पतिः-सामभिः-अर्चतु ) स्तुति करने वाला आत्मा शान्त स्तुतियों से परमात्मा की स्तुति करे ( सुप्रकेतं मन्म धीमहि ) अच्छे प्रज्ञान–उत्तम निर्णय और मनन-विचार को हम धारण करें ( तद्देवा० ) आगे पूर्ववत् ॥ ५ ॥

भावार्थ—जीवनवृद्धि के लिये परमात्मा हृदय में साक्षात् हो। अन्न रसादि सामग्री हमारे शरीर को पुष्ट करे। आत्मा उत्तम स्तुतियों से परमात्मा की अर्चना करे। बुद्धि उत्तम निर्णय और मन अच्छा मनन करे तो जीवन सफल है ॥ ५ ॥

दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं सुम्नमिष्टये।
प्राचीनरश्मिमाहुतं घृतेन तद्देवानामवो अद्या वृणीमहे ॥ ६ ॥

दिविऽस्पृशम्। यज्ञम्। अस्माकम्। अश्विना। जीरऽअध्वरम्। कृणुतम्। सुम्नम्। इष्टये। प्राचीनऽरश्मिम्। आऽहुतम्। घृतेन। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ६ ॥

संस्कृतान्वयार्थः—( अश्विना ) हे अध्यापकोपदेशकौ *"अश्विना अध्यापकोपदेशकौ" [ ऋ० ५। ७८। ३ दयानन्दः ]* यद्वा–अहोरात्रौ *"अश्विनौ-अहोरात्रावित्येके" [ निरु० १२। १ ]* युवाम् ( जीराध्वरम् ) प्रगतिमार्गवन्तम् विद्यामयमार्गवन्तम् *"जीरं विद्यावन्तम्" [ ऋ० १। ४। ११ दयानन्दः ]* ( दिविस्पृशम् ) येन दिवि द्योतनस्वरूपे परमात्मनि सुखं स्पृशन्तम् *"दिविस्पृशः यो दिवि परमात्मनि सुखं स्पृशति [ ऋ० ५। १३ : २ दयानन्दः ]* तथाभूतम् ( अस्माक यज्ञं सुम्नम्-इष्टये कृणुतम् ) अस्माकं खल्वध्यात्मयज्ञं साधुं *"सुम्ने मा धत्तामिति····साधौ मा धत्तामित्येवैतदाह" [ श. १। ८। ३। २७ ]* अभीष्टसिद्धये कुरुतम् ( घृतेन-आहुतं प्राचीनरश्मिम् ) ज्ञानमयेन तेजसा *"तेजो वै घृतम्" [ मै० १। ६। ८ ]* समन्तात् सम्पादितं परमात्माभिमुखप्रवृत्तिमन्तं कुरुतामिति शषः ( तद्देवा० ) अग्रे पूर्ववत् ॥ ६ ॥

भाषान्वयार्थ—( अश्विना ) हे अध्यापक और उपदेशक जनो। दिनरात ( जीराध्वरम् ) प्रगति मार्ग वाले विद्यामय मार्ग वाले– ( दिविस्पृशम् ) प्रकाशमय परमात्मा में सुखस्पर्श कराने वाले– ( अस्माकं यज्ञं सुम्नम्-इष्टये कृणुतम् ) हमारे अध्यात्म यज्ञ को अच्छा बनाओ ( घृतेन-आहुतं प्राचीनरश्मिम् ) ज्ञानमय तेज से सम्पन्न को परमात्मा की ओर प्रवृत्त करो ( तद्देवा० ) आगे अर्थ पूर्ववत् है ॥ ६ ॥

भावार्थ—अध्यापक और उपदेशक तथा दिन और रात प्रगति मार्ग वाले या विद्यामय मार्ग वाले परमात्मा सम्बन्धी सुख पहुंचाने वाले अध्यात्म यज्ञ को कल्याण के लिये सम्पन्न करें। जिससे परमात्मा का साक्षात्कार हो सके ॥ ६ ॥

उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवम्।
रायस्पोषं सौश्रवसाय धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ७ ॥

उप॑ । ह्वये॒ । सु॒ऽहवं॑म् । मारु॑तम् । ग॒णम् । पा॒व॒कम् । ऋ॒ष्वम् । स॒ख्याय॑ । श॒म्ऽभुवं॑म् । रा॒यः । पोषं॑म् । सौ॒श्र॒व॒साय॑ । धी॒म॒हि॒ । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ ७ ॥

**संस्कृतान्वयार्थः**—( सुहवं पावकम् ) शोभनह्वातव्यं पवित्रकारकम् ( शम्भुवम् ) शम्भावयितारं ( ऋष्वम् ) महान्तम् "ऋष्व महन्नाम" [ निघं० ३ । ३ ] ( मारुतं गणम् ) जीवनमुक्तानां वृन्दम् *"मरुतो देवविशः"* [*श० २ । ५ । १ । १२*] ( सख्याय-उपह्वये ) सखित्वाय-उपमन्त्रये ( रायस्पोषम् ) ज्ञानधनस्य पोषकम् ( सौश्रवसाय ) शोभनश्रवणस्य श्रावयितारम् "द्वितीयार्थे चतुर्थी व्यत्ययेन" ( धीमहि ) ध्यायेम ( तद्देवाना० ) अग्रे पूर्ववत् ॥ ७ ॥

भाषान्वयार्थ—( सुहवं पावकम् ) सुन्दर आह्वान करने योग्य पवित्रकारक ( शम्भुवम् ) कल्याणकारक ( ऋष्वम् ) महान् ( मारुतं गणम् ) जीवन्मुक्त विद्वानों के मण्डल को ( सख्याय-उपह्वये ) मित्रता के लिये अपने समीप आमन्त्रित करता हूँ ( रायस्पोषम् ) ज्ञान धन के पोषक ( सौश्रवसाय ) उत्तम श्रवण कराने वाले का ( धीमहि ) मन में चिन्तन करें—संकल्प करें आगे पूर्व के समान ॥ ७ ॥

भावार्थ—ऊँचे विद्वान्, जीवन्मुक्त, पवित्रकारक, कल्याणसाधक, ज्ञानघन के वर्द्धक तथा उपदेश देने वाले महानुभावों की मित्रता करनी चाहिये और उनसे उपदेश का लाभ लेना चाहिये ॥ ७ ॥

अ॒पां पेरुं॑ जी॒वध॑न्यं भरामहे देवा॒व्यं॑ सु॒हवं॑मध्वर॒श्रियं॑म् ।
सु॒र॒श्मिं सोम॑मिन्द्रि॒यं य॑मीमहि॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ ८ ॥

अ॒पाम् । पेरु॑म् । जी॒वऽध॑न्यम् । भ॒रा॒म॒हे॒ । दे॒व॒ऽअ॒व्य॑म् । सु॒ऽहवम् । अ॒ध्व॒र॒ऽश्रिय॑म् । सु॒ऽर॒श्मिम् । सोम॑म् । इ॒न्द्रि॒यम् । य॒मी॒म॒हि॒ । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अपां पेरुम् ) आप्तजनानां पालकम् *"मनुष्या वा आपश्चन्द्राः"* [ *श० ७ । ३ । १ । २७* ] ( जीवधन्यम् ) जीवा मनुष्या धन्याः सफललक्ष्या यस्मिन् तं तथाभूतम् ( देवाव्यम् ) मुमुक्षुभिः प्राप्यम् ( सुहवम् ) सुष्ठु प्राप्तव्यम् ( अध्वरश्रियम् ) अध्यात्मयज्ञस्य श्रीभूतम् ( भरामहे ) धारयेम-उपास्महे ( सुरश्मिं सोमम्-इन्द्रियं यमीमहि ) तं सुन्दरज्ञानानन्दरश्मिमन्तं शान्तपरमात्मानम्-"इन्द्रिये सप्तम्यर्थे प्रथमा व्यत्ययेन" मनसि *"इन्द्रियं मनः प्रभृतीन्द्रियमात्रम्"* [ *यजु० २१ । ४४ दयानन्दः* ] नियतं कुर्मः ( तद्देवा० ) अग्रे पूर्ववत् ॥ ८ ॥

भाषान्वयार्थ—( अपां पेरुम् ) आप्तजनों के पालक ( जीवधन्यम् ) जीव—मनुष्य धन्य—सफल लक्ष्य वाले जिसके आधार पर हो जाते हैं उस ( देवाव्यम् ) मुमुक्षुओं के द्वारा प्राप्त करते

योग्य ( सुहवम् ) उत्तम स्तुत्य ( अध्वरश्रियम् ) अध्यात्म यज्ञ के श्रीभूत परमात्मा को ( भरामहे ) हम धारण करें–हम उसकी उपासना करें तथा ( सुरश्मिं सोमम्-इन्द्रियं यमीमहि ) उस सुन्दर ज्ञान-आनन्द रूप रश्मि वाले शान्तस्वरूप परमात्मा को अपने मन में नियत करें–बिठायें आगे पूर्ववत् ॥ ८ ॥

भावार्थ—परमात्मा आप्त जनों का पालक, जीवन का लक्ष्य पूरक, मुमुक्षुओं द्वारा प्राप्त करने योग्य, अध्यात्म यज्ञ का श्रीभूत और ज्ञानान्द का प्रसारक है। ऐसा मन में निश्चय करके उसकी उपासना करनी चाहिये ॥ ८ ॥

सनेम तत्सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः ।
ब्रह्मद्विषो विष्वगेनो भरेरत तद्देवानामवो अद्या वृणीमहे ॥ ९ ॥

सनेम । तत् । सुऽसनिता । सनित्वऽभिः । वयम् । जीवाः । जीवऽपुत्राः । अनागसः । ब्रह्मऽद्विषः । विष्वक् । एनः । भरेरत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ९ ॥

संस्कृतान्वयार्थः—( वयं जीवपुत्राः-जीवाः-अनागसः ) वयं जीवत्पुत्राः स्वयं जीवन्तो गृहस्थाः पापरहिताः सन्तः ( सनित्वभिः सुसनिता तत् सनेम ) परमात्मज्ञान सम्भाजकैः-दत्तेन सुसम्भक्तेन परमात्मज्ञानेन तत् परमात्मज्ञानं सम्भजेम ( ब्रह्मद्विषः-एनः-विष्वक् भरेरत ) ब्रह्मणः परमात्मनो द्वेष्टारो नास्तिका जना पापं विकीर्णमपि फलरूपेण तत्फलमिति यावत् स्वात्मनि भरन्तु भुञ्जीरन् अग्रे पूर्ववत् ॥ ९ ॥

भाषान्वयार्थ—( वयं जीवपुत्राः-जीवाः-अनागसः ) हम जीते हुवों के पुत्र स्वयं जीते हुए गृहस्थ लोग पाप से रहित ( सनित्वभिः सुसनिता तत् सनेम ) परमात्मज्ञान के सेवन करने वालों के द्वारा दिये हुए सम्यक् सेवन किये हुए परमात्म ज्ञान से अपने को संसेवित करने वाले बनें ( ब्रह्मद्विषः-एनः-विष्वक् भरेरत ) परमात्मा से द्वेष करने वाले नास्तिक जन उभरे हुए पाप को फलरूप में अपने अन्दर भरें–भोगें आगे पूर्ववत् ॥ ९ ॥

भावार्थ—पापरहित हुए जीते हुए माता पिताओं के पुत्र जीते रहते हैं। परमात्म ज्ञान को प्राप्त हुए विद्वानों द्वारा दिये गये परमात्मज्ञान के भागी होना चाहिये। परमात्मा से द्वेष करने वाले नास्तिक जन पाप का फल भोगते हैं ॥ ९ ॥

ये स्था मनोर्यज्ञियास्ते शृणोतन यद्वो देवा ईमहे तद्ददातन ।
जैत्रं क्रतुं रयिमद्वीरवद्यशस्तद्देवानामवो अद्या वृणीमहे ॥ १० ॥

ये । स्थ । मनोः । यज्ञियाः । ते । शृणोतन । यत् । वः । देवाः । ईमहे । तत् ।

दुदातन । जैत्रम् । क्रतुम् । रयिमत् । वीरऽवत् । यशः । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ १० ॥

**संस्कृतान्वयार्थः**—( ये देवा:-मनो:-यज्ञिया: स्थ ) ये यूयं विद्वांसो मुमुक्षवो जीवन्मुक्ता वा, आयुष: *"आयुर्वै मनु:"* [ कौ० २६ : १७ ] यज्ञकर्त्तारो यज्ञकुशला: स्थ ( ते शृणोतन ) ते यूयं शृणुत ( व:-यत् तत्-ददातन ) तद्यद्युष्माकमायुष्यं ज्ञानं तदस्मभ्यं दत्त ( जैत्रं क्रतुं रयिमत्-वीरवत्-यश: ) जयकारिणं प्रज्ञानं पुष्टिमत् प्राणवत् *"प्राणा वै दश वीरा:"* [ श० ६ । ४ । २ । १० ] यशश्च दत्त ( तद्देवाना० ) अग्रे पूर्ववत् ॥ १० ॥

**भाषान्वयार्थ**—( ये देवा:-मनो:-यज्ञिया: स्थ ) जो मुमुक्षु या जीवन्मुक्त आयु के यजनशील तुम हो ( ते शृणोतन ) वे तुम सुनो ( व:-यत् तत्-ददातन ) वह जो तुम्हारा आयु सम्बन्धी ज्ञान है उसे हमारे लिये दो ( जैत्रं क्रतुं रयिवत्-वीरवत्-यश: ) जय कराने वाला प्रज्ञान पुष्टि वाला और प्राणवाला यश भी देओ ( तद्देवा० ) पूर्ववत् ॥ १० ॥

**भावार्थ**—मुमुक्षु या जीवन्मुक्त विद्वान् अपने आयु के ज्ञान को अन्य जनों के लिये प्रदान करें तथा पाप अज्ञान पर विजय पाने वाले पुष्टिप्रद, प्राणप्रद और यशोवर्द्धक ऊँचे ज्ञान का भी उपदेश दें ॥ १० ॥

**महद्द्य मंहुतामा वृणीमहेऽवो देवानां बृहुतामंनुर्वणाम् ।**
**यथा वसुं वीरजातं नशामहै तद्देवानामवो अद्या वृणीमहे ॥ ११ ॥**

मह्त् । अद्य । मुहुताम् । आ । वृणीमहे । अवः । देवानाम् । बृहुताम् । अनुर्वणाम् । यथा । वसुं । वीरऽजातम् । नशामहै । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अद्य ) अस्मिन्काले ( महतां बृहताम्-अनर्वणां देवानाम् ) महत्त्ववतां ज्येष्ठानां तथाऽनर्वणां प्रशस्तानामपितु स्वज्ञानेऽन्यस्मिन्ननाश्रितानां महज्ज्ञानिनाम् *"अनर्वाऽप्रत्यृतोऽन्यस्मिन्"* [ *निरु० ६ । २३* ] विदुषाम् ( महत् अव:-आवृणीमहे ) उत्कृष्टं श्रवणं ज्ञानं *"अव रक्षण···श्रवण···वृद्धिषु"* [ *भ्वादि०* ] समन्तात् स्वीकुर्मो धारयाम: ( यथा ) यतो हि ( वीरजातं वसु नशामहै ) वीरेषु प्राणेषु-इन्द्रियेषु जातं वासयितृ बलं प्राप्नुयाम अग्रे पूर्ववत् ॥ ११ ॥

**भाषान्वयार्थ**—( अद्य ) आज—इस समय (महतां बृहताम्-अनर्वणां देवानाम्) महत्त्ववाले ज्येष्ठ तथा प्रशस्त अपने ज्ञान में दूसरे पर निर्भर न रहने वाले विज्ञानी महानुभावों के ( महत्-अव:-आवृणीमहे ) उत्कृष्ट श्रवण ज्ञान को भलीभांति अपने अन्दर धारण करते हैं ( यथा ) जिससे कि ( वीरजातं वसु नशामहै ) प्राण आदि इन्द्रियों में बसाने वाले बल को प्राप्त करें ( तद्देवा० ) आगे पूर्ववत् ॥ ११ ॥

भावार्थ—गुणी श्रेष्ठ महा विद्वानों द्वारा ज्ञान का श्रवण कर प्राण आदि के बल को सुसम्पन्न करें ॥ ११ ॥

महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये।
श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो अद्या वृणीमहे ॥ १२ ॥

महः । अग्नेः । सम्ऽइधानस्य । शर्मणि । अनागाः । मित्रे । वरुणे । स्वस्तये । श्रेष्ठे । स्याम । सवितुः । सवीमनि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ १२ ॥

संस्कृतान्वयार्थः—( महः-समिधानस्य-अग्नेः ) महतः प्रकाशमानस्य सर्वनेतुः परमात्मनः ( शर्मणि ) शरणे ( अनागाः ) "अनागसः" व्यत्ययेन बहुवचने-एकवचनम् पापरहिताः सन्तः ( स्याम ) भवेम, तथा ( श्रेष्ठे मित्रे वरुणे सवितुः सवीमनि ) तस्य श्रेष्ठस्य प्रेरकस्य वरणकर्त्तुः "विभक्तिव्यत्ययः" शासकस्य परमात्मनः प्रसवे प्रशासने वयं भवेम वर्त्तेमहि ( तद्देवाना० ) अग्रे पूर्ववत् ॥ १२ ॥

भाषान्वयार्थ—( महः-समिधानस्य-अग्नेः ) महान् प्रकाशमान सर्वनेता परमात्मा के ( शर्मणि ) सुखशरण में ( अनागाः ) पापरहित ( स्याम ) होवें तथा ( श्रेष्ठे मित्रे वरुणे सवितुः सवीमनि ) उस श्रेष्ठ प्रेरक अपनाने वाले शासक परमात्मा के प्रशासन में हम रहें ( तद्देवाना० ) आगे पूर्ववत् ॥ १२ ॥

भावार्थ—महान् प्रकाशमान सर्वनेता परमात्मा की सुखशरण निष्पाप जन ही प्राप्त कर सकते हैं। उन्हें ही परमात्मा उत्तम कर्म करने की प्रेरणा देता है–अपनाता है जो उसके शासन में रहते हैं ॥ १२ ॥

ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः।
ते सौभगं वीरवद् गोमदप्नो दधातन द्रविणं चित्रमस्मे ॥ १३ ॥

ये । सवितुः । सत्यऽसवस्य । विश्वे । मित्रस्य । व्रते । वरुणस्य । देवाः । ते । सौभगम् । वीरऽवत् । गोऽमत् । अप्नः । दधातन । द्रविणम् । चित्रम् । अस्मे इति ॥ १३ ॥

संस्कृतान्वयार्थः—( ये विश्वे देवाः ) ये सर्वविषयेषु प्रविष्टा विद्वांसः ( सवितुः सत्यसवस्य मित्रस्य वरुणस्य व्रते ) उत्पादकस्य यथावच्छासकस्य प्रेरकस्य वरयितुः परमात्मनो नियमे सदाचरणे वर्त्तन्ते ( ते-अस्मे ) ते यूयमस्मभ्यम् ( वीरवत्-गोमत् सौभगम् ) प्राणयुक्तं प्रशस्तेन्द्रिययुक्तं सौभाग्यम् तथा ( चित्रं द्रविणम्-अप्नः-दधातन ) अद्भुतं चायनीयं ज्ञानधनं कर्म–कर्त्तव्यबलं च धारयत ॥ १३ ॥

भाषान्वयार्थ—( ये विश्वे देवाः ) जो सारे विषयों में प्रवेश पाने वाले विद्वान् हैं, ( सवितुः सत्यसवस्य मित्रस्य वरुणस्य व्रते ) उत्पादक, यथावत् शासक, प्रेरक, वरने वाले परमात्मा के नियम सदाचरण में वर्त्तते हैं–रहते हैं ( ते-अस्मे ) वे तुम हमारे लिये ( वीरवत्-गोमत् सौभगम् ) प्राण-युक्त प्रशस्त इन्द्रिय सहित सौभाग्य को, ( चित्रं द्रविणम्-अप्नः-दधातन ) अद्भुत दर्शनीय ज्ञानधन कर्त्तव्यबल को धारण कराओ ॥ १३ ॥

भावार्थ— उत्पन्नकर्त्ता, सच्चे शासक, प्रेरक और वरने वाले परमात्मा के नियम में रहने वाले सर्व विषयों में प्रवेश किये हुए विद्वान् जन जीवन बल संयम शक्ति तथा सौभाग्य ज्ञानबल और कर्त्तव्य बल मनुष्यों के अन्दर धारण करावें ॥ १३ ॥

सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १४ ॥

सविता । पश्चातात् । सविता । पुरस्तात् । सविता । उत्तरात्तात् । सविता । अधरात्तात् । सविता । नः । सुवतु । सर्वऽतातिम् । सविता । नः । रासताम् । दीर्घम् । आयुः ॥ १४ ॥

संस्कृतान्वयार्थः—( सविता पश्चातात् ) सर्वोत्पादकः प्रेरकः परमात्माऽस्माकं पश्चादपि रक्षकः ( सविता पुरस्तात् ) सर्वोत्पादकः प्रेरकः परमात्माऽस्माकं पूर्वदिक्तश्च रक्षकः ( सविताः-उत्तरात्तात् ) सर्वोत्पादकः प्रेरकः परमात्माऽस्माकमुत्तरदिशश्च रक्षकः ( सविता-अधरात्तात् ) सर्वोत्पादकः परमात्माऽधो दिशश्च रक्षकः ( सविता नः सर्वतातिं सुवतु ) उत्पादकः प्रेरकः परमात्माऽस्मभ्यं सर्वकल्याणकरं वस्तूत्पादयतु प्रेरयतु–ददातु ( सविता नः-दीर्घम्-आयुः-रासताम् ) सर्वोत्पादकः प्रेरकः परमात्माऽस्मभ्यं दीर्घं जीवनं ददातु ॥ १४ ॥

भाषान्वयार्थ—( सविता पश्चातात् ) सर्वोत्पादक प्रेरक परमात्मा हमारा पश्चिम से रक्षा करने वाला ( सविता पुरस्तात् ) सर्वोत्पादक प्रेरक परमात्मा हमारा पूर्व से रक्षा करने वाला ( सविता-उत्तरात्तात् ) सर्वोत्पादक प्रेरक परमात्मा हमारा उत्तर से रक्षा करने वाला ( सविता-अधरात्तात् ) सर्वोत्पादक परमात्मा हमारी अधो दिशा से–नीचे की दिशा से हमारी रक्षा करने वाला ( सविता नः सर्वतातिं सुवतु ) सर्वोत्पादक प्रेरक परमात्मा हमारी समस्त कल्याणकारी वस्तु को उत्पन्न करे–प्रेरित करे–देवे ( सविता नः-दीर्घम्-आयुः-रासताम् ) सर्वोत्पादक प्रेरक परमात्मा हमारे लिये दीर्घ जीवन देवे ॥ १४ ॥

भावार्थ—उत्पादक प्रेरक परमात्मा के आदेश के अनुसार रहने पर वह सर्व दिशाओं से रक्षा करता है और कल्याणकारी वस्तु एवं दीर्घ जीवन प्रदान करता है ॥ १४ ॥



# सप्तत्रिंशं सूक्तम्

ऋषिः—सौर्योऽभितपाः ।

देवता—सूर्यः ।

छन्दः—१-५ पादनिचृज्जगती । ६-९ विराट् जगती । १० निचृत् त्रिष्टुप् । ११-१२ जगती ।

स्वरः—१-९, ११-१२ निषादः । १० धैवतः ।

विषयः—अत्र सूक्ते सूर्यशब्देन परमात्मा-आदित्यश्च गृह्येते । परमात्मनः प्रार्थनया ज्ञानोपदेशेन निजजीवनचर्या सूर्यस्य प्रकाशेन दिनचर्या च खलु सम्पादनीया भवति ॥

इस सूक्त में सूर्य शब्द से परमात्मा और सूर्य का ग्रहण है। उनके प्रार्थना और सेवन से अपनी जीवनचर्या और दिनचर्या को उत्तम बनाना चाहिए ॥

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं संपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥

नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत । दूरेऽदृशे । देवऽजाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत ॥ १ ॥

**संस्कृतान्वयार्थः**—( मित्रस्य वरुणस्य चक्षसे नमः ) प्रेरकस्य दिनरूपस्य *"अहर्वै मित्रः"* [ *ऐ० ४ । १०* ] संसारस्य तथा स्वस्मिन् वरयितृ रात्रिरूपस्य *"रात्रिर्वरुणः"* [ *ऐ० ४ । १०* ] प्रलयस्य प्रख्यापकाय-परमात्मने नमोऽस्तु-अध्यात्मयज्ञोऽस्तु *"यज्ञो वै नमः"* [ *श० २ । ४ । २ । २४* ] ( महः-देवाय तत्-ऋतं सपर्यत ) महते परमात्मदेवाय तत् सत्य-सङ्कल्पं सत्यवचनं सत्यकर्म च सपर्यत निष्कामा भूत्वा कर्म कुरुत ( दूरेदृशे ) दूरेऽपि दृक्शक्तिर्यस्य तथाभूताय सर्वज्ञाय परमात्मने ( देवजाताय ) देवा जाता यस्मात् तस्मै ( केतवे ) प्रेरकाय ( दिवः-पुत्राय ) मोक्षधाम्नो दोषेभ्यः पवित्रकारकाय *"पुवो ह्रस्वश्च"* [ *उणा० ४ । १६५* ] *इति पूञ् धातोः क्तः-प्रत्ययः । पुत्रः-यः पुनाति सः* [ *ऋ० १ । १८१ । ४ दयानन्दः* ] ( सूर्याय ) ज्ञानप्रकाशकाय ( शंसत ) स्तुतिं कुरुत ॥ १ ॥

भाषान्वयार्थ—( मित्रस्य ) प्रेरक दिन तथा संसार के ( वरुणस्य ) अपनी ओर वरने वाली रात्री तथा प्रलय के ( चक्षसे ) प्रख्यापक–प्रसिद्ध करने वाले परमात्मा के लिये ( नमः ) अध्यात्म यज्ञ हो–हुआ करता है ( महः–देवाय ) महान् देव परमात्मा के लिये ( तत्–ऋतं सपर्यत ) उस सत्य सङ्कल्प–सत्यवचन सत्यकर्म को समर्पित करो, निष्काम होकर समर्पण करो ( दूरेदृशे ) दूर तक भी दृष्टि शक्ति जिसकी है ऐसे सर्वद्रष्टा सर्वज्ञ परमात्मा एवं ( देवजाताय ) अग्नि आदि देव जिससे उत्पन्न हुए ऐसे–( केतवे ) चेताने वाले– ( दिवः पुत्राय ) मोक्षधाम को दोषों से पवित्र करने वाले–( सूर्याय ) ज्ञान प्रकाशक परमात्मा के लिये ( शंसत ) स्तुति करो ॥ १ ॥

भावार्थ—परमात्मा दिन-रात संसार तथा प्रलय का क्रमशः प्रकट करने वाला है उसकी प्राप्ति के लिये सत्यसङ्कल्प सत्यभाषण तथा सत्यकर्म का आचरण करना चाहिये, वह दूरदर्शी, सर्वद्रष्टा, समस्त अग्नि आदि देवों का उत्पादक, वेद ज्ञान द्वारा सचेत करने वाला मोक्ष को सब सांसारिक दोषों से पृथक रखने वाला है उसकी सदा स्तुति करनी चाहिये ॥ १ ॥

सा मा॑ स॒त्योक्ति॒ः परि॑ पातु वि॒श्वतो॒ द्यावा॑ च॒ यत्र॑ त॒तन॒न्नहा॑नि च ।
विश्व॑म॒न्यन्नि विं॑शते॒ यदेज॑ति वि॒श्वाहापो॑ वि॒श्वाहोदे॑ति॒ सूर्य॑ः ॥ २ ॥

सा । मा॒ । स॒त्यऽउ॑क्तिः । परि॑ । पातु । वि॒श्वत॑ः । द्यावा॑ । च॒ । यत्र॑ । त॒तन॑न् । अहा॑नि । च॒ । विश्व॑म् । अ॒न्यत् । नि । वि॒श॒ते । यत् । एज॑ति । वि॒श्वाहा॑ । आप॑ः । वि॒श्वाहा॑ । उत् । ए॒ति॒ । सूर्य॑ः ॥ २ ॥

संस्कृतान्वयार्थः—( सा सत्योक्तिः-मा विश्वतः परिपातु ) सा सत्यवाक्–वेदवाक् श्रुतिरीश्वरवाणी मां सर्वतः खलु परिरक्षति सम्यक् सेवनेन 'अत्र लडर्थे लोट्' ( यत्र ) यदाश्रये ( द्यावा च ) द्यावौ "द्यावा……द्यावौ" [ निरु० २ । २१ ] द्यावा पृथिव्यौ–द्युलोकपृथिवीलोकौ च (अहानि च) दिनानि च चकाराद् रात्रयश्च ( ततनन् ) प्रसरन्ति ( विश्वम्-अन्यत्-निविशते ) सर्वमन्यत्-यत् खलु स्थिरत्वं प्राप्तं जडं वस्तु ( यत्-एजति ) यच्च चेष्टते-चेतनं वस्तु ( आपः-विश्वाहा ) आपः सर्वदा प्रवहन्ति ( सूर्यः-विश्वाहा-उदेति ) सूर्यश्च नित्यमुदेति ॥ २ ॥

भाषान्वयार्थ—( सा सत्योक्तिः ) वह सत्यवाक्–वेदवाणी–ईश्वरीय वाणी ( मा विश्वतः परिपातु ) मुझे सब ओर से सुरक्षित रखे ( यत्र ) जिसके आश्रय में ( द्यावा च ) दोनों द्यावा पृथिवी–द्युलोक व पृथिवी लोक ( अहानि च ) और दिन और रात्रियां ( ततनन् ) प्रसार पाती हैं ( विश्वम्–अन्यत्–निविशते ) सब अन्य जड़ वस्तु निविष्ट–रखी हुई है ( यत्–एजति ) जो चेतन वस्तु चेष्टा कर रही है ( आपः–विश्वाहा ) जल धारायें बह रही हैं ( सूर्यः–विश्वाहा–उदेति ) सूर्य नित्य उदय होता है ॥ २ ॥

भावार्थ—परमात्मा की सत्य वाणी–श्रुति–वेदवाणी मनुष्यों की सब प्रकार से रक्षा करती है, उसी सत्यवाणी के अनुसार आकाश से लेकर पृथिवी पर्यन्त लोक–लोकान्तर और

अहर्गण तथा रात्रिगण प्रसारित हो रहे हैं—क्रमशः चालू हैं सब जड़ और चेतन पदार्थ अपने-अपने स्वरूप में स्थित चेष्टा करते हैं तथा तदनुसार जलधारायें बहती हैं, सूर्य उदय होता है ऐसे उस परमात्मा का ध्यान और उसकी वेदवाणी का ज्ञान करना चाहिये ॥ २ ॥

न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरैः रथर्यसि ।
प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥ ३ ॥

न । ते । अदेवः । प्रऽदिवः । नि । वासते । यत् । एतशेभिः । पतरैः । रथर्यसि । प्राचीनम् । अन्यत् । अनु । वर्तते रजः । उत् । अन्येन । ज्योतिषा । यासि । सूर्य ॥ ३ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) हे परमात्मन् ! सूर्य ! वा त्वम् ( यत्-एतशेभिः पतरैः-रथर्यसि ) यदा-अश्वैरिव शक्तितरङ्गैः पतनशीलैः किरणैर्वा प्राप्नोषि गच्छसि वा '*रथर्यति गतिकर्मा*" [ *निघ० २ । १४* ] तदा ( प्रदिवः-अदेवः-निवासते ) पूर्ववर्ती "*प्रदिव पुराणनाम*" [ *निघ० ३ । २७* ] त्वाममन्यमानो नास्तिकः प्रकाशरहितोऽन्धकारो वा "*अदेवः प्रकाशरहितः*" [ *ऋ० ६ । १७ । ७ दयानन्दः* ] ( प्राचीनम्-अन्यत्-रजः-अनुवर्तते ) पश्चाद्भवमन्यत् खलु लोकं स्थानमनुवर्तते न तु तव सम्मुखम् । यतः ( अन्येन ज्योतिषा यासि ) तद्भिन्नेन विरलेन ज्ञानप्रकाशेन ज्योतिषा वा प्राप्तो भवसि ॥ ३ ॥

**भाषान्वयार्थ**—( सूर्य ) हे परमात्मन् ! ( यत् ) जब ( पतरैः-एतशेभिः ) प्रगतिशील शक्ति तरङ्गों से या किरणों के द्वारा ( रथर्यसि ) तू प्राप्त होता है या गति करता है ( प्रदिवः-अदेवः ) पूर्ववर्ती तुझे न मानने वाला नास्तिक या प्रकाश रहित अन्धकार ( न-निवासते ) तेरे सम्मुख नहीं रहता है, नहीं ठहरता है । ( प्राचीनम्-अन्यत्-रजः ) तुझसे पीछे उत्पन्न किये हुए लोक या स्थान के प्रति ( अनु-वर्तते ) वर्तता है--प्राप्त होता है, जिससे कि ( अन्येन ज्योतिषा-यासि ) तू विशिष्ट ज्ञानप्रकाश से या ज्योति से प्राप्त होता है जाना जाता है ॥ ३ ॥

**भावार्थ**—परमात्मा को न मानने वाला नास्तिक पुरुष उसके सामने नहीं ठहर सकता वह शक्तितरङ्गों से सब को अपने अधिकार में किये हुए है । वह नास्तिक अन्य दुःख स्थानों को ही प्राप्त होता है तथा सूर्य के सम्मुख अन्धकार नहीं ठहर सकता उसकी प्रखर ज्योतियों से ताड़ित हुआ किसी स्थान में चला जाता है । उस ज्ञानप्रकाशक परमात्मा और सूर्य की शरण लेना चाहिए ॥ ३ ॥

येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना ।
तेनास्मद्विश्वामनिरामनाहुतिमपामीवामप दुष्वप्न्यं सुव ॥ ४ ॥

येन । सूर्य । ज्योतिषा । बाधसे । तमः । जगत् । च । विश्वम् । उत्ऽइयर्षि । भानुना । तेन । अस्मत् । विश्वाम् । अनिराम् । अनाहुतिम् । अप । अमीवाम् । अप । दुःऽस्वप्न्यम् । सुव ॥ ४ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! सूर्य ! वा ( येन ज्योतिषा ) येन ज्ञानप्रकाशेन यद्वा येन रश्मिप्रकाशेन ( तमः-बाधसे ) अज्ञानं यद्वान्धकारमपगमयसि ( भानुना ) प्रभावेण भासनेन वा ( विश्वं जगत्-उत्-इयर्षि ) सर्वं जगत्प्रेरयसि गतिमयं करोषि ( तेन ) तेन प्रभावेण भासनेन वा ( अस्मत् ) अस्मत्तः ( विश्वाम्-अनिराम् ) सर्वामन्नाभावरूपां दरिद्रताम् ( अनाहुतिम् ) आहुतिप्रदानाभावरूपां घृतदुग्धरहिततां तन्निमित्तभूत्तां गवादिपशुरहितताम् ( अमीवाम् ) रोगप्रवृत्तिम ( दुःस्वप्न्यम् ) निद्रादोषात् प्राप्तां दुर्भावनाम् ( अपसुव ) दूरीकुरु ॥ ४ ॥

**भाषान्वयार्थ**— ( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! या सूर्य ! ( येन ज्योतिषा ) जिस ज्ञानप्रकाश से या रश्मिप्रकाश से ( तमः-बाधसे ) अज्ञान को या अन्धकार को हटाता है ( भानुना ) प्रभाव से या प्रकाश से ( विश्वं जगत् ) सारे जगत् को ( उत्-इयर्षि ) उभारता है—गतिमयं करता है ( तेन ) उससे ( अस्मत् ) हमसे ( विश्वाम्-अनिराम् ) सब अन्नरहितता—दरिद्रता को तथा ( अनाहुतिम् ) आहुति प्रदान के अभाव रूप घृत दूध आदि की रहितता को—उसके निमित्त भूत गो आदि पशुओं की रहितता को ( अमीवाम् ) रोगप्रवृत्ति को ( दुःस्वप्न्यम् ) निद्रादोष से प्राप्त दुर्भावना को ( अपसुव ) दूर कर ॥ ४ ॥

**भावार्थ**—परमात्मा अपने ज्ञानप्रकाश से अज्ञानान्धकार को हटाता है और समस्त जगत् को उद्भूत करता है–प्रसिद्ध करता है तथा दुर्भिक्षता और बुरे स्वप्नों को हटाता है तथा सूर्य अपनी रश्मि द्वारा अन्धकार को भगाता है जगत् को चमकाता है । अन्नादि भोग्य पदार्थों के अभाव और निद्रा दोष को दूर करता है ॥ ४ ॥

**विश्वस्य हि प्रेषितो रक्षसि व्रतमहेळयन्नुच्चरसि स्वधा अनु ।**
**यदद्य त्वा सूर्योपब्रवामहै तं नो देवा अनु मंसीरत क्रतुम् ॥ ५ ॥**

विश्वस्य । हि । प्रऽइषितः । रक्षसि । व्रतम् । अहेळयन् । उत्ऽचरसि । स्वधाः । अनु । यत् । अद्य । त्वा । सूर्य । उपऽब्रवामहै । तम् । नः । देवाः । अनु । मंसीरत । क्रतुम् ॥ ५ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! ( प्रेषितः ) प्रार्थनया प्रेरितस्त्वम् ( विश्वस्य हि व्रतं रक्षसि ) सर्वस्य जनस्य निष्पक्षं व्रतं सङ्कल्पितमभीष्टं रक्षसि तद्दानायेति ( स्वधाः-अनु-अहेळयन्-उत्-चरसि ) स्वधारणाः-स्वरूपशक्तीरनुसृत्य-अक्रुध्यन्-प्रियं कुर्वन्नुन्नयसि ( यत्-अद्य त्वा-उप ब्रवामहै ) यदास्मिन् जीवने प्रत्यह त्वां

प्रार्थयामहे-याचामहे ( नः क्रतुम्-अनु देवाः-मंसीरत ) अस्माकं तं सङ्कल्पं देवा विद्वांसो ऽनुमोदन्ते ॥ ५ ॥

भाषान्वयार्थ—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! ( प्रेषितः ) तू प्रार्थना द्वारा प्रेरित हुआ ( विश्वस्य हि व्रतं रक्षसि ) सब प्रत्येक मनुष्य के निष्पक्ष सङ्कल्प—अभीष्ट को रखता है देने के लिये ( स्वधाः-अनु ) स्वधारणाओं—स्वरूप शक्तियों के अनुसार ( अहेळयन्—उच्चरसि ) न क्रोध करते हुए, प्रिय बनाते हुए को उन्नत करता है ( यत्—अद्य त्वा—उप ब्रवामहै ) जब इस जीवन में प्रतिदिन तुझे चाहते हैं ( नः क्रतुम्-अनु देवाः-मंसीरत ) हमारे उस सङ्कल्प का विद्वान् जन अनुमोदन करते हैं ॥ ५ ॥

भावार्थ—प्रार्थना द्वारा प्रेरित हुआ परमात्मा शुभ कर्मकर्त्ता मनुष्य के शुभ सङ्कल्प को पूरा करता है। ऐसे मनुष्य के शुभ सङ्कल्प का विद्वान् जन अनुमोदन किया करते हैं।

तं नो॒ द्यावा॑पृथि॒वी तन्न॒ आप॒ इन्द्रः॑ शृण्वन्तु म॒रुतो॒ हवं॒ वचः॑ ।
मा शूने॑ भूम॒ सूर्य॑स्य सं॒दृशि॑ भ॒द्रं जीव॑न्तो जर॒णाम॑शीमहि ॥ ६ ॥

तम् । नः॒ । द्यावा॑पृथि॒वी इति॑ । तत् । नः॒ । आपः॑ । इन्द्रः॑ । शृ॒ण्व॒न्तु॒ । म॒रुतः॑ । हव॑म् । वचः॑ । मा । शूने॑ । भू॒म॒ । सूर्य॑स्य । स॒म्ऽदृशि॑ । भ॒द्रम् । जीव॑न्तः । ज॒र॒णाम् । अ॒शी॒म॒हि॒ ॥ ६ ॥

संस्कृतान्वयार्थः—( नः-तं हवम् ) अस्माकं तमभिप्रायम् ( द्यावापृथिवी ) मातापितरौ *"द्यौर्मे पिता ... माता पृथिवी महीयम्"* [ ऋ० १-१६४-३३ ] यद्वा मातापितृभूतः परमात्मा ( नः-तत्-वचः ) अस्माकं तद्वचनं प्रार्थनावचनम् ( आपः ) आप्तजनाः *"मनुष्या वा आपश्चन्द्राः"* [ श० ७ । ३ । १ । २० ] सर्वत्राप्तो व्यापकः परमात्मा *'ता आपः स प्रजापतिः"* [ यजु० ३२ । १ ] (इन्द्रः) ऐश्वर्यवान् राजा परमात्मा वा ( मरुतः ) ऋत्विजः *'मरुतः-ऋत्विक्नाम"* [ निघ० ३ । १८ ] यद्वा जीवनप्रदः परमात्मा ( शृण्वन्तु ) स्वीकुर्वन्तु स्वीकरोतु वा ( शूने मा भूम ) शैथिल्ये—अलसत्वे न भवेम—तिष्ठेम ( सूर्यस्य संदृशि) सर्वप्रकाशकस्य परमात्मनो ज्ञानदर्शने वेदोपदेशे ( जीवन्तः-भद्रं जरणाम्-अशीमहि ) जीवनं धारयन्तः कल्याणं जरणाम्—जरां देवायुष्यं *"जरा वै देवहितमायुः"* [ मै० १ । ७ । ५ ] वयं प्राप्नुयाम ॥ ६ ॥

भाषान्वयार्थ—( नः-तं हवम् ) हमारे उस अभिप्राय को ( द्यावापृथिवी ) माता पिता या माता पिता के सदृश परमात्मा ( नः-तत्-वचः ) हमारे उस वचन—प्रार्थनावचन को ( आपः ) आप्तजन या सर्वत्र व्यापक परमात्मा ( इन्द्रः ) ऐश्वर्यवान् राजा या परमात्मा ( मरुतः ) ऋत्विक् लोग या जीवनप्रद परमात्मा ( शृण्वन्तु ) स्वीकार करें या स्वीकार कर ( शूने मा भूम ) शैथिल्य—आलस्य में न होवें—न रहें ( सूर्यस्य संदृशि ) सर्वप्रकाशक परमात्मा के ज्ञानदर्शन—वेदोपदेश में ( जीवन्तः-भद्रं जरणाम्—अशीमहि) जीवन धारण करते हुए कल्याण और जरावस्था—देवों की आयु को हम प्राप्त करें ॥ ६ ॥

**भावार्थ**—परमात्मा के वेदज्ञान के अनुसार उसकी प्रार्थना करते हुए, कभी आलस्य में न रहकर जीवन बिताते हुए, सम्पूर्ण आयु को प्राप्त कर सकते हैं।

तथा,

माता पिता के आदेश में रहकर और विद्वानों से श्रवण करते हुए अपना जीवन ऊंचा व पूर्णायु वाला बना सकते हैं ॥ ६ ॥

**विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावन्तो अनमीवा अनागसः ।**
**उद्यन्तं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य ॥ ७ ॥**

विश्वाहा । त्वा । सुऽमनसः । सुऽचक्षसः । प्रजाऽवन्तः । अनमीवाः । अनागसः । उत्ऽयन्तम् । त्वा । मित्रऽमहः । दिवेऽदिवे । ज्योक् । जीवाः । प्रति । पश्येम । सूर्य ॥ ७ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) सर्वप्रकाशक परमात्मन् ! ( त्वा ) त्वाम् ( विश्वाहा ) सर्वदा ( सुमनसः ) पवित्रान्तःकरणाः प्रसन्नमनसो वा ( सुचक्षसः ) पवित्रदृष्टिमन्तः शोभनदृष्टिमन्तः प्रशस्तनेत्रशक्तिका वा ( प्रजावन्तः ) प्रशस्तसन्ततिमन्तः ( अनमीवाः ) अरोगाः ( अनागसः ) निष्पापाः सन्तः ( जीवाः ) वयं जीवाः ( मित्रमहः ) स्नेहिभिः—स्नेहकर्तृभिरुपासकैः प्रशंसनीय स्तोतव्य परमात्मन् ! यद्वा प्राणानां वर्धयितः ! *"प्राणो वै मित्रः"* *[ श० ६ । ५ । १ । ५ ]* ( त्वा ) त्वाम् ( दिवेदिवे ) प्रतिदिनम् ( प्रतिपश्येम ) साक्षात्कुर्याम, प्रत्यक्षं पश्येम वा ॥ ७ ॥

**भाषान्वयार्थ**—( सूर्य ) हे सर्वप्रकाशक परमात्मन् ! ( त्वा ) तुझे ( विश्वाहा ) सर्वदा ( सुमनसः ) पवित्र अन्तःकरण वाले या प्रसन्न मन वाले ( सुचक्षसः ) पवित्र दृष्टि वाले—शोभन दृष्टि वाले या प्रशस्त नेत्रशक्ति वाले ( प्रजावन्तः ) प्रशस्त सन्तान वाले ( अनमीवाः ) रोगरहित ( अनागसः ) निष्पाप ( जीवाः ) हम जीव ( मित्रमहः ) मित्रों स्नेही उपासकों द्वारा प्रशंसनीय, स्तुतियोग्य परमात्मन् ! या प्राणों को बढ़ाने वाले ! ( त्वा ) तुझको ( दिवे-दिवे ) प्रतिदिन ( प्रतिपश्येम ) प्रत्यक्ष साक्षात् करें ॥ ७ ॥

**भावार्थ**—परमात्मा का साक्षात्कार पवित्र मन वाले तथा प्रतिदिन उसकी स्तुति करने वाले किया करते हैं और वे लोग निरोग एवं उत्तम सन्तति वाले बन जाते हैं ॥ ७ ॥

**महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषेचक्षुषे मयः ।**
**आरोहन्तं बृहतः पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥ ८ ॥**

महि । ज्योतिः । बिभ्रतम् । त्वा । विऽचक्षण । भास्वन्तम् । चक्षुषेऽचक्षुषे । मयः । आऽरोहन्तम् । बृहतः । पाजसः । परि । वयम् । जीवाः । प्रति । पश्येम । सूर्य ॥ ८ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! सूर्य ! वा ( त्वा ) त्वाम् ( महि ज्योतिः-बिभ्रतम् ) महज्ज्योतिर्धारयन्तम् ( भास्वन्तम् ) प्रकाशवन्तम् ( चक्षुषे चक्षुषे मयः ) प्रतिनेत्राय–प्रतिनेत्रवते जनाय यद्वा प्रतिनेत्रवते प्राणिमात्रस्य सुखरूपं सुखप्रदं त्वाम् ( बृहतः पाजसः-परि-आरोहन्तम् ) महतो विस्तृतस्य पालनीयस्य संसारस्य *"पाजः पालनात्" [ निरु० ६ । १२ ]* परि-अधितिष्ठन्तम् ( वयं जीवाः ) वयं जीवन्तः ( प्रति पश्येम ) साक्षात्कुर्याम प्रत्यक्षं पश्येम वा ॥ ८ ॥

भाषान्वयार्थ—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! या सूर्य ! ( त्वा ) तुझ ( महि ज्योतिः-बिभ्रतम् ) महान् ज्योति धारण करते हुए को ( भास्वन्तम् ) प्रकाश वाले (चक्षुषे चक्षुषे मयः ) प्रतिनेत्र वाले जन के लिए या प्रति नेत्रवाले प्राणिमात्र के लिए, सुखरूप–सुखप्रद को ( बृहतः पाजसः-परि-आरोहन्तम् ) महान् विस्तृत पालनीय संसार के ऊपर अधिष्ठित हुए को ( वयं जीवाः ) हम जीते हुए ( प्रति पश्येम ) साक्षात् करें—प्रत्यक्ष देखें ॥ ८ ॥

भावार्थ—महान् ज्योति को धारण किये परमात्मा या सूर्य का आश्रय लेने से प्रत्येक नेत्रवान् प्राणी को दर्शनशक्ति और जीवनशक्ति मिलती है ॥ ८ ॥

यस्य॑ ते॒ विश्वा॒ भुव॑नानि के॒तुना॒ प्र चेर॑ते॒ नि च॑ वि॒शन्ते॑ अ॒क्तुभिः॑ ।
अ॒ना॒गा॒स्त्वेन॑ हरिकेश सू॒र्याऽह्नाह्ना नो॒ वस्य॑सावस्य॒सोदि॑हि ॥ ९ ॥

यस्य॑ । ते॒ । विश्वा॑ । भुव॑नानि । के॒तुना॑ । प्र । च॒ । ईर॑ते । नि । च॒ । वि॒शन्ते॑ । अ॒क्तुऽभिः॑ । अ॒ना॒गाः॒त्वेन॑ । ह॒रि॒ऽके॒श॒ । सू॒र्य॒ । अह्ना॑ऽअह्ना । नः॒ । वस्य॑साऽवस्यसा । उत् । इ॒हि॒ ॥ ९ ॥

**संस्कृतान्वयार्थः**—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! सूर्य ! वा ( यस्य ते ) यस्य तव ( केतुना ) प्रज्ञापनेन ज्ञानप्रेरकेण प्रकाशप्रेरकेण वा ( विश्वा भुवनानि ) सर्वाणि भूतानि प्राणवन्ति वस्तूनि ( प्र-ईरते च ) गतिं कुर्वन्ति व्यवहरन्ति ( अक्तुभिः-निविशन्ते च ) तथा रात्रिभिः सह शेरते विश्राम्यन्ति ( हरिकेश ) हे हरणशील ज्ञानरश्मिमन् परमात्मन् ! अन्धकारहरणशील तेजोरश्मिमन् सूर्य ! (अनागास्त्वेन) अपापत्वेन, अनगतिकत्वेन सर्वत्रातिप्रवर्तनेन ( अह्ना-अह्ना ) सर्वदिनैः ( नः ) अस्मान् प्रति ( वस्यसा-वस्यसा ) अत्यन्तश्रेयस्साधकेन धर्मेण ( उदिहि ) साक्षाद् भव, उदयं गच्छ वा ॥ ९ ॥

भाषान्वयार्थ—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! या सूर्य ! ( यस्य ते ) जिस तेरे ( केतुना ) प्रज्ञान–ज्ञानप्रेरक या प्रकाशप्रेरक स्वरूप से ( विश्वा भुवनानि ) समस्त भूत–प्राणी ( प्र-ईरते च ) गति करते हैं–व्यवहार करते हैं ( अक्तुभिः-निविशन्ते च ) तथा रात्रियों में सोते–विश्राम करते हैं ( हरिकेश ) हे अज्ञानहरणशील, ज्ञानरश्मिवाले परमात्मा ! या अन्धकार-हरणशील तेज रश्मिवाले सूर्य ! ( अनागास्त्वेन ) अपाप भाव से या सर्वत्रगतिप्रवर्तन से ( अह्ना-अह्ना ) प्रत्येक दिन ( नः ) हमारे प्रति ( वस्यसा वस्यसा ) अत्यन्त श्रेयस्साधक धर्म से ( उदिहि ) साक्षात् हो या उदय को प्राप्त हो ॥ ९ ॥

भावार्थ—परमात्मा के द्वारा दिये ज्ञान से मनुष्य अपना व्यवहार करते हैं पुनः रात्रि में विश्राम पाते हैं। उसके द्वारा दिये ज्ञान से निष्पाप होकर उसका साक्षात् करते हैं एवं सूर्य के प्रकाश से सारे प्राणी दिन का व्यवहार करके रात्रि में विश्राम करते हैं ॥ ९ ॥

शं नो भव चक्षसा शं नो अह्ना शं भानुना शं हिमा शं घृणेन ।
यथा शमध्वञ्छमसद् दुरोणे तत्सूर्य द्रविणं धेहि चित्रम् ॥ १० ॥

शम् । नः । भव । चक्षसा । शम् । नः । अह्ना । शम् । भानुना । शम् । हिमा । शम् । घृणेन । यथा । शम । अध्वन् । शम् । असत् । दुरोणे । तत् । सूर्य । द्रविणम् । धेहि । चित्रम् ॥ १० ॥

संस्कृतान्वयार्थः—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! सूर्य ! वा ( चक्षसा नः-शं भव ) ज्ञानप्रकाशेन तेजसा वा अस्मभ्यं कल्याणरूपो भव ( अह्ना नः-शं भव ) अज्ञाननाशकेन धर्मेण, अन्धकारनाशकेन दिनेन सहास्मभ्यं कल्याणनिमित्तो भव ( भानुना शम् ) सर्वज्ञत्वधर्मेण प्रकाशधर्मेण वा कल्याणरूपो भव ( हिमा शम् ) अशान्तिनाशकेन शान्तिधर्मेण शीतकालगतेन स्वरूपेण कल्याणकरो भव ( घृणेन शम् ) सन्दीपनधर्मेण दुष्टानां तापकधर्मेण ग्रीष्मकालभवेन तेजसा कल्याणकरो भव (यथा-अध्वन् शम्-असत् ) यथा हि मार्गे कल्याणं भवेत् तथा त्वं भव ( तत्-दुरोणे ) तत् कल्याणं गृहे भवेत् ( चित्रं द्रविणं धेहि ) चायनीयं दर्शनीयं साक्षाद्दर्शनविषयं धनमस्मासु धारय ॥ १० ॥

भाषान्वयार्थ—( सूर्य ) हे जगत्प्रकाशक परमात्मन् ! या सूर्य ! ( चक्षसा नः-शं भव ) अपने ज्ञानप्रकाश या तेज से हमारे लिए कल्याणरूप हो ( अह्ना नः-शं भव ) अज्ञाननाशक धर्म से या अन्धकारनाशक दिन से हमारे लिए कल्याणनिमित्त हो ( भानुना शम् ) अपने सर्वज्ञत्वधर्म से या प्रकाशधर्म से कल्याणकारी हो ( हिमा शम् ) अशान्तिनाशक शान्तिदायक धर्म से या शीतकाल में होने वाले स्वरूप से कल्याणकारी हो ( घृणेन शम् ) सन्दीपनधर्म से-दुष्टों को तपाने वाले धर्म से ग्रीष्मकाल में होने वाले तेज से कल्याणकारी हो ( यथा-अध्वन् शम्-असत् ) जैसे भी मार्ग में कल्याण होवे ऐसे तू हो जा ( तत्-दुरोणे ) वह कल्याण घर में हो ( चित्रं द्रविणं धेहि ) दर्शनीय-साक्षात् दर्शनरूप धन हमारे में धारण करा ॥ १० ॥

भावार्थ—परमात्मा अपने ज्ञानप्रकाश से सब दिनों और सब ऋतुओं में हमारे लिए कल्याणकारी और अपना साक्षात् दर्शनरूप आनन्दघन प्राप्त कराता है, एवं सूर्य भी अपने अन्धकारनाशक प्रकाश द्वारा सब दिनों और सब ऋतुओं में कल्याणकारी हो ॥ १० ॥

अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे चतुष्पदे ।
अदत्पिबदूर्जयमानमाशितं तदस्मे शं योररपो दधातन ॥ ११ ॥

अस्माकम् । देवाः । उभयाय । जन्मने । शर्म । यच्छत । द्विऽपदे । चतुःऽपदे । अदत् । पिबत् । ऊर्जयमानम् । आशितम् । तत् । अस्मे इति । शम् । योः । अरपः । दधातन ॥ ११ ॥

**संस्कृतान्वयार्थः**—(देवाः) जीवन्मुक्ता विद्वांसो वा ( अस्माकम्-उभयाय जन्मने द्विपदे चतुष्पदे शर्म यच्छत ) अस्मत्सम्बन्धिने खलूभयाय द्विप्रकाराय जन्मधारकाय द्विपदे मनुष्याय चतुष्पदे पशवे सुखं प्रयच्छत ( तत्-अदत् पिबत्-ऊर्जयमानम्-आशितम् ) तत् प्रत्येकं वृन्दं भक्षयत् पिबच्च तथा समन्ताद् भोगं प्राप्नुवत्–बलवद् भवतु ( अस्मे-अरपः-शंयोः-दधातन ) अस्मभ्यं पापरहितं सुखं धारयत ॥ ११ ॥

भाषान्वयार्थ—( देवाः ) हे जीवन्मुक्तो ! या विद्वान् लोगो ! ( अस्माकम्-उभयाय जन्मने ) हमारे से सम्बन्ध रखने वाले दोनों प्रकार के जन्मधारण करने वाले ( द्विपदे चतुष्पदे शर्म यच्छत ) दो पैरों वाले–मनुष्य और चार पैरों वाले–पशुओं के लिए सुख प्रदान करो ( तत् अदत् पिबत्-ऊर्जयमानम्-आशितम् ) वह प्रत्येक गण खाता और पीता हुआ तथा भली-प्रकार से भोग प्राप्त करता हुआ बलवान् हो ( अस्मे-अरपः-शंयोः-दधातन ) हमारे लिए पापरहित सुख को धारण करो–प्रदान करो ॥ ११ ॥

भावार्थ—जीवन्मुक्त, परमात्मा की उपासना करने वाले अपने सत्योपदेश के द्वारा हमें और हमारे पशुओं के लिए हित साधते हैं और निर्दोष सुख को प्राप्त कराते हैं । एवं सूर्य की किरणें और उनके जानने वाले विद्वान् भी हमें और हमारे पशुओं को उत्तम जीवन प्रदान करते हैं ॥ ११ ॥

**यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम् ।**
**अरावा यो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो नि धेतन ॥ १२ ॥**

यत् । वः । देवाः । चकृम । जिह्वया । गुरु । मनसः । वा । प्रऽयुती । देवऽहेळनम् । अरावा । यः । नः । अभि । दुच्छुनऽयते । तस्मिन् । तत् । एनः । वसवः । नि । धेतन ॥ १२ ॥

**संस्कृतान्वयार्थः**—( देवाः ) हे उपासकाः ! विद्वांसो वा ( वः ) युष्मान् प्रति ( यत्-जिह्वया मनसा वा प्रयुती गुरु देवहेळनं चकृम ) यद् वाचा *"जिह्वा वाङ्नाम"* [ *निघ० १ । ११* ] मनसा.यद्वा प्रयुत्या प्रयोगेण कर्मणा वा युष्माकं देवानां यत् बृहत् क्रोधनं पापं कुर्मः, 'तद् यूयं शोधयत' (यः-अरावा नः अभिदुच्छुनायते) यः कश्चित्–अदानशीलोऽपितु हरणशीलः शत्रुरस्मान् दुष्टश्वेवाचरति द्वेष्टि ( तस्मिन् तत्-एनः-वसवः-निधेतन ) तस्मिन् द्वेषिणि तत्पापकर्मफलं हे वासयितारः प्रापयत ॥ १२ ॥

भाषान्वयाथ—( देवाः ) हे उपासको या विद्वानो ! ( वः ) तुम्हारे प्रति ( यत् जिह्वया मनसा वा ) जो वाणी से या मन से ( प्रयुती गुरु देवहेळनं चकृम ) प्रयोग से–आचरण से तुम

विद्वानों के प्रति जो भारी क्रोध या पाप हम करते हैं उसे तुम लोग शोध दो ( यः-अरावा नः-अभिदुच्छुनायते ) जो कोई अदानशील अपितु हरणशील शत्रु हमारे प्रति दुष्ट कुत्ते की भांति आचरण करता है-द्वेष करता है। ( तस्मिन् तत्-एनः-वसव.-निधेतन ) उस द्वेष करने वाले में उस पापकर्म के फल को हे बसाने वाले विद्वानो ! प्राप्त कराओ ॥ १२ ।

भावार्थ—विद्वानों के प्रति कभी भी मन, वाणी और आचरण से पाप नहीं करना चाहिए और न क्रोध। अपितु जो अपने प्रति द्वेष या ईर्ष्या करने वाला शत्रु है उसके ऐसे आचरण को उपदेश द्वारा दूर करने की प्रार्थना करनी चाहिए ॥ १२ ॥



# अष्टात्रिंशं सूक्तम्

ऋषिः—मुष्कवान् इन्द्रः ।

देवता—इन्द्रः ।

छन्दः—१, ५ निचृज्जगती । २ पादनिचृज्जगती । ३, ४ विराड् जगती ।

स्वरः—निषादः ।

विषयः—अस्मिन् सूक्ते इन्द्रशब्देन राजा विशेष्यते, तद्द्वारा संग्रामकरणस्य प्रजारक्षणस्य गुणधर्मसाधनानि वर्ण्यन्ते ।

इस सूक्त में इन्द्र शब्द से राजा और उसके द्वारा संग्राम करने और प्रजारक्षण के गुण धर्म साधनों का वर्णन है ।

अस्मिन्न इन्द्र पृत्सुतौ यशस्वति शिमीवति क्रन्दसि प्राव सातये ।
यत्र गोषाता धृषितेषु खादिषु विष्वक्पतन्ति दिद्यवो नृषाह्ये ॥ १ ॥

अस्मिन् । नः । इन्द्र । पृत्सुतौ । यशस्वति । शिमीऽवति । क्रन्दसि । प्र । अव । सातये । यत्र । गोऽसाता । धृषितेषु । खादिषु । विष्वक् । पतन्ति । दिद्यवः । नृऽसह्ये ॥ १ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे ऐश्वर्यवन् राजन् ! ( अस्मिन् पृत्सुतौ ) अस्मिन् सम्पर्कप्रापके संघर्षे *"पृची धातोः क्विपि वर्णव्यत्ययेन तकारः । सु धातोः संज्ञायां क्तिच् प्रत्ययः" [ दयानन्दः, ऋ० १ । ११० । ७ । ]* ( यशस्वति शिमीवति ) यशस्विनि यशोनिमित्तकं कर्म पुरुषार्थो बहुकरणीयो भवति यस्मिन् तथाभूते संग्रामे ( सातये नः-प्र-अव ) विजयलाभायास्मान् प्रजाजनान् रक्ष ( यत्र गोषाता ) यस्मिन् राष्ट्रभूमिप्राप्तये राष्ट्रभूमिरक्षणनिमित्ते ( नृषाह्ये ) नृभिः षोढव्ये ( धृषितेषु खादिषु ) दृढेषु परस्परं भक्षणकर्त्तृषु-नाशकेषु योद्धृषु ( दिद्यवः पतन्ति ) तीक्ष्णा इषवः *"इषवो वै दिद्यवः" [ श० ५ । ४ । २ । २ । ]* पतन्ति चलन्ति ॥ १ ॥

भाषान्वयार्थ—( इन्द्र ) हे ऐश्वर्यवन् राजन् ! ( अस्मिन् पृत्सुतौ ) इस संघर्ष में ( यशस्वति शिमीवति ) यशवाले तथा बहुत पुरुषार्थ वाले संग्राम में ( सातये नः-प्र-अव ) विजय-लाभ के लिए हमारी रक्षा कर ( यत्र गोषाता ) जिसमें राष्ट्रभूमि की प्राप्ति और रक्षा के निमित्त ( नृषाह्ये ) मनुष्यों द्वारा सहन करने योग्य ( धृषितेषु खादिषु ) कठोर तथा परस्पर भक्षण करने वाले–नाश करने वाले योद्धाओं में ( दिद्यवः पतन्ति ) तीक्ष्ण धारवाले बाण गिरते हैं–चलते हैं ।। १ ।।

भावार्थ—राजा अपने मनुष्यों व प्रजाओं की रक्षा के लिए संग्राम में नाशकारी शत्रु-सैनिकों के ऊपर तीक्ष्ण शस्त्रों का प्रयोग करे ।। १ ।।

स नः क्षुमन्तं सदने व्यूर्णुहि गोअर्णसं रयिमिन्द्र श्रवाय्यम् ।
स्याम ते जयतः शक्र मेदिनो यथा वयमुश्मसि तद्वसो कृधि ।। २ ।।

सः । नः । क्षुऽमन्तम् । सदने । वि । ऊर्णुहि । गोऽअर्णसम् । रयिम् । इन्द्र । श्रवाय्यम् । स्याम । ते । जयतः । शक्र । मेदिनः । यथा । वयम् । उश्मसि । तत् । वसो इति । कृधि ।। २ ।।

संस्कृतान्वयार्थः—( सः ) स त्वम् ( इन्द्र ) राजन्! ( नः ) अस्माकम् ( सदने ) गृहे गृहवद्राष्ट्रे वा ( क्षुमन्तम् ) अन्नवन्तम् *"क्षु-अन्ननाम" [ निघं० २ । २ ]* ( गो-अर्णसम् ) गौर्भूमिरर्णसश्च कृषिकरणाय जलं च प्राचुर्येण यस्मिन् तथाभूतम् *"अर्त्तेः-उदके नुट् च' असुन्" [ उणादि ४ । १९७ ] "गो-अर्णसः-गोः पृथिव्या जलं च" "विभाषा गोरिति प्रकृतिभावः [ ऋ० १ । ११२ । १८ दयानन्दः ]* ( श्रवाय्यं रयिं व्यूर्णु हि ) प्रशंसनीयं पुष्टराज्यरूपं धनम् *"रयिं चक्रवर्तिराज्यसिद्धं धनम्" [ ऋ० १ । ३४ । १२ दयानन्दः ]* विशिष्टमाच्छादय-सुरक्षितं कुरु ( शक्र ) हे शक्त ! सर्वं कर्त्तुं सामर्थ्यवन् ! राजन् ! ( जयतः-ते ) संग्रामे जयं कुर्वतः-तव ( मेदिनः स्याम ) स्नेहिनो वयं भवेम ( वसो यथा वयम्-उश्मसि तत् कृधि ) हे वासयितः ! राजन् ! यथा–यत्खलु वयं वाञ्छामः, तत् तथा त्वमस्माकं कामं सम्पादय ।। २ ।।

भाषान्वयार्थ—( सः ) वह तू ( इन्द्र ) राजन् ! ( नः ) हमारे ( सदने ) घर में या घर समान राष्ट्र में ( क्षुमन्तम् ) अन्नवाले ( गो-अर्णसम् ) भूमि, जल, कृषि करने के लिए पर्याप्त जिसमें हों ऐसे ( श्रवाय्यं रयिं व्युर्णु हि ) प्रशंसनीय पुष्टराज्यरूप धन को सुरक्षित कर ( शक्र ) हे सब कुछ करने में सामर्थ्य वाले राजन् ! ( जयतः-ते ) संग्राम में जय करते हुए तेरे ( मेदिनः स्याम ) हम स्नेही हों ( वसो यथा वयम्-उश्मसि तत् कृधि ) हे बसाने वाले राजन् ! जैसे हम कामना करें वैसे तू हमारी कामना को पूरा कर ।। २ ।।

भावार्थ—राजा को चाहिए कि राष्ट्र में खेती करने के लिए पर्याप्त भूमि और जल का प्रबन्ध रखे । राष्ट्र की समृद्धि के लिए पूर्ण समर्थ रहे । आपात्त युद्ध में विजय करता हुआ अपनी स्नेही प्रजाओं की कामना को पूरा करता रहे ।। २ ।।

यो नो दास आर्यो वा पुरुष्टुतादेव इन्द्र युधये चिकेतति ।
अस्माभिष्टे सुषहाः सन्तु शत्रवस्त्वया वयं तान्वनुयाम संगमे ॥ ३ ॥

यः । नः । दासः । आर्यः । वा । पुरुऽस्तुत । अदेवः । इन्द्र । युधये । चिकेतति । अस्माभिः । ते । सुऽसहाः । सन्तु । शत्रवः । त्वया । वयम् । तान् । वनुयाम । समऽगमे ॥ ३ ॥

संस्कृतान्वयार्थः—( पुरुष्टुत-इन्द्र ) हे बहुप्रशंसनीय राजन् ! ( यः ) यो हि ( दासः ) यज्ञादिकर्मविहीनो यद्वा ( आर्यः-अदेवः ) सदाचरणसम्पन्नः परन्तु न देवो यस्य तथाभूतो नास्तिकः ( नः-युधये चिकेतति ) अस्मान् प्रति युद्धाय युद्धकरणाय सङ्कल्पयति ( अस्माभिः-ते शत्रवः सुसहाः सन्तु ) अस्माभिः सैनिकैः सह ते शत्रवः सुगमतया सोढुं शक्याः पराजेतुं शक्याः सन्तु-सन्ति, तथा ( त्वया वयं सङ्गमे तान् वनुयाम ) त्वया सह च सङ्ग्रामे *"सङ्गमे संग्राम नाम"* [ *निघ० २ । १७* ] तान् शत्रून् वयं हिंस्म-हन्तुं समर्था भवेम *"वनुयाम वनुष्यतः"* [ *ऋ० ८ । ४० । ७* ] *"वनुष्यति हन्तिकर्मा"* [ *निरु० ५ । २* ] ॥ ३ ॥

भाषान्वयार्थ—( पुरुष्टुत-इन्द्र ) हे बहुत प्रशंसनीय राजन् ! ( यः ) जो ( दासः ) यज्ञादि कर्म विहीन ( आर्यः-अदेवः ) सदाचरणसम्पन्न परन्तु नास्तिक ( नः-युधये चिकेतति ) हमारे प्रति युद्ध करने के लिए संकल्प करता है—सोचता है ( अस्माभिः-ते शत्रवः सुसहाः सन्तु ) हम सैनिकों के द्वारा वे शत्रुजन सुगमतया सहन करने योग्य अर्थात् पराजित करने योग्य हों ( त्वया वयं सङ्गमे तान् वनुयाम ) तेरे साथ उन्हें हम संग्राम में हिंसित करने में समर्थ हों ३ ॥

भावार्थ—प्रजा को चाहिए कि अपने राजा का सदा साथ दें। राष्ट्र में जो धर्मकर्मविहीन और सदाचारसम्पन्न परन्तु नास्तिक, विरुद्ध चिन्तन करने वाले जनों को दण्ड देने में समर्थ हों ॥ ३ ॥

यो दभ्रेभिर्हव्यो यश्च भूरिभिर्यो अभीके वरिवोविन्नृषाह्ये ।
तं विखादे सस्निमद्य श्रुतं नरमर्वाञ्चमिन्द्रमवसे करामहे ॥ ४ ॥

यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके । वरिवःऽवित् । नृऽसह्ये । तम् । विऽखादे । सस्निम् । अद्य । श्रुतम् । नरम् । अर्वाञ्चम् । इन्द्रम् । अवसे । करामहे ॥ ४ ॥

संस्कृतान्वयार्थः—( अभीके ) सङ्ग्रामे *"अभीके सङ्ग्रामनाम"* [ *निघ० २ । १७* ] ( यः ) ऐश्वर्यवान् राजा ( दभ्रेभिः ) अल्पैः सैनिक-जनैः ( यः-च भूरिभिः )

अपि च यो बहुभिः सैनिकजनैश्च ( हव्यः ) होतव्यः ( यः-वरिवः-वित् ) सांग्रामिक-साधनवेत्ता ( नृषह्यः ) नॄन् षोढुमभिभवितुमर्हः ( तं सस्निं श्रुतं नरम्-इन्द्रम् ) तं निर्दोषं नैर्बल्यरहितं शौर्ये प्रसिद्धं नेतारं राजानम् ( विखादे ) विविधरूपेण खाद्यन्ते नश्यन्ते जनाः यस्मिन् भयङ्करे संग्रामे ( अद्य ) प्रवर्तमाने काले ( अवसे ) रक्षायै ( अर्वाञ्चं करामहे ) अग्रनायकं सम्पादयामः ॥ ४ ॥

भाषान्वयार्थ—( अभीके ) संग्राम में ( यः ) जो ऐश्वर्यवान् राजा ( दभ्रेभिः ) थोड़े सैनिकों द्वारा ( यः-च भूरिभिः ) और जो बहुत सैनिकजनों से ( हव्यः ) आह्वान करने योग्य-आश्रयणीय है ( यः वरिवः-वित् ) जो संग्राम सम्बन्धी साधनों को जानने वाला ( नृषह्यः ) नरों को स्ववश करने वाला है ( तं सस्निं श्रुतं नरम्-इन्द्रम् ) उस निर्दोष निर्बलतारहित शौर्य में प्रसिद्ध नेता राजा को ( विखादे ) विविध रूप से खाये जाते—नष्ट होते हैं योद्धाजन जिसमें ऐसे संग्राम में ( अद्य ) वर्तमान संग्राम काल में ( अवसे ) रक्षा के लिए ( अर्वाञ्चं करामहे ) अग्रनायक रूप में वरण करें—बनावें ॥ ४ ॥

भावार्थ—प्रजाजनों को ऐसा राजा बनाना चाहिए जो संग्राम के सब साधनों और विजय के प्रकारों को जानता हो। जो बहुत क्या थोड़े से सैनिकों द्वारा भी विजय करने में समर्थ हो ॥ ४ ॥

स्वृवृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम् ।
प्र मुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसते ॥ ५ ॥

स्वऽवृजम् । हि । त्वाम् । अहम् । इन्द्र । शुश्रव । अननुऽदम् । वृषभ । रध्रऽचोदनम् । प्र । मुञ्चस्व । परि । कुत्सात् । इह । आ । गहि । किम् । ऊँ इति । त्वाऽवान् । मुष्कयोः । बद्धः । आसते ॥ ५ ॥

संस्कृतान्वयार्थः—( वृषभ-इन्द्र ) हे शत्रूणामुपरि बलं वर्षयिता राजन् ! ( त्वां स्ववृजम् ) त्वां खलु स्वतो बन्धनछेत्तारम ( अननु-दम् ) कमपि बलदं नापेक्षकं स्वयं पूर्णबलवन्तम् ( रध्रचोदम् ) अपितु स्वाश्रितस्य प्रेरकम ( अहं शुश्रव हि ) अहं शृणोमि हि ( कुत्सात् परि प्रमुञ्चस्व ) निन्दितात् कर्मणः सर्वतः स्वात्मानं प्रमोचय सदा पृथक् रक्ष ( आगहि ) संग्रामे प्राप्तो भव ( त्वावान् ) त्वत्सदृशः ( मुष्कयोः-बद्धः किम्-उ-आसते ) अण्डकोशयोर्विषयभोगप्रसङ्गयोर्बद्धः कथमपि-आसीत् *"लिङर्थे लेट्"* *[ अष्टा० ३ । ४ । ७ ]* नैतत् सम्भवति ॥ ५ ॥

भाषान्वयार्थ—( वृषभ-इन्द्र ) हे शत्रुओं के ऊपर बलों को बरसाने वाले राजन् ! ( त्वां स्ववृजम् ) तुझ स्वयं बन्धनछेत्ता—( अननु-दम् ) किसी भी बल देने वाले की अपेक्षा न रखते हुए, स्वयं पूर्ण बलवाले—( रध्रचोदनम् ) तथा अपने आश्रित के प्रेरक को ( अहं शुश्रव

हि ) मैं सुनता हूँ ( कुत्सात् परि प्रमुञ्चस्व ) निन्दित कर्म से सब ओर से अपने को पृथक् कर ( आगहि ) संग्राम को प्राप्त हो ( त्वावान् ) तेरे जैसा उच्चपद पर विराजा हुआ–प्राप्त हुआ ( मुष्कयोः-बद्धः किम्-उ-आसते ) अण्डकोशों–विषयभोग-प्रसङ्गों में बंधा कैसे रहे ? यह सम्भव नहीं है–यह शोभनीय नहीं है ।। ५ ।।

भावार्थ—राजा सैन्य, शारीरिक, मानसिक और आत्मिक बलों से सम्पन्न हुआ तथा पापकर्म और विषयों से रहित और संयमी होकर समस्त भीतरी और बाहरी संग्रामों पर विजय पाता है ।। ५ ।।



# एकोनचत्वारिंशं सूक्तम्

ऋषिः—काक्षीवती घोषा ।
देवताः—अश्विनौ ।
छन्दः—१,६,७,११,१३ निचृज्जगती । २ ८,९,१२, जगती । १४ निचृत् त्रिष्टुप् ।
स्वर— १-१३ निषादः । १४ धैवतः ।
विषयः—सूक्तेऽत्र 'अश्विनौ' शब्देन अध्यापकोपदेशकौ, ओषधिशल्यचिकित्सकौ, स्त्रीपुरुषौ, आग्नेयसोम्यपदार्थौ गृह्यन्ते । राष्ट्रे शिक्षाप्रचारः, रोगस्य निवारणम्, विवाहनिर्णयः, याननिर्माणञ्चोपदिश्यते ।

यहाँ 'अश्विनौ' शब्द से अध्यापकोपदेशक, ओषधिशल्यचिकित्सक, स्त्रीपुरुष, आग्नेय सोम्य पदार्थ गृहीत हैं । राष्ट्र में शिक्षाप्रचार, रोगनिवारण, कुमार-कुमारियों का विवाह निर्णय, और याननिर्माण का वर्णन है ।

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता ।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥ १ ॥

यः । वाम् । परिऽज्मा । सुऽवृत् । अश्विना । रथः । दोषाम् । उषसः । हव्यः । हविष्मता । शश्वत्ऽतमासः । तम । ऊँ इति । वाम् । इदम । वयम् । पितुः । न । नाम । सुऽहवम । हवामहे ॥ १ ॥

**संस्कृतान्वयार्थः**—( अश्विना ) हे अश्विनौ ! अध्यापकोपदेशकौ ! *"अश्विना-अश्विनौ-अध्यापकोपदेशकौ"* [ *ऋ० ५ । ७८ । ३ दयानन्दः* ] ज्योतिष्प्रधानरसप्रधानावाग्नेय-सोम्यपदार्थौ ! *"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः"* [ *निरु० १२ । १* ] ( वाम् ) युवयोः ( यः ) यः खलु ( परिज्मा सुवृत्-रथः ) सर्वत्र गन्ता ज्मायां पृथिव्यां परिप्रापणशीलः *"ज्मा पृथिवीनाम"* [ *निघ० १ । १* ] सु-सुखं वर्तयिता स्वतः स्वभावतः वरयिताऽऽच्छादकः, रथः-गतिप्रवाहः *"रथो रंहतेर्गतिकर्मणः"* [ *निरु० ९ । ११* ] यानविशेषो वा (दोषाम्-उषसः) रात्रिं दिनं च *"उषाः-दिनम्"* [*ऋ० १ । ६२ । ८ । दयानन्दः*] ( हविष्मता हव्यः ) ग्रहीतव्यानि वस्तूनि विद्यन्ते यस्य पार्श्वे तेन श्रोतृगणेन ग्रहीतव्यः

स्वीकार्योऽस्ति ( वयं शश्वत्तमासः ) वयमतिशयेन पूर्वतः श्रवणाय ज्ञानाय वर्तमानाः ( तम्-उ-वां सुहवम् ) तमेव गतिप्रवाहं यानविशेषं वा युवयोः ( इदं नाम ) एतत् प्रवचनं प्रापणं वा ( पितुः-न ह्वामहे ) पालकस्य राज्ञ इव गृह्णीमः ॥ १ ॥

भाषान्वयार्थ—( अश्विना ) हे अध्यापक और उपदेशको ! या ज्योतिष्प्रधान और रसप्रधान-आग्नेय सोम्य पदार्थ ! ( वाम् ) तुम दोनों का ( यः ) जो ( परिज्मा सुवृत्-रथः ) सर्वत्र जाने वाला पृथिवी पर प्राप्त होने वाला, सुख वर्तने वाला, स्वभाव से आच्छादक गतिप्रवाह या यानविशेष ( दोषाम्-उषसः ) रात्रि और दिन में ( हविष्मता हव्यः ) ग्रहण करने योग्य वस्तुयें जिसमें हैं उस ऐसे श्रोतागण द्वारा ग्रहण करने योग्य है ( वयं शश्वत्तमासः ) हम अत्यन्त पूर्व से श्रवण करने के लिए वर्तमान हैं ( तम्-उ-वां सुहवम् ) तुम्हारे उस ही गतिप्रवाह या यानविशेष को (इदं नाम ) इस प्रवचन या प्राप्त होने को ( पितुः-न ह्वामहे ) पालक राजा के रक्षण को ग्रहण करते हैं ॥ १ ॥

भावार्थ—राजा के द्वारा पृथिवी भर पर-स्थान स्थान पर अध्यापक और उपदेशक नियुक्त करने चाहिएं जिनका ज्ञानप्रवाह सब लोगों को श्रवण करने के लिए मिले और अपना जीवन सुखी बना सकें एवं आग्नेय तथा सोम्य पदार्थों से रथ-यानविशेष निर्माण कराकर प्रजामात्र को यात्रा का अवसर देकर सुखी बनाना चाहिए ॥ १ ॥

चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि ।
यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम् ॥२॥

चोदयतम् । सूनृताः । पिन्वतम् । धियः । उत् । पुरम्ऽधीः । ईरयतम् । तत् । उश्मसि । यशसम् । भागम् । कृणुतम् । नः । अश्विना । सोमम् । न । चारुम् । मघवत्ऽसु । नः । कृतम् ॥ २ ॥

संस्कृतान्वयार्थः—( अश्विना ) हे अध्यापकोपदेशकौ ! युवां विद्युतः शुष्कार्द्रधारे वा ( सूनृताः-चोदयतम् ) स्वाः वाणीः *"सूनृता वाङ्नाम"* [ *निघ० १ । ११* ] उषसं ज्योतिषं वा *"सूनृता उषोनाम"* [ *निघ० १ । ८* ] प्रेरयतम् ( धियः-पिन्वतम् ) बुद्धीः-वर्धयतं कर्माणि वा प्रवर्धयतम् *"धीः कर्मनाम"* [ *निघ० २ । १* ] ( पुरन्धीः-उदीरयतम् ) बहुप्रज्ञानवतीः-बुद्धीः *"याः पुरूणि विज्ञानानि दधाति ताः प्रज्ञाः"* [ *ऋ० ४ । २२ । १० दयानन्दः* ] बहुविधकर्मप्रवृत्तीः-उद्वर्धयतम् ( तत्-उश्मसि ) तदेतत्त्रयं वयं वाञ्छामः ( नः-यशसं भागं कुरुतम् ) अस्माकं यशोरूपं सदाचारमयमधिकारं कार्यं सम्पादयतम् ( मघवत्सु सोमं न चारुं नः-कृतम् ) अस्मासु अध्यात्मयज्ञवत्सु-ऐश्वर्यवत्सु वा सुन्दरं चन्द्रमिव 'पुष्कलमैश्वर्यं कुरुतम् विभक्तिव्यत्ययः' ॥ २ ॥

भाषान्वयार्थ—( अश्विना ) हे अध्यापक-उपदेशको ! या विद्युत् की शुष्क और आर्द्र धाराओ ! ( सूनृताः-चोदयतम् ) अपनी वाणियों को या उषाज्योतियों को प्रेरित करो ( धियः

पिन्वतम् ) बुद्धियों या कर्मों को बढ़ाओ ( पुरन्धीः-उदीरयतम् ) बहुत प्रज्ञानवाली बुद्धियों को खूब बढ़ाओ ( तत्-उश्मसि ) इन तीनों को हम चाहते हैं ( नः-यशसं भागं कुरुतम् ) हमारे यशोरूप सदाचारमय अधिकार का सम्पादन करो ( मघवत्सु सोमं न चारु नः-कृतम् ) अध्यात्म-यज्ञवालों या ऐश्वर्य वालों में सुन्दर चन्द्रमा की भांति पुष्कल ऐश्वर्य प्रदान करो ॥ २ ॥

भावार्थ—अध्यापक और उपदेशक हमारे अन्दर अपने उपदेश से बुद्धियों का विकास करते हैं। श्रेष्ठकर्म में प्रवृत्त करते हैं। हमें अपने मानवीय जीवनभाग सदाचार की प्रेरणा देते हैं और सुन्दर ऐश्वर्य को प्रदान करते हैं। और विद्युत् की दो धारायें हमारे बुद्धिविकास का कारण बनती हैं। विशेष क्रिया द्वारा ऐश्वर्य भी प्राप्त कराती हैं ॥ २ ॥

अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित् ।
अन्धस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित् ॥ ३ ॥

अमाऽजुरः । चित् । भवथः । युवम् । भगः । अनाशोः । चित् । अवितारा । अपमस्य । चित् । अन्धस्य । चित् । नासत्या । कृशस्य । चित् । युवाम् । इत् । आहुः । भिषजा । रुतस्य । चित् ॥ ३ ॥

संस्कृतान्वयार्थः—( नासत्या ) हे असत्यज्ञानाचरणरहितौ सद्वैद्यौ ! *"अश्विनौ सद्वैद्यौ"* [*संस्कारविधिः*] अविनश्वराग्नेयसोम्यौ पदार्थौ *"नासत्याभ्यां नित्याभ्यामग्निजलाभ्याम्"* [ ऋ० १ । २० । ३ *दयानन्दः* ] ( युवम् ) युवाम् ( अमाजुरः-भगं चित् ) गृहे वर्तमानस्य गृहस्थस्य भगस्य भजनीयस्य शरीरस्य 'विभक्तिव्यत्ययः' तथा ( अनाशोः-अपमस्य चित्-अवितारा भवथः ) अभोक्तुर्भोजनकरणेऽशक्तस्य रक्तादिधातुक्षीणस्यापि रक्षितारौ भवथः ( अन्धस्य चित्-कृशस्य चित्-रुतस्य चित्-युवां भिषजा-आहुः ) दृष्टिहीनस्यापि दुर्बलस्यापि रुग्णस्यापि *"रुतस्य रुग्णस्य-अत्र पृषोदरादित्वात्-जलोपः [यजु० १६ । ४९ दयानन्दः]"* युवां वैद्यौ-वैद्यसमौ कथयन्ति विद्वांसः ॥ ३ ॥

भाषान्वयार्थ—( नासत्या ) हे असत्यज्ञान और असत्य आचरण से रहित सद्वैद्यो ! या आग्नेय सोम्य पदार्थो ! ( युवम् ) तुम दोनों ( अमाजुरः-भगं चित् ) गृह में वर्तमान-गृहस्थजन के भजनीय शरीर की तथा ( अनाशोः-अपमस्य चित्-अवितारा भवथः ) भोजन करने में अशक्त और रक्तादिधातुक्षीण मनुष्य के रक्षक हो ( अन्धस्य चित्-कृशस्य चित्-रुतस्य चित् ) दृष्टिहीन के, दुर्बल के और रोगी के भी ( युवां भिषजा-आहुः ) तुम दोनों को विद्वान् लोग वैद्य कहते हैं ॥ ३ ॥

भावार्थ—राष्ट्र के अन्दर ऐसे कुशल ओषधिचिकित्सक और शल्यचिकित्सक वैद्य होने चाहिएँ जो गृहस्थ में वर्तमान दम्पति के शरीर को स्वस्थ रख सकें तथा भोजन करने में असमर्थ, रक्तादि धातुक्षीण निर्बल मनुष्य, नेत्रहीन, कृश और रोगी मनुष्य की रक्षा और चिकित्सा कर सकें। एवं आग्नेय सोम्य पदार्थ सूर्य की दो किरणें या विद्युत् की दो तरंगों द्वारा भी उनकी रक्षा की जा सके ऐसे साधनों का आविष्कार करें ॥ ३ ॥

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या ॥ ४ ॥

युवम् । च्यवानम् । सनयम् । यथा । रथम् । पुनः । युवानम् । चरथाय । तक्षथुः । निः । तौग्र्यम् । ऊहथुः । अत्ऽभ्यः । परि । विश्वा । इत् । ता । वाम् । सवनेषु । प्रऽवाच्या ॥ ४ ॥

**संस्कृतान्वयार्थः**—( युवम् ) युवामश्विनौ-ओषधिशल्यचिकित्सकौ ! आग्नेय-सोम्यपदार्थौ वा ( च्यवानं सनयं रथं यथा ) स्वशरीरतश्च्युतियुक्तं जीर्णशरीरकं कमप्यात्मानं स्वरूपतो लुप्तमिन्द्रं मेघानां च्यावयितारं विद्युद्देवं पुराणं रथं यानविशेषम् *"सनयं पुराणम्"* [ *निरु० ४ । १६* ] यथा (:चरथाय पुनः-युवानं तक्षथुः ) जीवानां चलनाय पुनः कर्मसम्बद्धं कुरुथः *"तक्षति करोतिकर्मा"* [*निरु० ४ । १९*] ( तौग्र्यम्-अद्भ्यःपरि निः-ऊहथुः ) तुग्रस्य बलवतो राज्ञः पुत्रं राजन्यं राजानम् *"बलवतो राज्ञः पुत्रं राजन्यम्"* [ ऋ० १ । ११८ । ६ *दयानन्दः* ] देशान्तरादावावश्यकपदार्थानामादातारं वैश्यवंशजम् *"तुग्र बलापदाननिकेतनेषु"* [ *भ्वादिः* ] जलेभ्यो नदीसमुद्रेभ्यः पृथक्पारमुपरि वा-उत्तारयथः, जलोदरादिरोगादुद्धारयथः ( तां ता विश्वा सवनेषु प्रवाच्या ) युवयोरोषधिशल्यचिकित्सकयोराग्नेयसोम्ययोः पदार्थयोस्तानि विश्वानि कृत्यानि सत्सङ्गस्थानेषु प्रोक्तव्यानि प्रसिद्धीकरणीयानि सन्ति ॥ ४ ॥

**भाषान्वयार्थ**—( युवम् ) तुम दोनों ओषधिचिकित्सक तथा शल्यचिकित्सक वैद्यो ! या आग्नेय सोम्यपदार्थो ! ( च्यवानं सनयं रथं यथा ) अपने शरीर से क्षीणता को प्राप्त हुए—जीर्ण शरीर वाले को या स्वरूप से लुप्त मेघों को गिराने वाले विद्युत् को पुराने रथ के समान ( चरथाय पुनः-युवानं तक्षथुः ) जीवों के चलने के लिए पुनः कर्म से युक्त करो ( तौग्र्यम्-अद्भ्यः-परि नि-ऊहथुः ) बलवान् राजा के पुत्र, देशान्तर में जाने वाले आवश्यक पदार्थों के लाने वाले वैश्य-वंशज को, जलों अर्थात् नदी समुद्रों से पृथक् पार करो—उतारो, तथा जलोदरादि रोगों से मुक्त करो ( तां ता विश्वा सवनेषु प्रवाच्या ) तुम ओषधिचिकित्सक और शल्य-चिकित्सक के या आग्नेय सोम्य पदार्थों के वे सब कृत्य सत्सङ्गस्थानों में प्रसिद्ध करने योग्य हैं ॥ ४ ॥

**भावार्थ**—राष्ट्र के अन्दर ओषधिचिकित्सक और शल्यचिकित्सक वैद्य होने चाहिएं, जो जीर्ण शरीर वाले या विकलित अङ्ग वाले को फिर से युवा जैसा बना सकें । एवं आग्नेय सोम्य पदार्थों द्वारा जलयान आदि यानविशेष चलाकर या बनवाकर यात्रा के लिए सुविधाओं को जुटावें विशेषतया व्यापारियों के उपयोगार्थ ॥ ४ ॥

पुराणा वां वीर्या३ प्र ब्रवा जनेऽथो हासथुर्भिषजा मयोभुवा ।
ता वां नु नव्याववसे करामहेऽयं नासत्या श्रदरिर्यथा दधत् ॥ ५ ॥

पुराणा । वाम् । वीर्या । प्र । ब्रव । जने । अथो इति । ह । आसथुः । भिषजा । मयःऽभुवा । ता । वाम् । नु । नव्यौ । अवसे । करामहे । अयम् । नासत्या । श्रत् । अरिः । यथा । दधत् ॥ ५ ॥

**संस्कृतान्वयार्थः**—( नासत्या भिषजा ) हे नासत्यौ सत्यज्ञानवन्तौ–ओषधि-शल्यचिकित्सकौ तद्वज्ज्योतिष्प्रधानरसप्रधानाग्नेयसोम्यपदार्थौ रोगनिवारकौ ! ( वाम् ) युवयोः ( पुराणा वीर्या जने प्रब्रव ) पुरातनानि कृत्यानि जनसमुदाये प्रब्रवीमि ( अथ-उ ) अथ च ( मयोभुवा-ह-आसथुः ) कल्याणस्य भावयितारौ ह्यवश्यं भवथः ( ता वां नव्यौ नु-अवसे करामहे ) तौ युवां स्वरक्षायै स्तुत्यौ कुर्मः ( अयम्-अरिः-श्रत्-दधत् ) अयं प्रापक उपयोगकर्त्ता जनः श्रद्धां कुर्यात् ॥ ५ ॥

**भाषान्वयार्थ**—( नासत्या भिषजा ) हे सत्यज्ञान वाले ओषधिचिकित्सक और शल्य-चिकित्सक ! तथा आग्नेय सोम्य पदार्थो ! रोगनिवारक ! (वाम् ) तुम दोनों के ( पुराणा वीर्या जने प्रब्रव ) पुरातन कृत्यों को जनसमुदाय में घोषित करते हैं ( अथ-उ ) और ( मयोभुवा ह-आसथुः ) कल्याण के भावित करने वाले अवश्य होओ ( ता वां नव्या नु-अवसे करामहे ) तुम दोनों की रक्षार्थ प्रशंसा करते हैं ( अयम्-अरिः-श्रत्-दधत् ) यह तुम्हें प्राप्त करने वाला उपयोग करने वाला जन तुम्हारे प्रति श्रद्धा करता है ॥ ५ ॥

**भावार्थ**—ओषधिचिकित्सक और शल्यचिकित्सक तथा आग्नेय सोम्य पदार्थ रोगी को अच्छा करने में समर्थ हों । वे इस कार्य में प्रशंसा के योग्य होते हैं ॥ ५ ॥

इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतम् ।
अनापिरज्ञा असजात्यामतिः पुरा तस्या अभिशस्तेरव स्पृतम् ॥ ६ ॥

इयम् । वाम् । अह्वे । शृणुतम् । मे । अश्विना । पुत्रायऽइव । पितरा । मह्यम् । शिक्षतम् । अनापिः । अज्ञाः । असजात्या । अमतिः । पुरा । तस्याः । अभिऽशस्तेः । अव । स्पृतम् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अश्विना ) हे अध्यापकोपदेशकौ ! ( वाम् ) युवाम् ( इयम्-अह्वे ) एषाऽहं शिक्षणोपदेशौ कामयमाना कुमारी खल्वाह्वयामि ( मे शृणुतम् ) मम प्रार्थनां शृणुतं स्वीकुरुतम् ( पुत्राय-इव पितरा मह्यं शिक्षतम् ) सन्तानाय पितरौ मातापितराविव मह्यं प्रार्थनानुरूपं प्रार्थनीयं ज्ञानं वस्तु वा दत्तम् ( अनापिः-अज्ञाः-अमतिः असजात्या ) अहं खल्वस्मि-अनाप्तगृहस्था [ विषयज्ञानरहिता पुनः-अमतिरात्ममयी मतिर्यस्या स्वाभिमानवती सलज्जा *"अमतिरमामतिरात्ममयी"* [ *निरु० ६ । १२* ] ( तस्याः पुरा अभिशस्तेः-अवस्पृतम् ) तस्याः खलु मम-अभिशंसनात् अनिष्टापत्तेर्मृत्योः पूर्वमेव शरणे गृहीतं रक्षतम् ॥ ६ ॥

भाषान्वयार्थ—( अश्विना ) हे अध्यापक और उपदेशक ! ( वाम् ) तुम दोनों को ( इयम्-अह्वे ) यह मैं शिक्षण उपदेश को चाहती हुई कुमारी–ब्रह्मचारिणी आमन्त्रित करती हूं ( मे श्रृणुतम् ) मेरी प्रार्थना को सुनो–स्वीकार करो ( पुत्राय-इव पितरा मह्यं शिक्षतम् ) सन्तान के लिए माता–पिता के समान मेरे लिए प्रार्थनीय ज्ञान को या वस्तु को दो ( अनापिः-अज्ञाः-अमतिः- असजात्या ) मैं गृहस्थ आश्रम को न प्राप्त हुई विषयज्ञानरहित, आत्मवाली–आत्मज्ञान वाली स्वाभिमानिनी, लज्जायुक्त (तस्याः-पुरा-अभिशस्तेः-अवस्पृतम्) उस मेरी मृत्यु से पहले अपनी शरण में मुझे ग्रहण करो–सुरक्षित करो ॥ ६ ॥

भावार्थ—अध्यापक और उपदेशकों से कुमारी कन्यायें भी शिक्षा ग्रहण करें। विशेषतः अमर जीवन बनाने वाली–जीवन्मुक्त होने वाली कन्यायें अध्यात्म ज्ञान का उपदेश लें ॥ ६ ॥

युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम् ।
युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये ॥ ७ ॥

युवम् । रथेन । विऽमदाय । शुन्ध्युवम् । नि । ऊहथुः । पुरुऽमित्रस्य । योषणाम् । युवम् । हवम् । वध्रिऽमत्याः । अगच्छतम् । युवम् । सुऽसुतिम् । चक्रथुः । पुरम्ऽधये ॥ ७ ॥

संस्कृतान्वयार्थः—( युवम् ) हे अश्विनौ ! अध्यापकोपदेशकौ ! युवाम् ( पुरुमित्रस्य विमदाय ) बहूनां मित्रभूतस्य ब्रह्मचारिणो विशिष्टहर्षसम्पादनाय ( शुन्ध्युवं योषणां नि-ऊहथुः ) पवित्रां गृहस्थसम्पर्करहितां कुमारीं ब्रह्मचारिणीं नियुक्तां कुरुतम् ( युवम ) युवाम् ( वध्रिमत्याः हवम्–अगच्छतम् ) संयमनीमत्याः पूर्णसंयतायाः प्रार्थना-वचनमभिप्रायं वा प्राप्नुतम् ( युवं पुरन्धये सुषुतिं चक्रथुः ) युवां पुरं गृहं धारयित्र्यां सुखसन्तानसम्पत्तिं कुरुथः ॥ ७ ॥

भाषान्वयार्थ—( युवम् ) हे अध्यापक–उपदेशको ! ( पुरुमित्रस्य विमदाय ) बहुतों के मित्र ब्रह्मचारी के विशिष्ट हर्ष के सम्पादन के लिए ( शुन्ध्युवं योषणां नि-ऊहथुः ) पवित्र–गृहस्थ-सम्पर्क रहित ब्रह्मचारिणी को नियुक्त करो ( युवम् ) तुम दोनों ( वध्रिमत्याः-हवम्-अगच्छतम् ) संयमनी–संयम में रखने वाली मेखला युक्त–पूर्णसंयत के प्रार्थनावचन को प्राप्त होओ ( युव पुरंधये सुषुतिं चक्रथुः ) तुम दोनों घर को धारण करने वाली सुख सन्तान सम्पत्ति हमारे लिए सम्पादित करो ॥ ७ ॥

भावार्थ—अध्यापक और उपदेशक या अध्यापिका और उपदेशिका अपने शिष्य और शिष्याओं को पूर्ण ब्रह्मचारी और ब्रह्मचारिणी बनाकर दोनों का यथायोग्य विवाह सम्बन्ध नियुक्त –स्थापित करें। उन्हें उत्तम सन्तान सुखसम्पत्ति से युक्त करें ॥ ७ ॥

युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः ।
युवं वन्दनमृश्यदादुदूपथुर्युवं सद्यो विश्पलामेतवे कृथः ॥ ८ ॥

युवम् । विप्रस्य । जरणाम । उपऽईयुषः । पुनरिति । कलेः । अकृणुतम् । युवत् । वयः । युवम् । वन्दनम् । ऋश्यऽदात् । उत् । ऊपथुः । युवम् । सद्यः । विश्पलाम् । एतवे । कृथः ॥ ८ ॥

**संस्कृतान्वयार्थः**—( युवं कलेः-विप्रस्य ) युवां ज्ञानस्य कलयितुः सङ्कल्पयितु-र्विप्रस्य मेधाविनः *"विप्रः–मेधाविनाम"* [ *निघ० ३ । १५* ] (जरणाम्-उपेयुषः ) जरां प्राप्तस्य जीर्णस्य ( पुनः-युवत् वयः-अकृणुतम् ) पुनर्युवत्वत्तज्जीवनं कुरुथः ( युवम् ) युवाम् ( वन्दनम्-ऋश्यदात् ) वन्दयितारमुपासकं जनं पीडाप्रदाद् रोगात् ( उत्-ऊपथुः ) उद्वपथ उद्धरथः ( युवं विश्पलां सद्यः-एतवे कृथः ) प्रजाभ्यः पलायमानां सभां यद्वा प्रजापालिकां युवां सद्यः प्रचरितुं कुरुथः *"विशां पालिकां विद्याम्"* [ *ऋ० १ । ११७ । ११ दयानन्दः* ] ॥ ८ ॥

**भाषान्वयार्थ**—( युवं कलेः-विप्रस्य ) तुम दोनों अध्यापक और उपदेशक ज्ञान के संकलन करने वाले मेधावी ( जरणाम्-उपेयुषः ) जरा अवस्था को प्राप्त हुए जीर्ण मनुष्य का ( पुनः-युवत् -वयः-अकृणुतम् ) पुनः युवावस्था वाला जीवन करो ( युवम् ) तुम दोनों ( वन्दनम्-ऋश्यदात् ) उपासक जन का पीडाप्रद रोग से ( उत्-ऊपथुः ) उद्धार करो (युवं विश्पलां सद्यः-एतवे कृथः) प्रजा से विपरीत हुई सभा या प्रजापालिका को शीघ्र ही उनके योग्य कार्य करने वाली बनाओ ॥ ८ ॥

**भावार्थ**—अध्यापक और उपदेशक ज्ञानोपार्जित करने वाले जराप्राप्त मेधावी को अपने अमृतमय उपदेश से पुनः युवकसदृश बना देते हैं। उपासक जन को तो अनेक मानसिक पीड़ाप्रद रोगों से ऊपर उठा देते हैं। तथा प्रजा से विपरीत हुई प्रजापालिका या राजसभा को भी अनुकूल कर देते हैं ॥ ८ ॥

**युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना ।**
**युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये ॥ ९ ॥**

युवम् । ह । रेभम् । वृषणा । गुहा । हितम् । उत् । ऐरयतम् । ममृऽवांसम् । अश्विना । युवम् । ऋबीसम् । उत । तप्तम् । अत्रये । ओमन्ऽवन्तम् । चक्रथुः । सप्तऽवध्रये ॥ ९ ॥

**संस्कृतान्वयार्थः**—( युवम्-अश्विना ) युवां हि अश्विनौ ! ( वृषणा ) सुखवर्षकौ ! ( ह रेभं गुहा हितं ममृवांसम्-उदैरयतम् ) हृद्गुहायां बुद्धौ वा स्थितं स्तोतारं जीवं ममृवांसं मरणासन्नमुन्नयथः स्वस्थं कुरुथः ( युवम् ) युवाम् ( ऋबीसम्-उत तप्तम् ) अन्धकारपूर्णं देहम् *"ऋबीसमपगतभासम्"* [ *निरु० ६ । ३६* ] अपितु तापकरम् (सप्तवध्रये) *"पञ्चचक्षुरादीनीन्द्रियाणि मनो बुद्धिश्च सप्त हतानि यस्य तस्मै"* [ *यजु० ५ । ७८ दयानन्दः* ]

*"सप्तवध्रिम् हतसप्तेन्द्रियम्"* [ *ऋ० ५ । ७८ । ५ दयानन्दः* ] ( अत्रये ) अत्त्रे-भोक्त्रे-आत्मने ( ओमन्वतं चक्रथुः ) शान्तं रक्षणवन्तं कुरुथः ॥ ६ ॥

भाषान्वयार्थ—( युवम्-अश्विना ) हे अध्यापक उपदेशको ! तुम दोनों ( वृषणा ) सुखवर्षको ! ( ह रेभं गुहा हितं ममृवांसम्-उदैरयतम् ) हृदयगुहा में या बुद्धि में स्थित मरणासन्न स्तोता जीव को स्वस्थ करते हो ( युवम् ) तुम दोनों ( ऋबीसम्-उत तप्तम् ) अन्धकारपूर्ण तापकारी देह को ( सप्तवध्रये ) पांच ज्ञानेन्द्रिय मन और बुद्धि ये सात संयत हो गई जिसकी, ऐसे ( अत्रये ) भोक्ता जीवात्मा के लिए ( ओमन्वन्तं चक्रथुः ) रक्षावाले शान्त पद को बनाते हो ॥ ६ ॥

भावार्थ—अध्यापक और उपदेशक सुख के बरसाने वाले होते हैं। वे हृदय में विराजमान मरणासन्न स्तोता जीव को अमर बना देते हैं। और शरीर के संताप को दूर करते हैं। इन्द्रियों के विषयों से विरक्त हुए को सुरक्षित और अमृत भोग का भागी बना देते हैं ॥ ६ ॥

युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनम् ।
चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् ॥ १० ॥

युवम् । श्वेतम् । पेदवे । अश्विना । अश्वम् । नवभिः । वाजैः । नवती । च । वाजिनम् । चर्कृत्यम् । ददथुः । द्रवयत्ऽसखम् । भगम् । न । नृऽभ्यः । हव्यम् । मयःऽभुवम् ॥ १० ॥

संस्कृतान्वयार्थः—( युवम्-अश्विना ) युवाम्, अश्विनौ ! ( पेदवे ) सुखस्य प्रापयित्रे-आत्मने ( नवभिः-वाजैः-नवती च ) मनोबुद्धिचित्ताहङ्कारसम्बन्धिभिश्चतुर्भिः पञ्चज्ञानेन्द्रियसम्बन्धिभिः, नवती–नवतीभिः "सुपां सुलुक्" [ *अष्टा० ७ । १ । ३९* ] इति विभक्तेर्लुक्, बलरूपाभिः प्रवृत्तिभिर्युक्तं ( श्वेतं वाजिनम् ) शुद्धं बलवन्तं नूतनं भोगवन्तं देहम् ( चर्कृत्यम् ) पुनः पुनः चरणीयं प्रापणस्वभावम् ( द्रावयत्सखम् ) रसरक्तं स्रावयन्त्यो नाड्यः सखिभूता यस्य तथाभूतम् ( ददथुः ) दत्थः–जीवयथः (नृभ्यः-मयोभुवं हव्यं भगम्-न ) नेतृभ्यो जीवनमुक्तेभ्यो मोक्षमिव कल्याणं भावुकमैश्वर्यं दत्थः, "नरो वै देवविशः" [ *जै० १ । ८९* ] ॥ १० ॥

भाषान्वयार्थ—( युवम्-अश्विना ) हे अध्यापक उपदेशको ! तुम दोनों ( पेदवे ) सुख प्राप्त करने वाले आत्मा के लिए ( नवभिः-वाजैः-नवती च ) नौ अर्थात् मन, बुद्धि, चित्त, अहंकार सम्बन्धी और पञ्चज्ञानेन्द्रिय सम्बन्धी, बलों और प्रवृत्तियों से युक्त ( श्वेतं वाजिनम् ) शुद्ध भोगवाले देह को ( चर्कृत्यम् ) पुनः पुनः भोगप्राप्त करने वाले को ( द्रावयत्सखम् ) रस रक्त रिसाती हुई नाड़ियां सखिभूत जिसकी हैं उस ऐसे को ( ददथुः ) जीवन देते हो ( नृभ्यः-मयोभुवं हव्यं भगम्-न ) नेताजनों जीवन्मुक्तों के लिए मोक्ष जैसे कल्याण को भावित करने वाले हो–ऐश्वर्य को देते हो ॥ १० ॥

भावार्थ—अध्यापक और उपदेशक सुख के इच्छुक अधिकारी को उसके अन्तःकरण और ज्ञानेन्द्रियों सम्बन्धी प्रवृत्तियों से युक्त देह को पुनः पुनः सुखभोग का साधन बनाते हैं ।। १० ।।

न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयम् ।
यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ।। ११ ।।

न । तम् । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतम् । नकिः । भयम् । यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । पुरःऽरथम् । कृणुथः । पत्न्या । सह ।। ११ ।।

संस्कृतान्वयार्थः—( राजानौ-अश्विना ) हे सर्वत्र राजमानौ ! अध्यापकोपदेशकौ ! ( अदिते ) अखण्डनीयौ ( सुहवा ) शुभाय कल्याणाय ह्वातव्यौ ( रुद्रवर्तनी ) रुद्रवर्तनिर्ययोः-रुद्रं क्रूरं कष्टं वर्त्तयता निवर्त्तयतो यौ तौ युवाम् ( न ) नहि ( तं कुतः-चन न अंहः-अश्नोति ) तं जनं कुतोऽपि विघ्नो वा पापं वा नैव प्राप्नोति ( नकिः-दुरितं भयम् ) नैव दुःखदं भयं प्राप्नोति ( यं पत्न्या सह ) यं खलु पत्न्या सह ( पुरोरथं कृणुथः ) पुरोगन्तृगृहस्थरथवन्तं कुरुथः ।। ११ ।।

भाषान्वयार्थ—( राजानौ-अश्विना ) हे सर्वत्र राजमान अध्यापक-उपदेशको ! (अदिते) अखण्डनीय ( सुहवा ) शोभन कल्याणार्थं आमन्त्रण करने योग्य ( रुद्रवर्तनी ) क्रूर कष्ट को निवृत्त करने वाले तुम दोनों ( न ) नहीं ( तं कुतः-चन-न-अंहः-अश्नोति ) उसको कहीं से भी पाप प्राप्त नहीं होता है ( नकिः-दुरितं भयम् ) न ही दुःखद भय प्राप्त होता है ( यं पत्न्या सह ) जिसको पत्नी सहित ( पुरोरथं कृणुथः ) बहुत जाने वाले गृहस्थ रथवाला बनाते हो ।। ११ ।।

भावार्थ—उत्तम अध्यापक और उपदेशक अपने ज्ञान में अखण्डित सर्वत्र बुलाने योग्य—आमन्त्रण करने योग्य कष्ट को निवृत्त करने वाले जिसे ज्ञान देते हैं उसे कोई पाप और भय प्राप्त नहीं होता, और पत्नी के साथ ऊंचे गृहस्थ रथ पर आरूढ होता है ।। ११ ।।

आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ।। १२ ।।

आ । तेन । यातम् । मनसः । जवीयसा । रथम् । यम् । वाम् । ऋभवः । चक्रुः । अश्विना । यस्य । योगे । दुहिता । जायते । दिवः । उभे इति । अहनी इति । सुदिने इति सुऽदिने । विवस्वतः ।। १२ ।।

संस्कृतान्वयार्थः—( अश्विना ) हे अश्विनौ ! अग्निसोम्यपदार्थौ तद्धर्मवन्तौ सुशिक्षितौ स्त्रीपुरुषौ वा *"अश्विनौ सुशिक्षितो स्त्रीपुरुषो"* [ *यजु० ३८ । ९ दयानन्दः* ] युवाम् ( ते मनसः-जवीयसा-आयातम् ) तेन मनसोऽपि वेगवता शीघ्रगामिना रथेन गति-

प्रवाहेण यानविशेषेण वा-अत्र पृथिवीमस्माकं गृहं वाऽऽगच्छतम् ( यं रथम्-ऋभवः-वां चक्रुः ) यं रथं गतिप्रवाहं यानविशेषं गृहस्थं वा, वैद्युततरङ्गाः "ऋभवः-उरु भान्ति" [ निरु० ११ । १५ ] शिल्पिनो वैज्ञानिकाः *"येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समाशत"* [ ऋ० ३ । ६० । २ ] *"ऋभू रथस्येवाङ्गानि सन्दधत् परुषा परुः* [ अथर्व० ४ । १२ । ७ ] मेधाविनः *"ऋभुः-मेधाविनाम* [ निघ० ३ । १५ ] कुर्वन्ति-आचरन्ति ( यस्य योगे ) यस्य योजने सति ( दिवः-दुहिता जायते ) द्युलोकस्य प्रकाशवतः-आकाशस्य दुहिता-उषाः, तदिव वा कमनीया नववधूः प्रादुर्भवति-गृहमागच्छति ( विवस्वतः-उभे-अहनी सुदिने ) आदित्यस्य *"विवस्वतः-आदित्यस्य"* [ निरु० १२ । ११ ] विशेषेण वासकर्त्तुः स्थविरस्य गृहस्थस्य वा ( उभे ) द्वे-अहोरात्रौ शोभनजीवनकालसम्पादकौ पुत्रपुत्र्यौ प्राप्येते ॥ १२ ॥

भाषान्वयार्थ—( अश्विना ) हे आग्नेय-सोम्य पदार्थो ! तथा उन जैसे गुणवाले सुशिक्षित स्त्रीपुरुषो ! तुम दोनों ( तेन मनसः-जवीयसा-आयातम् ) मन के तुल्य वेगवाले रथ से-गतिप्रवाह से या यानविशेष से यहाँ पृथिवी पर या हमारे घर में आओ-आते हो (यं रथम्-ऋभवः-वां चक्रुः) जिस रथ गतिप्रवाह या यानविशेष को अथवा गृहस्थ को, वैद्युत अणु तरङ्गें या वैज्ञानिक शिल्पी जन करते हैं ( यस्य योगे ) जिसके जोड़ने पर ( दिवः-दुहिता जायते ) द्युलोक-प्रकाशवाले आकाश की दुहिता सदृश उषा या उस जैसी कमनीय नववधू घर को प्राप्त होती है ( विवस्वतः -उभे-अहनी सुदिने ) सूर्य के या विशेष वास कराने वाले स्थविर गृहस्थ के ( उभे ) दोनों दिनरात या शोभनजीवनकालसम्पादक पुत्र और पुत्री प्राप्त होते हैं ॥ १२ ॥

भावार्थ—सुशिक्षित स्त्री पुरुष बड़े वेगवाले रथ यान से इधर उधर जाकर यात्रा करें। नववधू गृहस्थ में आकर उत्तम पुत्र-पुत्रियाँ उत्पन्न करे। आग्नेय सोम्य पदार्थों के द्वारा शिल्पी वैज्ञानिक लोग यात्रार्थ यानिर्माण करें ॥ १२ ॥

ता वर्तिर्यातं जयुषा वि पर्वतमपिन्वतं शयवे धेनुमश्विना ।
वृकस्य चिद्वर्तिकामन्तरास्याद्युवं शचीभिर्ग्रसितामुमुञ्चतम् ॥ १३ ॥

ता । वर्तिः । यातम् । जयुषा । वि । पर्वतम । अपिन्वतम् । शयवे । धेनुम् । अश्विना । वृकस्य । चित् । वर्तिकाम् । अन्तः । आस्यात् । युवम् । शचीभिः । ग्रसिताम् । अमुञ्चतम् ॥ १३ ॥

संस्कृतान्वयार्थः—( अश्विना ) अश्विनौ-अश्ववन्तौ राष्ट्रवन्तौ राष्ट्रस्य प्रधान-पुरुषौ ! *"अश्वस्य व्याप्तुमर्हस्य राज्यस्य"* [ ऋ० १ । १२१ । २ दयानन्दः ] ( ता जयुषा वर्तिः-पर्वतं वियातम् ) तौ युवाम् वर्तिः-मार्गं पर्ववन्तं *'अत्र 'पर्वमरुद्भ्यां तप्" इति वार्तिकेन तप् प्रत्ययो मत्वर्थे'* [ यजु० ३३ । ५० दयानन्दः ] कठिनं जयशीलेन रथेन गतिप्रवाहेण प्राप्नुतम् ( शयवे धेनुम्-अपिन्वतम् ) शयनशीलाय राज्ञे वाचं प्रचारयतम् *"धेनुः-वाङ्नाम"* [ निघ०

१ । ११ ] (युवम्) युवाम् (वृकस्य चित्-आस्यात्-वर्तिकाम्) लोकवृत्तिछेत्तुः शासकस्य शत्रोर्वा *"यो वृश्चति छिनत्ति तस्य"* [ ऋ० १० । ११७ । १६ दयानन्दः ] मुखात्-प्रमुखबन्धनात् संग्रामे प्रवर्तमानां *'वर्तिकां संग्रामे प्रवर्तमानाम्"* [ ऋ० १ । ११७ । १६ दयानन्दः ] चटकापक्षिणीमिवाल्पसेनां वा *"वर्तिकां चटकापक्षिणीमिव"* [ १ । ११६ । १४ ] (अन्तः--अस्ताम्) अधीनीकृताम् (शचीभिः-अमुञ्चतम्) प्रज्ञायुक्ताभिः क्रियाभिः खलु मोचयतम् ॥ १३ ॥

भाषान्वयार्थ—(अश्विना) हे अश्ववालो–राष्ट्रवालो–राष्ट्र के प्रधान पुरुषो ! (ता जयुषा वर्तिः-पर्वतं वि यातम्) तुम दोनों पर्ववाले कठिन मार्ग को जयशील गतिप्रवाह से प्राप्त करो (शयवे-धेनुम्-अपिन्वतम्) शयनशील राजा के लिए वाणी को प्रचारित करो (युवम्) तुम (वृकस्य चित्-आस्यात्-वर्तिकाम्) छेदनकर्ता शासक या शत्रु के प्रमुख बन्धन से लोकवृत्ति को संग्राम में प्रवर्तमान चटका पक्षिणी की भांति थोड़ी सेना को (अन्तः-अस्ताम्) अधीन की हुई (शचीभिः- अमुञ्चतम्) बुद्धियुक्त क्रियाओं से छुड़ाते हो ॥ १३ ॥

भावार्थ – राष्ट्र के प्रधान पुरुष राजा और मन्त्री को चाहिए कि उनकी प्रजा की वृत्ति या सेना अज्ञानवश शासन बन्धन में आ जाये अथवा शत्रु के बन्धन में आ जाये तो उसे छोड़ने तथा छुड़वाने का प्रयत्न करें ॥ १३ ॥

एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथम् ।
न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १४ ॥

एतम् । वाम् । स्तोमम् । अश्विना । अकर्म । अतक्षाम । भृगवः । न । रथम् । नि । अमृक्षाम । योषणाम् । न । मर्ये । नित्यम् । न । सूनुम् । तनयम् । दधानाः । ॥ १४ ॥

संस्कृतान्वयार्थः—(अश्विना) अश्विनौ–हे अश्ववन्तौ राष्ट्रवन्तौ राष्ट्रस्य प्रधान-पुरुषौ ! *"अश्वस्य व्याप्तुमर्हस्य राज्यस्य"* [ ऋ० १ । १२१ । २ दयानन्दः ] (वाम्) युवाभ्याम् (एतं स्तोमम् अकर्म-अतक्षाम) इमं प्रशंसनीयमादेशमाचरामस्तदनुरूपं स्वात्मानं साधयामः (भृगवः-न रथम्) यथा भृगवो भर्जनवन्तस्तेजस्विनः स्वकीय-रमणस्थानं यानविशेषं वा साधयन्ति तथा (नि-अमृक्षाम मर्ये न योषणाम्) वरनिमित्तं वराय यथा कुमारीं वस्त्रभूषणादिभिः संस्कुर्वन्ति तथा संस्कृतं परिशुद्धं स्तोमं जीवनं प्रसिद्धं कुर्मः (सूनु तनयं नित्यं न दधानाः) पुत्रं पौत्रं नित्यं धारयन्त इव तमपि धारयामः ॥ १४ ॥

भाषान्वयार्थ—(अश्विना) हे अश्ववाले–राष्ट्रवाले–राष्ट्र के प्रधान पुरुषो ! (वाम्) तुम दोनों के लिए (एतं स्तोमम्-अकर्म-अतक्षाम) इस प्रशंसनीय आदेश का हम आचरण करते हैं तथा उसके अनुसार अपने को साधते हैं (भृगवः-न रथम्) जैसे भर्जनशील–ज्ञान से दीप्तिमान्

तेजस्वीजन अपने रमणस्थान यान को साधते हैं ( नि-अमृक्षाम मर्ये न योषणाम् ) वर के निमित्त –वर के लिए जैसे वधू को वस्त्र भूषण आदि से संस्कृत करते हैं ऐसे ही संस्कृत अर्थात् परिशुद्ध जीवन को हम प्रसिद्ध करते हैं ( सूनुं तनय नित्यं न दधानाः ) जैसे पुत्र पौत्र को नित्य धारण करते हुए हम यत्न करते हैं एवं जीवन को साधते हैं ।। १४ ।।

भावार्थ—अश्ववाले–राष्ट्रवाले राष्ट्रशासक प्रधान पुरुष राजा व मन्त्री के लिए प्रशंसनीय उपहार देना और उनके आदेश का पालन करना चाहिए। तेजस्वी विद्वान् विमान आदि यान बनावें और वस्त्र–भूषण आदि से सुभूषित करके कन्याओं के विवाह की व्यवस्था करें। उत्तम पुत्र पौत्र गृहस्थ में प्राप्त करें ।। १४ ।।



# चत्वारिंशं सूक्तम्

ऋषिः—काक्षीवती घोषा ।

देवता—अश्विनौ ।

छन्दः—१, ५, १२, १४ विराड् जगती । २, ३, ७, १०, १३ जगती । ४, ९, ११ निचृज्जगती । ६, ८ पादनिचृज्जगती ।

स्वरः—निषादः ।

विषयः—अत्र सूक्ते 'अश्विनौ' शब्देन वृद्धस्त्रीपुरुषौ गृह्येते । राज्यसभया सह सम्पर्कं स्थापयित्वा राष्ट्रे सद्व्यवहार-प्रचारणं नवगृहस्थेषु यथार्थगार्हस्थ्यधर्मशिक्षणञ्च मुख्यो विषयः ।

इस सूक्त में 'अश्विनौ' शब्द से वृद्धस्त्रीपुरुष गृहीत हैं । उनका राज्यसभा से सम्पर्क करके राष्ट्र में सद्व्यवहार का प्रचार करना तथा नवगृहस्थों में यथार्थ गृहस्थ धर्म का शिक्षण करना मुख्य विषय है ।

रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुविताय भूषति ।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि ॥ १ ॥

रथम् । यान्तम् । कुह । कः । ह । वाम् । नरा । प्रति । द्युऽमन्तम् । सुविताय । भूषति । प्रातःऽयावानम् । विऽभ्वम् । विशेऽविशे । वस्तोःऽवस्तोः । वहमानम् । धिया । शमि ॥ १ ॥

संस्कृतान्वयार्थः—( नरा ) हे गृहस्थानां नेतारावश्विनौ सुशिक्षितौ स्थविरौ गृहस्थाश्रमिणौ स्त्रीपुरुषौ ! ( वाम् ) युवयोः ( द्युमन्तं यान्तं रथम् ) दीप्तिमन्तं भूषितं गच्छन्तं रथम् ( कुह ) कुत्र देशे ( प्रातर्यावाणं विभ्वं वहमानम् ) गृहस्थस्य प्रथमावसरे प्रापणशीलं विभूतिमन्तं रथम् ( विशे विशे वस्तोः-वस्तोः ) मनुष्यमात्रस्य निमित्तं प्रतिदिनम् ( धिया शमि ) बुद्ध्या कर्मवन्तम् ( कः-ह ) कः खलु ( सुविताय प्रति भूषति ) सुखविशेषाय प्रशंसति कश्चिद् विरल एव ॥ १ ॥

भाषान्वयार्थ—( नरा ) हे गृहस्थों में नेता सुशिक्षित स्त्री पुरुषो ! ( वाम् ) तुम दोनों ( द्युमन्तं यान्तं रथम् ) दीप्तिमान् और सुभूषित जाते हुए रथ को ( कुह ) किस देश में ( प्रातर्यावाणं विभ्वं वहमानम् ) गृहस्थ के प्रथम अवसर पर प्राप्त होने वाले प्रापणशील विभूतिमान् रथ को ( विशे विशे वस्तोः-वस्तोः ) मनुष्यमात्र के निमित्त प्रतिदिन ( धिया शमि ) बुद्धि से क्रिया वाले ( कः-ह ) कौन-कोई ही प्रजाजन ( सुविताय प्रतिभूषति ) सुखविशेष के लिए प्रशंसित करता है अर्थात् सब कोई प्रशंसा करता है ॥ १ ॥

भावार्थ—सुशिक्षित स्त्रीपुरुष विशेष सुख के लिए अपने गृहस्थ रथ को, जो प्रथम अवस्था में प्राप्त होता है; उसे प्रजामात्र के लिए उत्तमरूप से चलाकर दूसरों के लिए आदर्श प्रस्तुत करना चाहिए ॥ १ ॥

**कुह॑ स्विद्दो॒षा कुह॒ वस्तो॑र॒श्विना॒ कुहा॑भिपि॒त्वं कर॑तः॒ कुहो॑षतुः ।**
**को वां॑ शयु॒त्रा वि॒धवे॑व दे॒वरं॒ मर्यं॒ न योषा॑ कृणुते॒ स॒धस्थ॒ आ ॥ २ ॥**

कुह॑ । स्वि॒त् । दो॒षा । कुह॑ । वस्तोः॑ । अ॒श्विना॑ । कुह॑ । आ॒भि॒ऽपि॒त्वम् । कर॑तः॒ । कुह॑ । ऊ॒ष॒तुः॒ । कः । वा॒म् । श॒यु॒ऽत्रा । वि॒धवा॑ऽइव । दे॒वर॑म् । मर्य॑म् । न । योषा॑ । कृ॒णु॒ते॒ । स॒धऽस्थे॑ । आ ॥ २ ॥

संस्कृतान्वयार्थः—( अश्विना ) हे विवाहितौ स्त्रीपुरुषौ ! युवाम् ( कुह दोषा ) कस्मिन् स्थाने रात्रौ ( कुह वस्तोः ) कस्मिन् स्थाने दिने ( कुह-अभिपित्वं करतः ) कुत्राभिप्राप्तिं भोजनादिकस्य कुरुथः "पुरुषव्यत्ययश्छान्दसः" ( कुह-ऊषतुः ) कुह वासं कुरुथः ( वां शयुत्रा कः ) युवयोः शयनाश्रमः कः ( विधवा-इव देवरम् ) यथा देवरं द्वितीयवरं नियोगेन प्राप्तं विधवा कृणुते ( मर्यं न योषा सधस्थे कृणुते ) यथा वरं प्रति वधूः सहस्थानं करोति तथा गृहस्थस्त्रीपुरुषौ युवां वर्तयथ सहस्थानं च कुरुथः ॥ २ ॥

भाषान्वयार्थ—( अश्विना ) हे विवाहित स्त्रीपुरुषो ! तुम दोनों ( कुह दोषा ) किस स्थान में रात्रि को ( कुह वस्तोः ) और कहाँ दिन में ( कुह-अभिपित्वं करतः ) कहाँ भोजनादि की अभिप्राप्ति करते हो ( कुह-ऊषतुः ) कहाँ वास करते हो ( वां शयुत्रा कः ) तुम दोनों का शयनाश्रम कौनसा है ( विधवा-इव देवरम् ) जैसे विधवा और देवर का नियोग हो जाने पर व्यवहार होता है ( मर्यं न योषा सधस्थं कृणुते ) जैसे वर के प्रति वधू सहस्थान बनाती है, ऐसे विवाहित स्त्री पुरुषो ! तुम्हारा व्यवहार हो ॥ २ ॥

भावार्थ—गृहस्थ स्त्रीपुरुषों को सदा प्रेम के साथ रहना चाहिए । जैसे विवाहकाल में वरवधू स्नेह करते थे, वह स्नेह बना रहे । कदाचित् मृत्यु आदि कारणवश दोनों का वियोग हो जाये तो सन्तान की इच्छा होने पर नियोग से सन्तानलाभ कर सकते हैं ॥ २ ॥

**प्रा॒तर्ज॑रेथे जर॒णेव॒ काप॑या॒ वस्तो॑र्वस्तोर्यज॒ता ग॑च्छथो गृ॒हम् ।**
**कस्य॑ ध्व॒स्रा भ॑वथः॒ कस्य॑ वा नरा राजपु॒त्रेव॒ सव॒नाव॑ गच्छथः ॥ ३ ॥**

प्रातः । जरेथे इति । जरणाऽइव । कापया । वस्तोःऽवस्तोः । यजता । गच्छथः । गृहम् । कस्य । ध्वस्रा । भवथः । कस्य । वा । नरा । राजपुत्राऽइव । सवना । अव । गच्छथः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( नरा ) हे गृहस्थानां नेतारौ स्थविरपुरुषौ युवाम् ( प्रातः-जरेथे ) गृहस्थाश्रमस्य प्रथमावसरे स्तुतिं प्रशंसां प्राप्नुथः ( जरणा-इव कापया ) युवां जरया-इव कम्पमानौ 'बाहुलकात् न लोपपूर्वकात् कपि धातोः स्वार्थिकणिजन्तात् कर्त्तरि-'अण्' प्रत्यय औणादिकः' ( यजता वस्तोः-वस्तोः-गृहं गच्छथः ) यजनीयौ प्रतिदिनं नवविवाहितस्य गृहं गच्छथः ( कस्य ध्वस्रा भवथः ) कस्यापि दोषस्य ध्वंसकौ नाशकौ भवथः ( राजपुत्रा-इव कस्य सवना-अवगच्छथः ) राजकुमाराविव कस्यापि नवगृहस्थस्य सन्तानप्रसवोत्सवान् प्राप्नुथः ॥ ३ ॥

**भाषान्वयार्थ**—( नरा ) हे गृहस्थों के नेता वृद्ध स्त्री पुरुषो ! ( प्रातः-जरेथे ) गृहस्थाश्रम के प्रथमावसर पर स्तुति प्रशंसा को प्राप्त करते हो ( जरणा-इव कापया ) तुम जरा से काँपते हुए जैसे ( यजता वस्तोः-वस्तोः-गृहं गच्छथः ) यजनीय—सत्करणीय प्रतिदिन नवविवाहित के घर पर जाते हो ( कस्य ध्वस्रा भवथः ) किसी के भी दोष के ध्वंसक—नाशक होते हो ( राजपुत्रा-इव कस्य सवना-अवगच्छथः ) राजकुमारों की भांति किसी के भी नवगृहस्थ के उत्सवों में पहुँचते हो ॥ ३ ॥

**भावार्थ**—स्थविर गृहस्थ स्त्री पुरुष प्रशंसा के योग्य होते हैं । वे प्रतिदिन सम्मानित हुए, गृहस्थ के घर में राजकुमारों की भांति सम्मान पाये हुए, उनके दोषों को दूर करने के लिए भिन्न-भिन्न उत्सवों में सम्मिलित हों ॥ ३ ॥

**युवं मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे ।**
**युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥ ४ ॥**

युवाम् । मृगाऽइव । वारणा । मृगण्यवः । दोषा । वस्तोः । हविषा । नि । ह्वयामहे । युवम् । होत्राम् । ऋतुऽथा । जुह्वते । नरा । इषम् । जनाय । वहथः । शुभः । पती इति ॥ ४ ॥

**संस्कृतान्वयार्थः**—( युवाम् ) हे अश्विनौ स्थविरौ स्त्रीपुरुषौ ( मृगा-इव वारणा ) गृहस्थेषु गन्तारौ दुःखनिवारकौ—एव, *"इवोऽपि दृश्यते पादपूरणः"* [ *निरु० १ । ११* ] ( मृगण्यवः ) युवामन्वेषका वयं नवगृहस्थाः *'मृग अन्वेषणे"* [ *चुरादिः* ] ( दोषा वस्तोः ) नक्तं दिवा ( हविषा निह्वयामहे ) उत्तमग्रहणयोग्येन वस्तुना निमन्त्रयामहे-सत्कुर्मः ( युवम् ) युवाम् ( नरा ) नेतारौ ( शुभस्पती ) कल्याण-स्वामिनौ-कल्याणप्रदौ ( जनाय ) जनमात्राय ( इषं वहथः ) इष्टं सुखमन्नादिकं वा प्रापयथः ( होत्राम्-ऋतुथा जुह्वते ) सर्वे गृहस्था युवाभ्यां समये समये प्रशंसां ददति प्रशंसां कुर्वन्ति ॥ ४ ॥

—भाषान्वयार्थ—( युवाम् ) हे स्थविर-वृद्ध स्त्री पुरुषो ! तुम ( मृगा-इव वारणा ) गृहस्थ में जाने वाले उनके दुःखों के निवारक ( मृगण्यवः ) तुम दोनों की खोज करने वाले हम नवगृहस्थ ( दोषा वस्तोः ) दिन-रात ( हविषा निह्वयामहे ) उत्तम ग्रहण करने योग्य वस्तु के द्वारा तुम्हारा सत्कार करते हैं ( युवां नरा ) तुम नेता ( शुभस्पती ) कल्याणस्वामी—कल्याणप्रद ( जनाय ) जनमात्र के लिए ( इषं वहथः ) इष्ट सुख अन्न आदि को प्राप्त कराते हो ( होत्राम्-ऋतुथा जुह्वते ) सारे गृहस्थ तुम दोनों के लिए समय-समय पर सत्कार, उपहार देते हैं ॥ ४ ॥

भावार्थ—वृद्ध गृहस्थ जन नवगृहस्थों के घरों में पहुँचें। उन्हें गृहस्थ संचालन के अपने अनुभवों से अवगत करायें। नवगृहस्थ भी वृद्ध स्त्री पुरुषों को समय-समय पर आमन्त्रित करें, उनका उपहार एवं सत्कार से स्वागत करें ॥ ४ ॥

युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा ।
भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥ ५ ॥

युवाम् । ह । घोषा । परि । अश्विना । यती । राज्ञः । ऊचे । दुहिता । पृच्छे । वाम । नरा । भूतम् । मे । अह्ने । उत । भूतम् । अक्तवे । अश्वऽवते । रथिने । शक्तम् । अर्वते ॥ ५ ॥

संस्कृतान्वयार्थः—( नरा-अश्विना युवाम् ) नेतारौ-गृहस्थानां नेतारौ स्त्रीपुरुषौ ! युवाम् ( ह ) खलु ( राज्ञः-दुहिता घोषा परियती-ऊचे वां पृच्छे ) शासकस्य घोषयित्री परिचरन्ती सभा वक्ति तथा युवां पृच्छति प्रार्थयते च अत्रोभयत्र पुरुषव्यत्ययः, उत्तम-पुरुषो लिटि ( मे-अह्ने-उत-अक्तवे भूतम् ) मह्यं दिनायापि रात्र्यै च राज्यकार्यं कर्त्तुं खलूद्यतौ भवथः ( अश्वावते रथिने-अर्वते शक्तं भूतम् ) अश्वयुक्ताय रथाय तथा रथ-युक्तायाश्वाय च युवां समर्थौ भवथः ॥ ५ ॥

भाषान्वयार्थ—( नरा-अश्विना युवाम् ) हे गृहस्थों के नेता स्त्री पुरुषो ! तुम दोनों ( ह ) अवश्य ( राज्ञः-दुहिता घोषा परियती ) शासक की घोषणा करने वाली, सब ओर विचरती हुई ( ऊचे वां पृच्छे ) सभा कहती है तथा तुम्हें पूछती है—प्रार्थना करती है कि ( मे-अह्ने-उत-अक्तवे भूतम् ) मेरे लिए दिन में तथा रात्रि में राज्यकार्य करने को उद्यत होओ—होते हो ( अश्वावते रथिने-अर्वते शक्तं भूतम् ) अश्वयुक्त रथ के लिए और रथयुक्त घोड़े के लिए तुम दोनों समर्थ होओ—होते हो, उनके साधने और चलाने में ॥ ५ ॥

भावार्थ—राज्य के वृद्ध तथा माननीय स्त्री पुरुषों का सम्पर्क राज्यसभा से होना चाहिये। वह राज्य की घोषणा राज्य के वृद्ध—मान्य स्त्री पुरुषों में सद्भाव से करती रहे और उसे शिरोधार्य करके यातायात के लिए रथों और घोड़ों की समृद्धि करते रहें ॥ ५ ॥

युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ॥ ६ ॥

युवम् । कवी इति । स्थः । परि । अश्विना । रथम । विशः । न । कुत्सः । जरितुः । नशायथः । युवोः । ह । मक्षा । परि । अश्विना । मधु । आसा । भरत । निःऽकृतम् । न । योषणा ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अश्विना युवम् ) हे शिक्षितौ स्थविरौ स्त्रीपुरुषौ ! युवाम् ( कवी स्थः ) क्रान्तदर्शिनौ ज्ञानिनौ स्थः ( विशः-न रथम् ) प्रजाः-यथा रमणीयं सुखप्रदं राजानं धारयन्ति ( कुत्सः-जरितुः-नशायथः ) यः स्तुतिकर्त्ता *"कुत्सः कर्त्ता स्तोमानाम्"* [ *निरु० ३ । १२* ] तस्य स्तुतिकर्त्तुरभिप्रायं प्राप्नुथः *"नशत्-व्याप्तिकर्मा"* [ *निघ० २ । १८* ] ( युवोः-ह मक्षा ) युवां मधुमक्षिका यथा 'विभक्तिव्यत्ययेन प्रथमास्थाने षष्ठी' ( आसा ) आस्येन मुखेन ( मधु परि भरत ) मधु परितो गृह्णाति तद्वत् ( योषणा न निष्कृतम् ) अथवा गृहिणी सुसंस्कृतं गृहं परितो रक्षति तथा भवतम् ॥ ६ ॥

भाषान्वयार्थ—( अश्विना युवम् ) हे शिक्षित स्त्रीपुरुषो ! तुम ( कवी स्थः ) ज्ञानी हो ( विशः-न रथम् ) प्रजायें जिस प्रकार रमणीक सुखप्रद राजा को धारण करती हैं—उसकी आज्ञा में चलती हैं ( कुत्सः-जरितुः-नशायथः ) जो स्तुतिकर्त्ता है उस स्तुतिकर्त्ता के अभिप्राय या अभीष्ट को तुम पूरा करते हो ( युवोः-ह मक्षा ) तुम दोनों मधुमक्षिका जैसे ( आसा ) मुख से ( मधु परि भरत ) मधु को चारों ओर से लेती है वैसे ही ( योषणा न निष्कृतम् ) अथवा गृहिणी जैसे घर को सब ओर से सुसज्जित रखती है वैसे तुम भी रखो ॥ ६ ॥

भावार्थ—स्त्री पुरुष शिक्षित होकर सुखद राजा के शासन में रहते हुए और परमात्मा की स्तुति करते हुए गृहस्थ जीवन का सुख संचित करें। सद्गृहिणी रहने के स्थान को सुसंस्कृत रखे ॥ ६ ॥

युवं ह भुज्युं युवमश्विना वशं युवं शिञ्जारमुशनामुपारथुः ।
युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ ७ ॥

युवम् । ह । भुज्युम् । युवम् । अश्विना । वशम् । युवम् । शिञ्जारम् । उशनाम् । उप । आरथुः । युवोः । ररावा । परि । सख्यम् । आसते । युवोः । अहम् । अवसा । सुम्नम् । आ । चके ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अश्विना युवम् ) हे शिक्षित स्त्रीपुरुषौ ! युवाम् ( ह ) अवश्यम् ( भुज्युम् ) भोगप्रदं पालकं राजानम् ( युवं वशम् ) युवां वशे वर्तमानं भृत्यं पालनीयं शूद्रम् ( युवं शिञ्जारम् ) युवां शान्तवक्तारं ब्राह्मणम् *"शिञ्जे शब्दं करोति"* [ *निरु० ९ । १८* ] ( उशनाम् ) धनधान्यं कामयमानं वैश्यम् *"उशना कामयमाना"* [ *ऋ० १ । १५१ । १० दयानन्दः* ] ( उपारथुः ) उपगच्छथः-प्राप्नुथः ( ररावा युवयोः सख्यं परि-आसते ) दानकर्त्ता युवयोः पितृत्वमाश्रयति ( अहं युवयोः-अवसा सुम्नम्-आ चके ) अहं गृहस्थो युवयोः रक्षणकारकेण प्रवचनेन सुखं वाञ्छामि ॥ ७ ॥

भाषान्वयार्थ—( अश्विना युवम् ) हे शिक्षित स्त्रीपुरुषो ! तुम ( ह भुज्युम् ) अवश्य भोगप्रद पालक राजा को (युवं वशम्) तुम दोनों निजवश में वर्तमान नौकर को (युवं शिञ्जारम्) तुम दोनों शान्तवक्ता ब्राह्मण को ( उशनाम् ) धनधान्य की कामना करने वाले वैश्य को (उपारथुः) प्राप्त करते हो ( ररावा युवयोः सख्यं परि-आसते ) दान करने वाला तुम दोनों की मित्रता को प्राप्त होता है या आश्रय करता है ( अहं युवयोः-अवसा सुम्नम्-आचके ) मैं गृहस्थ तुम दोनों के रक्षण करने वाले प्रवचन से सुख को चाहता हूँ ॥ ७ ॥

भावार्थ—शिक्षित स्त्रीपुरुषों को यथासाधन चारों वर्णों को सहयोग देना और उनके सहयोग से सुख की कामना करनी चाहिए ॥ ७ ॥

युवं ह कृशं युवमश्विना शयुं युवं विधन्तं विधवामुरुष्यथः ।
युवं सनिभ्यः स्तनयन्तमश्विनाप व्रजमूर्णुथः सप्तास्यम् ॥ ८ ॥

युवम् । ह । कृशम् । युवम् । अश्विना । शयुम् । युवम् । विधन्तम् । विधवाम् । उरुष्यथः । युवम् । सनिभ्यः । स्तनयन्तम् । अश्विना । अप । व्रजम् । ऊर्णुथः । सप्तऽआस्यम् ॥ ८ ॥

संस्कृतान्वयार्थः—( अश्विना ) हे शिक्षितौ स्त्रीपुरुषौ ! ( युवम् ) युवाम् ( ह ) खलु ( कृशम् ) क्षीणम् ( शयुम ) असावधानम् ( युवम् ) युवाम् ( विधन्तम् ) श्रान्तम्-सहयोगिनीविहीनम् ( विधवाम् ) पतिविहीनाम् ( उरुष्यथः ) रक्षथः "उरुष्यती रक्षाकर्मा" *[ निरु० ५ । २३ ]* ( युवम् ) युवाम् ( सनिभ्यः स्तनयन्तं सप्तास्यं व्रजम्-अप-ऊर्णुथः ) ज्ञानसम्भक्तृभ्यः श्रोतृभ्यः सप्तास्यं सप्तछन्दांसि मन्त्राः- आस्ये मुखे यस्य तं शब्दायमानमुपदेष्टारं व्रजनशीलमतिथि नावरोधयथः, गमनाय समर्थयथः ॥ ८ ॥

भाषान्वायार्थ —( अश्विना ) हे शिक्षित स्त्री पुरुषो ! ( युवम् ) तुम दोनों ( ह ) अवश्य ( कृशम् ) क्षीण को ( शयुम् ) असावधान को ( युवम् ) तुम ( विधन्तम् ) विधुर—पत्नी-रहित को ( विधवाम् ) पतिहीन स्त्री को ( उरुष्यथः ) रक्षित करते हो ( युवम् ) तुम दोनों ( सनिभ्यः ) ज्ञान का सेवन करने वाले श्रोताओं के लिए ( सप्तास्यं स्तनयन्तम् ) सप्तछन्दों—मन्त्रों से युक्त मुख वाले उपदेष्टा—( व्रजम् ) व्रजनशील अतिथि को ( अप-ऊर्णुथः ) न रोको—जाने दो ॥ ८ ॥

भावार्थ— सुशिक्षित स्त्रीपुरुषों को चाहिए कि वे क्षीण, असावधान, विधुर और विधवाओं की रक्षा करें तथा वेदवक्ता अतिथियों के लिए यत्र तत्र जाने की सुविधा दें ॥ ८ ।

जनिष्ट योषा पतयत्कनीनको वि चारुहन्वीरुधो दंसना अनु ।
आस्मै रीयन्ते निवनेव सिन्धवोऽस्मा अह्ने भवति तत्पतित्वनम् ॥ ९ ॥

जनिष्ट । योषा । पतयत् । कनीनकः । वि । च । अरुहन् । वीरुधः । दंसनाः । अनु । आ । अस्मै । रीयन्ते । निवनाऽइव । सिन्धवः । अस्मै । अह्ने । भवति । तत् । पतिऽत्वनम् ॥ ९ ॥

**संस्कृतान्वयार्थः**—( योषा जनिष्ट ) यदा समागमयोग्या ब्रह्मचारिणी जायते, तदा ( कनीनकः-पतयत् ) कन्याकामो वरोऽपि कन्यां प्राप्नोति तत्स्वामित्वं करोति वा ( च ) तथा ( वीरुधः-अरुहन् ) यथा-ओषधयो विरोहन्ति वर्धन्ते तथा ( दंसनाः-अनु ) कर्माणि-अनुसृत्य "दंसनाः कर्माणि" [ ऋ० ५ । ८७ । ८ ] ( अस्मै ) अस्मै वराय ( सिन्धवः-निवना-इव रीयन्ते ) सुखसम्पत्तयः सिन्धवो नद्यो यथा निम्नं स्थानं प्रति प्राप्नुवन्ति ( अस्मै-अह्वे तत् पतित्वनं भवति ) अस्मै-अहन्तव्याय तद् गार्हस्थ्यं पतित्वं भवति ॥ ९ ॥

**भाषान्वयार्थ**—( योषा जनिष्ट ) जब समागमयोग्य ब्रह्मचारिणी हो जाती है, तव ( कनीनकः-पतयत् ) कन्या की कामना करने वाला वर भी प्राप्त हो जाता है उसका स्वामित्व करता है ( च ) तथा ( वीरुधः- अरुहन् ) जैसे औषधियां उगती और वढ़ती हैं वैसे ( दंसनाः-अनु ) कर्मों के अनुसार ( अस्मै ) इस वर के लिए ( सिन्धवः-निवना-इव रीयन्ते ) सुख सम्पत्तियां ऐसे प्राप्त होती हैं जैसे नदियां निम्न स्थान को प्राप्त होती हैं ( अस्मै-अह्वे तत् पतित्वनं भवति ) इस अहन्तव्य वर के लिए गृहस्थ सम्बन्धी स्वामित्व प्राप्त हो जाता है ॥ ९ ॥

**भावार्थ**— कन्या और कुमार ब्रह्मचर्य के पालन से जव एक दूसरे की कामना करने और समागम के योग्य हों तो उनका विवाह होना चाहिए, बिना कामना और योग्यता के नहीं। तभी पवित्र आचरण आदि द्वारा गृहस्थ में सुख सम्पत्तियां, नदियां जैसे निम्न स्थान में प्राप्त होती हैं वैसे प्राप्त होती हैं ॥ ९ ॥

**जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः ।**
**वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥ १० ॥**

जीवम् । रुदन्ति । वि । मयन्ते । अध्वरे । दीर्घाम् । अनु । प्रऽसितिम् । दीधियुः । नरः । वामम् । पितृभ्यः । ये । इदम् । सम्ऽएरिरे । मयः । पतिऽभ्यः । जनयः । परिऽस्वजे ॥ १० ॥

**संस्कृतान्वयार्थः**—( जीवं रुदन्ति ) पुत्रं तत्प्राप्त्यर्थं गृहस्था रुदन्ति-आर्द्रभावेन ब्रुवन्ति ( अध्वरे विमयन्ते ) विवाहप्रकरणके विवाहयज्ञे विशिष्टं प्रतिज्ञारूपं शब्दं कुर्वन्ति ( दीर्घां प्रसितिम्-अनु नरः-दीधियुः ) दीर्घकालिकां स्नेहबन्धनीमनुसृत्य नरा मनुष्याः प्रकाशयन्ति प्रकटयन्ति व्यवहरन्ति ( पितृभ्यः-वामम् ) स्वपितृभ्यो वननीयम् ( ये-इदं मयः समेरिरे ) ये खल्विदं सुखं सम्पादयन्ति, अतः ( जनयः पतिभ्यः परिष्वजे ) जायाः स्वपतिभ्यः परिष्वङ्गं कुर्वन्ति ॥ १० ॥

**भाषान्वयार्थ**—( जीवं रुदन्ति ) पुत्र की प्राप्ति के लिए गृहस्थजन आर्द्रभाव से प्रार्थना करते हैं ( अध्वरे विमयन्ते ) विवाहयज्ञ में परस्पर विशिष्ट प्रतिज्ञारूप वचन वोलते हैं ( दीर्घां प्रसितिम्-अनु नरः-दीधियुः ) दीर्घकाल वाली स्नेहबन्धनी को मनुष्य प्रकाशित करते हैं—प्रदर्शित करते हैं-व्यवहार में लाते हैं ( पितृभ्यः-वामम् ) अपने पिता आदि बड़े लोगों के लिए श्रेष्ठ वस्तु

को समर्पित करते हैं ( ये-इदं मयः समेरिरे ) जो इस गार्हस्थ्यसुख को सम्पादित करते हैं ( जनयः पतिभ्यः परिष्वजे ) पत्नियां पतियों के लिए परिष्वङ्ग अर्थात् समागम करती हैं ॥ १० ॥

**भावार्थ**—जो स्त्री पुरुष गृहस्थ आश्रम को स्वीकार करते हैं उन्हें आजीवन परस्पर स्नेह बन्धन की प्रतिज्ञा करनी चाहिए और उसे निभाना चाहिए। सन्तानप्राप्ति की आकांक्षा गृहस्थी जनों को रखनी चाहिए ॥ १० ॥

**न तस्य॑ विद्म तदु॒ षु प्र वो॑चत युवा॑ ह॒ यद्यु॒वत्याः॑ क्षेति॒ योनि॑षु ।**
**प्रि॒योस्त्रि॑यस्य वृष॒भस्य॑ रे॒तिनो॑ गृ॒हं ग॑मेमाश्वि॒ना तदु॑श्मसि ॥ ११ ॥**

न । तस्य॑ । वि॒द्म । तत् । ऊँ इति॑ । सु । प्र । वो॒च॒त । युवा॑ । ह॒ । यत् । यु॒वत्याः॑ क्षेति॑ । योनि॑षु । प्रि॒यऽउ॑स्रियस्य । वृ॒ष॒भस्य॑ । रे॒तिनः॑ । गृ॒हम् । ग॒मे॒म । अ॒श्वि॒ना । तत् । उ॒श्म॒सि ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अश्विना ) हे शिक्षितौ स्थविरौ स्त्रीपुरुषौ ! ( तस्य तत्-उ सु न विद्म ) वयं नवगृहस्थाः तस्य गृहस्थाश्रमस्य तदेव सुफलं न जानीमः ( प्रवोचत ) इदमुपदिशत, 'बहुवचनमादरार्थम्' ( युवा ह यत्-युवत्याः-योनिषु क्षेति ) यत्-युवा युवत्या गृहेषु गृहसम्बन्धिनीषु निवसति ( प्रियोस्त्रियस्य ) प्रिया-उस्त्रिया-उत्साहिनी युवतिर्वधूर्यस्य तस्य वरस्य ( रेतिनः ) रेतस्विनो वीर्यवतः ( वृषभस्य ) वीर्यं सेक्तुं समर्थस्य ( गृहं गमेम ) गृहं-गच्छावः, अत्र तयोः स्वीकारोक्तिः स्त्रीपुरुषयोः "अस्मदो द्वयोश्च" [ अष्टा० १।२।५९ ] द्विवचने बहुवचनम् ( उश्मसि ) वयं कामयामहे ॥ ११ ॥

**भाषान्वयार्थ**—( अश्विना ) हे शिक्षित वृद्ध स्त्रीपुरुषो ( तस्य तत्-उ सु न विद्म ) हम नवगृहस्थ गृहस्थाश्रम के उस सुफल को नहीं जानते हैं ( प्रवोचत ) तुम हमें उसका उपदेश दो ( युवा ह यत्-युवत्याः-योनिषु क्षेति ) जो युवा पति युवति पत्नी के साथ घरों में निवास करता है ( प्रियोस्त्रियस्य ) प्रिया—प्यारी उत्साही पत्नी वाले ( रेतिनः ) रेतस्वी—वीर्य वाले (वृषभस्य ) वीर्य सेचक वर के ( गृहं गमेम ) घर को प्राप्त हों—जावें ( उश्मसि ) हम ये कामना करते हैं ॥ ११ ॥

**भावार्थ**—वृद्ध स्त्री पुरुषों को नवविवाहित, गृहस्थ धर्म के संचालन में समर्थ के घर में गृहस्थ आश्रम को सुचारु रूप में चलाने के लिए तथा उनके यहाँ सुसन्तान हो यह कामना रखते हुए जाना चाहिए ॥ ११ ॥

**आ वा॑मगन्त्सुम॒तिर्वा॑जिनीवसू॒ न्य॑श्विना हृ॒त्सु कामा॑ अयंसत ।**
**अभू॑तं गो॒पा मि॑थु॒ना शु॑भस्पती प्रि॒या अ॑र्य॒म्णो दुर्याँ॑ अशीमहि ॥१२॥**

आ । वाम् । अगन् । सुऽमतिः । वाजिनीवसू इति वाजिनीऽवसू । नि । अश्विना । हृत्ऽसु । कामाः । अयंसत । अभूतम् । गोपा । मिथुना । शुभः । पती इति । प्रियाः । अर्यम्णः । दुर्यान् । अशीमहि ॥ १२ ॥

**संस्कृतान्वयार्थः**—( वाजिनीवसू ) हे विज्ञानक्रियाया वासयितारौ *"यो विज्ञानक्रियां वासयतस्तौ"* [ *ऋ० ५ । ७८ । ३ दयानन्दः* ] ( गोपा ) रक्षकौ ( मिथुना ) परस्परं सङ्गन्तारौ ! ( अश्विना ) सुशिक्षितौ स्थविरौ स्त्रीपुरुषौ ! ( शुभस्पती-अभूतम् ) सुखस्य स्वामिनौ स्थः ( वाम् ) युवयोः ( सुमतिः-आगन् ) शुभमतिः सुशिक्षा समन्तात् प्राप्नोति ( हृत्सुकामाः-अयंसत ) तथा-अस्माकं हृदयेषु कामा नियम्यन्ताम् ) उच्छृंखला न भवन्तु ( प्रियाः ) वयं प्रिया वध्वः ( अर्यम्णः ) स्वामिनः पत्युः ( दुर्यान्-अशीमहि ) गृहान् *"दुर्या गृहनाम"* [ *निघ० ३ । ४* ] वाञ्छामः ॥ १२ ॥

**भाषान्वयार्थ**—( वाजिनीवसू ) हे विज्ञानक्रिया को प्रसारित करने वाले ( गोपा ) रक्षक ( मिथुना ) परस्पर सङ्गत–सहयोगी ( अश्विना ) सुशिक्षित वृद्ध स्त्रीपुरुषो ! ( शुभस्पती-अभूतम् ) तुम दोनों सुख के स्वामी हो ( वाम् ) तुम दोनों की ( सुमतिः-आगन् ) सुशिक्षा भलीभांति हमें प्राप्त हो (हृत्सुकामाः-अयंसत) उससे हमारे हृदयों में कामनायें नियन्त्रित रहें–उच्छृंखल न हों (प्रियाः) हम प्यारी वधुएँ ( अर्यम्णः ) स्वामी-पति के ( दुर्यान्-अशीमहि ) घरों को चाहती हैं ॥ १२ ॥

**भावार्थ**—गृहपत्नियों के अन्दर पुरातन सुशिक्षित स्त्री पुरुषों के प्रति श्रद्धा होनी चाहिए। वे उनसे गृहविज्ञान की शिक्षा प्राप्त करें जिससे कि अपनी गार्हस्थ्य कामनायें नियन्त्रित रहें ॥ १२ ॥

**ता मन्दसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे ।**
**कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् ॥१३॥**

ता । मन्दसाना । मनुषः । दुरोणे । आ । धत्तम् । रयिम् । सहऽवीरम् । वचस्यवे । कृतम् । तीर्थम् । सुऽप्रपानम् । शुभः । पती इति । स्थाणुम् । पथेऽस्थाम् । अप । दुःऽमतिम् । हतम् ॥ १३ ॥

**संस्कृतान्वयार्थः**—( ता मन्दसाना शुभस्पती ) हे तौ मोदयमानौ *"मदि स्तुतिमोद····"* [ *भ्वादिः* ] 'ततः-असानच् प्रत्ययः-औणादिकः' कल्याणस्य पती कल्याणप्रदौ ( मनुषः-दुरोणे ) मनुष्यस्य गृहे *"दुरोण गृहनाम"* [ *निघ० ३ । ४* ] ( वचस्यवे ) आत्मनो वचः-उपदेशवचनमिच्छवे *"वचस्युवम्-आत्मनो वचनमिच्छन्तम्"* [ *ऋ० २ । १६ । ७ दयानन्दः* ] ( सहवीरं रयिम्-आधत्तम् ) पुत्रसहितं धनपोषं सम्पादयतम् *"रयिं देहि पोषं*

देहि" [ काठ० १ । ७ ] ( सुप्रपाणं तीर्थं कृतम् ) सुन्दरसुखप्रपेव पापतारकं गृहस्थाश्रमं कुरुतम् ( पथेष्ठां दुर्मतिं स्थाणुम्-अपहतम् ) गृहस्थमार्गे प्राप्तां दुर्वासनां जडतां च दूरीकुरुतम् ॥ १३ ॥

**भाषान्वयार्थ** - ( ता मन्दसाना शुभस्पती ) हे वे तुम हर्ष देने वाले, कल्याण के स्वामी—कल्याणप्रद ! ( मनुषः-दुरोणे ) मनुष्य के घर में ( वचस्यवे ) अपने लिए उपदेश के इच्छुक जन के लिए ( सहवीरं रयिम्-आधत्तम् ) पुत्रसहित धन पोष सम्पादन करो ( सुप्रपाणं तीर्थं कृतम् ) तथा सुन्दर सुख का पान कराने वाले पापतारक गृहस्थाश्रम को बनाओ ( पथेष्ठां दुर्मतिं स्थाणुम्-अपहतम् ) गृहाश्रम के मार्ग में प्राप्त दुर्वासना और जडता को दूर करो ॥ १३ ॥

**भावार्थ**—सुशिक्षित वृद्ध स्त्रीपुरुष नवगृहस्थों को सुख पहुंचाने वाले उनके घर में उपदेश के इच्छुक जन के लिए सन्तति धन की प्राप्ति जिस प्रकार हो सके और गृहस्थाश्रम पापरहित सुख पहुंचाने वाला बन सके ऐसे उपाय करें। और गृहस्थ के मार्ग में आने वाली दुर्वासना और जड़ता को नष्ट करने का यत्न करें ॥ १३ ॥

**क्व॑ स्वि॒द॒द्य क॑त॒मास्व॒श्विना॑ वि॒क्षु द॒स्रा मा॑दयेते शुभस्पती॑ ।**
**क ई॒ं नि ये॑मे कत॒मस्य॑ जग्मतु॒र्विप्र॑स्य वा॒ यज॑मानस्य वा गृ॒हम् ॥१४॥**

क्व । स्वि॒त् । अ॒द्य । क॒त॒मासु॑ । अ॒श्विना॑ । वि॒क्षु । द॒स्रा । मा॒द॒ये॒ते॒ इति॑ । शु॒भः । पती॒ इति॑ । कः । ई॒म् । नि । ये॒मे॒ । क॒त॒मस्य॑ । ज॒ग्म॒तुः॒ । विप्र॑स्य । वा । यज॑मानस्य । वा । गृ॒हम् ॥ १४ ॥

**संस्कृतान्वयार्थः** —( दस्रा शुभस्पती-अश्विना ) हे दर्शनीयौ "दस् दर्शने" [ चुरादिः ] औणादिको रक् प्रत्ययः, कल्याणस्वामिनौ कल्याणप्रदौ सुशिक्षितौ स्थविरौ स्त्रीपुरुषौ ! युवाम् ( अद्य क्वस्वित् ) अद्य कुत्र हि स्थः ( कतमासु विक्षु मादयेते ) कतमासु मनुष्यप्रजासु हर्षमाप्नुथः ( कः-ईम्-नियेमे ) कः खलु गृहस्थ एवं स्वस्थानेऽवरोधयति यद्वा नियमेन रक्षति ( कतमस्य विप्रस्य वा यजमानस्य वा गृहं जग्मतुः ) कतमस्य विदुषो मेधाविनो वा यजमानस्य सत्कर्तुं गृहं गच्छथः–जग्मतुः मध्यमस्य स्थाने प्रथमा व्यत्ययेन एतौ–अश्विनौ स्थविरौ स्त्रीपुरुषाविति विचारणा स्वगृहे निमन्त्रणायाकांक्षा कार्या ॥ १४ ॥

**भाषान्वयार्थ**—( दस्रा शुभस्पती-अश्विना ) हे दर्शनीय कल्याणप्रद सुशिक्षित स्त्रीपुरुषो ! ( अद्य क्वस्वित् ) इस समय कहाँ रहते हो ( कतमासु विक्षु मादयेते ) आप किन मनुष्य प्रजाओं में हर्ष प्राप्त करते हो ( कः-ईम् नियेमे ) कौन गृहस्थ अपने स्थान पर रोकता है या नियम से रखता है। ( कतमस्य विप्रस्य वा यजमानस्य वा गृहं जग्मतुः ) किसी विद्वान् मेधावी के या यजमान के सत्कारार्थ घर को जाते हो, इस प्रकार सभी स्त्रीपुरुषों को अपने घर निमन्त्रित करने की आकांक्षा करनी चाहिए ॥ १४ ॥

**भावार्थ**—कल्याण का उपदेश देने वाले सुशिक्षित वृद्ध स्त्रीपुरुषों के पास जाकर पूछना चाहिए कि आप किस घर में उपदेश देते हो, कहाँ तुम सत्कार और हर्ष को प्राप्त करते हो, कौन गृहस्थ आदर से अपने घर रखता है ? इस प्रकार उनसे पूछकर वैसे ही शिष्टाचारपूर्वक बर्ताव कर अपने घर बुलाकर लाभ उठायें ॥ १४ ॥



# एकचत्वारिंशं सूक्तम्

ऋषिः—घौषेयः सुहस्त्यः ।

देवता—अश्विनौ ।

छन्दः—१ पादनिचृज्जगती । २ निचृज्जगती । ३ विराड् जगती ।

स्वरः—निषादः ।

विषयः— अस्मिन् सूक्ते 'अश्विनौ' शब्देन प्राणापानौ गृह्येते । प्रातरेव तयोः प्राणायामविधिना चालनं स्वास्थ्यकरं तथा मनस एकाग्रत्वञ्च भवतीति प्रदर्शितम् ।

इस सूक्त में 'अश्विनौ' शब्द से प्राण-अपान गृहीत हैं । उनका प्रातः प्राणायाम रूप से चलाना स्वास्थ्यवर्धक तथा मन को एकाग्र करने वाला है, यह वर्णन किया है ।

समानमु त्यं पुरुहूतमुक्थ्यं१ रथं त्रिचक्रं सवना गनिग्मतम् ।
परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे ॥ १ ॥

समानम् । ऊँ इति । त्यम् । पुरुऽहूतम् । उक्थ्यम् । रथम् । त्रिऽचक्रम् । सवना । गनिग्मतम् । परिऽज्मानम् । विदथ्यम् । सुवृक्तिऽभिः । वयम् । विऽउष्टौ । उषसः । हवामहे ॥ १ ॥

संस्कृतान्वयार्थः—( वयम्-उषसः-व्युष्टौ ) वयं भासमानायां प्रकाशवेलायां प्रातः ( समानं त्यम्-उ ) समानधर्माणं तमेव ( पुरुहूतम् ) अतीव ह्वातव्यं ग्राह्यम् ( उक्थ्यम् ( प्रशंसनीयम् ( त्रिचक्रम् ) त्रीणि चक्राणि-स्तुतिप्रार्थनोपासनारूपाणि चक्रवदावर्तनीयानि तृप्तिकराणि वा यस्य तम् "चक तृप्तियोगे" [ भ्वादिः ] ( परिज्मानम् ) परितो ज्मा पृथिवी प्रथिता भूमिर्यस्य तथाभूतम् ( विदथ्यम् ) वेदनीयमनु-भवनीयम् ( रथम् ) रमणीयं मोक्षम् ( सुवृक्तिभिः ) सुप्रवृत्तिभिर्निर्दोष-क्रियाभिः ( सवना-गनिग्मतम् ) अवसरे प्रापणीयम् ( हवामहे ) निमन्त्रयामहे-धारयेम ॥ १ ॥

भाषान्वयार्थ—( वयम्-उषसः-व्युष्टौ ) हम प्रकाशमान वेला में प्रातःकाल ( समानं त्यम्-उ ) समान धर्म वाले उस ही ( पुरुहूतम् ) अतीव ह्वातव्य-ग्रहण करने योग्य ( उक्थ्यम् )

प्रशंसनीय ( त्रिचक्रम् ) तीन चक्र–स्तुति प्रार्थना उपासना, चक्रवत् वर्तमान तथा तृप्तिकर जिसके हैं ऐसे ( परिज्मानम् ) सर्वतः प्रथितभूमि जिसकी है ऐसे ( विदथ्यम् ) अनुभव करने योग्य ( रथम् ) रमणीय मोक्ष को ( सुवृक्तिभिः ) सुप्रवृत्तियों–निर्दोष क्रियाओं से ( सवना गनिग्मतम् ) अवसर पर प्राप्त करने योग्य को ( हवामहे ) निमन्त्रित करें–धारण करें ॥ १ ॥

भावार्थ—प्रातःकाल उषा वेला में स्तुति प्रार्थना उपासना तृप्तिसाधन अङ्गों वाले अनुभव करने योग्य मोक्ष को निर्दोष भावनाओं–क्रियाओं से जीवन में धारण करना चाहिए ॥ १ ॥

**प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथम् ।**
**विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमन्तमश्विना ॥ २ ॥**

प्रातःऽयुजम । नासत्या । अधि । तिष्ठथः । प्रातःऽयावानम् । मधुऽवाहनम् । रथम् । विशः । येन । गच्छथः । यज्वरीः । नरा । कीरेः । चित् । यज्ञम् । होतृऽमन्तम् । अश्विना ॥ २ ॥

**संस्कृतान्वयार्थः**—( नासत्या ) हे नासायां भवौ ! ( नरा ) शरीरस्य नेतारौ ! ( अश्विना ) आशुगन्तारौ प्राणापानौ ! *"अश्विनौ द्व्यक्षरेण प्राणापानौ"* [ *तै० १। ११। १* ] *"अश्विनौ प्राणापानौ"* [ *यजु० २१। ६० दयानन्दः* ] ( प्रातर्यावाणम् ) प्रातर्वच्छुभगतिमन्तम् ( मधुवाहनम् ) माधुर्यप्रापिकरम् ( रथम् ) रमणीयं मोक्षम् ( अधितिष्ठथः ) अधितिष्ठापयथः 'अन्तर्गतो णिजर्थः' ( येन यज्वरीः-विशः-गच्छथः ) यमनु–यं मोक्षमभिलक्ष्य युवामध्यात्मयाजिनीः प्रजाः-मनुष्यप्रजाः प्राप्नुथः ( कीरेः-होतृमन्तं यज्ञं चित् ) स्तोतुः *"कीरिः स्तोतृनाम"* [ *निघ० ३। १६* ] आत्मवन्तम् *"आत्मा वै होता"* [ *कौ० ४। ६* ] अध्यात्मयज्ञं चित् प्राप्नुथः ॥ २ ॥

**भाषान्वयार्थ**—( नासत्या ) हे नासिका में होने वाले ( नरा ) शरीर के नेता ( अश्विना ) शीघ्रगामी प्राण–अपानो ! ( प्रातर्यावाणम् ) प्रातःकाल के समान शुभगतिवाले ( मधुवाहनम् ) माधुर्य प्राप्त कराने वाले ( रथम् ) रमणीय मोक्ष को ( अधितिष्ठथः ) स्वानुकूल कराते हो ( येन यज्वरीः-विशः-गच्छथः ) जिसे लक्ष्य करके अध्यात्मयाजी मनुष्यप्रजाओं को तुम प्राप्त होते हो ( कीरेः-होतृमन्तं यज्ञं चित् ) स्तुतिकर्त्ता आत्मावाले अध्यात्मयज्ञ को प्राप्त होते हो ॥ २ ॥

**भावार्थ**—नासिका के प्राण और अपान–श्वास और प्रश्वास, प्राणायाम के ढंग से प्रातः चलाने से मधुरता प्राप्त कराने वाले मोक्ष की ओर ले जाते हैं। अध्यात्मयज्ञ करने वाली प्रजाओं को यथार्थ रूप से प्राप्त होते हैं–कार्य करते हैं। स्तुतिकर्ता आत्मा के अध्यात्मयज्ञ को भली भांति चलाते हैं ॥ २ ॥

**अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसम् ।**
**विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥ ३ ॥**

अ॒ध्व॒र्युम् । वा॒ । मधु॑ऽपाणिम् । सु॒ऽह॒स्त्य॑म् । अ॒ग्नि॒धम् । वा॒ । धृ॒तऽद॑क्षम् । दमू॑नसम् । विप्र॑स्य । वा॒ । यत् । सव॑नानि । गच्छ॑थः । अतः॑ । आ । या॒त॒म् । म॒धु॒ऽपेय॑म् । अ॒श्वि॒ना॒ ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अश्विना ) हे प्राणापानौ ! ( मधुपाणिम्-अध्वर्युं वा ) मधुरस्तुतिकर्त्तृं मनस् तद्वन्तमात्मानम् ) "मनो वा अध्वर्युः" [ श० १ । ५ । १ । २१ ] ( सुहस्त्यम् ) सुहस्तक्रियायुक्तं दानादिकार्यशीलम् ( अग्निधम् ) ज्ञानप्रकाशकपरमात्मनः धारकम् ( धृतदक्षम् ) धृतं बलं येन तमात्मबलवन्तम् ( दमूनसम् ) दान्तमनसम् *"दमूना दान्तमनाः"* [ ४ । ५ ] यद्वोपासकम् ( विप्रस्य सवनानि वा गच्छथः ) मेधाविनः-मेधया कार्यविधातुर्ज्ञानकार्याणि वा प्राप्नुथः ( अतः ) अतएव ( मधुपेयम्-आयातम् ) आनन्दः पेयो यस्मिन् तं मोक्षं समन्ताद् गमयतम् ॥ ३ ॥

भाषान्वयार्थ—( अश्विना ) हे प्राणापान ! ( मधुपाणिम्-अध्वर्युं वा ) मधुर स्तुतिकर्ता मन को ( सुहस्त्यम् ) अच्छी हस्तक्रिया वाले–दानादिशील–( अग्निधम् ) ज्ञानप्रकाशक परमात्मा को धारण करने वाले–( धृतदक्षम् ) बलयुक्त–( दमूनसम् ) दान्तमन वाले को अथवा उपासक को ( विप्रस्य सवनानि वा गच्छथः ) या मेधावी के ज्ञानकार्य को प्राप्त होओ ( अतः ) अत एव ( मधुपेयम्-आयातम् ) मधु-आनन्द पेय है जिसमें ऐसे मोक्ष की ओर ले चलो ॥ ३ ॥

**भावार्थ**—जो मनुष्य मन से परमात्मा का मनन, हाथों से यथाशक्ति दान, संयत मन होकर करता है उस ऐसे मेधावी पुरुष के प्राण अपान जीवन के सच्चे सुख और मोक्ष को प्राप्त करने के निमित्त बनते हैं ॥ ३ ॥



# द्वाचत्वारिंशं सूक्तम्

ऋषिः—कृष्ण आङ्गिरसः ।

देवता—इन्द्रः ।

छन्दः—१, ३, ७-९, ११ त्रिष्टुप् । २, ५ निचृत् त्रिष्टुप् । ४ पादनिचृत् त्रिष्टुप् । ६, १० विराट् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अत्र सूक्ते 'इन्द्र' शब्देन प्रधानतया राजा वर्ण्यते । राष्ट्रे प्रजाजनानां संरक्षणं विरोधिशत्रूणां नाशनं परासनं तथा प्रजाभिर्विविधव्यापारकरणं चोपदिश्यते ।

इस सूक्त में मुख्यतया 'इन्द्र' शब्द से राजा वर्णित है । उसके द्वारा प्रजाओं की रक्षा, शत्रुओं का नाश, राष्ट्र से पृथक् करना, प्रजा द्वारा विविध व्यापार करना आदि का उपदेश है ॥

अस्तेव सु प्रतरं लायमस्यन्भूषन्निव प्र भरा स्तोममस्मै ।
वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इन्द्रम् ॥ १ ॥

अस्ताऽइव । सु । प्रऽतरम् । लायम् । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमम् । अस्मै । वाचा । विप्राः । तरत । वाचम् । अर्यः । नि । रमय । जरितरिति । सोमे । इन्द्रम् ॥ १ ॥

**संस्कृतान्वयार्थः**—( जरितः ) हे स्तुतिकर्त्तः ! उपासक ! त्वम् ( अस्ता-इव ) बाणप्रक्षेप्ता यथा ( लायं सु-अस्यन् ) श्लेषयोग्यं बाणम् *"लीङ् श्लेषणे"* [ *दिवा०* ] 'ततो घञ् कर्मणि' सुष्ठु प्रक्षिपन् वर्तसे तथा ( प्रतरम् ) प्रकृष्टतरं बाणमात्मानं परमात्मनि क्षिपन् वर्तस्व '*प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेधव्यं शरवत्तन्मयो भवेत्*" [ मुण्ड० २ । २ । ४ ] ( अस्मै स्तोमं भूषन् इव प्रभर ) अस्मै इन्द्राय परमात्मने स्तुतिसमूहं समर्प्य यथा कमपि प्रसादयितुं भूषयति तद्वत् भूषयन् ( विप्राः ) हे विद्वांसः ! यूयम् ( अर्यः-वाचम् ) अरेः शत्रोः 'छान्दसं रूपम्' *"अर्यः शत्रवः"* [ ऋ० ३ । ३४ । १८

दयानन्दः ] वाचं वज्रं वा "वज्र एव वाक्" [ ऐ० २ । २१ ] ( वाचा तरत ) स्वकीयेनोपदेशरूपेण वाचा वज्रेण वा शमयत ( सोमे-इन्द्रं निरमय ) स्वोपासनारसे परमात्मानं निरमय साक्षात् कुरु ॥ १ ॥

भाषान्वयार्थ—( जरितः ) हे स्तुतिकर्ता ! उपासक ! तू ( अस्ता-इव ) बाण फेंकने वाले के समान ( लायं सु अस्यन् ) बाण को भली प्रकार फेंकता हुआ स्थिर रहता है तथा ( प्रतरम् ) उत्तम बाण स्वात्मा को परमात्मा में फेंकता हुआ वर्तमान रह—बना रह ( अस्मै स्तोमं भूषन्-इव प्रभर ) इस परमात्मा के लिए स्तुति समूह समर्पित कर, जैसे किसी को प्रसन्न करने के लिए उसे भूषित करते हैं–सजाते हैं ( विप्राः ) हे विद्वान् लोगो ! तुम ( अर्यः–वाचम् ) शत्रु के वज्र अथवा वाणी को ( वाचा तरत ) अपने वज्र अथवा उपदेशरूप वाणी से शमन करो ( सोमे-इन्द्रं निरमय ) अपने उपासना रस में परमात्मा का साक्षात्कार कर ॥ १ ॥

भावार्थ—स्तुति करने वाले उपासक अपने आत्मा को बाण बनाकर बाण फेंकने वाले की भांति परमात्मा में समर्पित करें, तथा विरोधी जन के वाक्प्रहार को अपने उपदेश भरे वचन से शान्त करे ॥ १ ॥

दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिन्द्रम् ।
कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरम् ॥ २ ॥

दोहेन । गाम् । उप । शिक्ष । सखायम । प्र । बोधय । जरितः । जारम् । इन्द्रम् । कोशम् । न । पूर्णम् । वसुना । निऽऋष्टम् । आ । च्यवय । मघऽदेयाय । शूरम् ॥ २ ॥

संस्कृतान्वयार्थः—( जरितः ) हे स्तोतः ! त्वम् ( जारम् ) स्तोतव्यम् "जरतिअर्चतिकर्मा" [ निघ० ३ । १४ ] ( सखायम्-इन्द्रम् ) सखिभूतं परमात्मानम् ( दोहेन गाम्-उपशिक्ष ) दोहेन दुग्धनिमित्तेन दुग्धं निमित्तीकृत्य यथा गामुपशिक्षति किमपि भोज्यं वस्तु दत्त्वा तृप्यति तथा ( प्रबोधय ) स्तुत्वा स्वाभिमुखं कुरु ( शूरं मघदेयाय ) प्रापणशीलम् "शूरः शवतेर्गतिकर्मणः" [ निरु० ३ । १३ ] अध्यात्मधनदानाय ( कोशं न पूर्णं वसुना ) जलेन पूर्णं मेघमिव "कोशो मेघनाम" [ निघ० १ । १० ] वासकेनाध्यात्मधनेन पूर्णं परमात्मानम् ( न्यृष्टम्-आ च्यावय ) स्वनिकटीभूतं समन्तात् प्रापय ॥ २ ॥

भाषान्वयार्थ—( जरितः ) हे स्तोता ! तू ( जारम् ) स्तुति करने योग्य ( सखायम्-इन्द्रम् ) मित्ररूप परमात्मा को ( दोहेन गाम्-उपशिक्ष ) दूध को निमित्त बनाकर जैसे गौ को भोज्य वस्तु प्रदान करते हैं ऐसे ( प्रबोधय ) स्तुति करके अपनी ओर आकर्षित कर ( शूरं मघदेयाय ) प्राप्त होने के स्वभाव वाले परमात्मा को अध्यात्मधन देने के लिए ( कोशं न पूर्णं वसुना ) जल से पूर्ण मेघ की भांति अध्यात्मधन से पूर्ण परमात्मा को ( न्यृष्टम्-आ च्यावय ) स्वनिकट प्राप्त करो ॥ २ ॥

भावार्थ—परमात्मा आनन्दघन से पूर्ण है और मित्र के समान है, स्तुत्य है। उसकी स्तुति करने से वह अपने आध्यात्मिक आनन्दघन से उपासक को तृप्त कर देता है ॥ २ ॥

किमङ्ग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा शृणोमि ।
अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिन्द्रा भरा नः ॥ ३ ॥

किम् । अङ्ग । त्वा । मघऽवन् । भोजम् । आहुः । शिशीहि । मा । शिशयम् । त्वा । शृणोमि । अप्नस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदम् । भगम् । इन्द्र । आ । भर । नः ॥ ३ ॥

संस्कृतान्वयार्थः—( अङ्ग मघवन् शक्र-इन्द्र ) हे अध्यात्मधनवन् सर्वपालने समर्थ परमात्मन् ! ( किं त्वा भोजम्-आहुः ) अहो ! त्वां भोजयितारं भोगदातारं विप्राः कथयन्ति ( मा शिशीहि ) मां प्रति-मह्यं तदध्यात्मधनं भोगं वा देहि *"शिशीहि-शिशीति-दानकर्मा"* [ *निरु. ५ । २३* ] ( त्वा शिशयं शृणोमि ) अहमपि त्वां दातारं शृणोमि ( मम धीः-अप्नस्वती-अस्तु ) मम बुद्धिः कर्मवती कर्मपरायणा भवतु *"अप्नः कर्मनाम"* [ *निघ० २ । १* ] ( नः ) अस्मभ्यम् ( वसुविदं भगम्-आभर ) समस्तधनानां प्रापयितारमध्यात्मैश्वर्यमाभरितं कुरु-देहि ॥ ३ ॥

भाषान्वयार्थ—( अङ्ग मघवन् शक्र-इन्द्र ) हे अध्यात्मधन वाले सबको पालने में समर्थ परमात्मन् ! ( किं त्वा भोजम्-आहुः ) अहो ! तुझे मेधावीजन भोगदाता कहते हैं ( मा शिशीहि ) मेरे प्रति–मेरे लिए अपना अध्यात्मधन–भोग दे ( त्वा शिशयं शृणोमि ) मैं तुझे देने वाला सुनता हूं ( मम धीः-अप्नस्वती अस्तु ) मेरी बुद्धि कर्मवाली–क्रियाशील हो ( नः ) हमारे लिए ( वसुविदं भगम्-आ भर ) समस्त धनों को प्राप्त कराने वाले अध्यात्म ऐश्वर्य को आभरित कर–मेरे अन्दर भर दे ॥ ३ ॥

भावार्थ—परमात्मा सबका पालन करने में समर्थ है, वह अपनी कृपा से सबको यथायोग्य भोग देता है। विशेषतः उपासक को आध्यात्मिक ऐश्वर्य भी प्रदान करता है। उसकी उपासना करनी चाहिए ॥ ३ ॥

त्वां जना ममसत्येष्विन्द्र संतस्थाना वि ह्वयन्ते समीके ।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥ ४ ॥

त्वाम् । जनाः । ममऽसत्येषु । इन्द्र । सम्ऽतस्थानाः । वि । ह्वयन्ते । सम्ऽईके । अत्र । युजम् । कृणुते । यः । हविष्मान् । न । असुन्वता । सख्यम् । वष्टि । शूरः ॥ ४ ॥

संस्कृतान्वयार्थः—( इन्द्र ) हे ऐश्वर्यवन् परमात्मन् ! ( त्वाम् ) त्वां खलु

( सन्तस्थानाः-जनाः ) साम्मुख्ये स्थिता विरोधिनो जनाः ( ममसत्येषु ) मम सत्यं येषु कर्त्तव्यं स्यादिति प्रसङ्गेषु, अपि वा ( समीके ) सम्यक् प्राप्ते संग्रामे *"समीके संग्रामनाम"* *[ निघ० २ । १७ ]* ( विह्वयन्ते ) विशिष्टतयाऽऽह्वयन्ति ( अत्र ) अस्मिन् तत्र ( शूरः ) सः प्रापणशीलः परमात्मा ( युजं कृणुते ) सहयोगिनं सखायं करोति ( यः-हविष्मान् ) आत्मसमर्पणं कृतवान् स्तुतिं कृत्वा ( असुन्वता सख्यं न वष्टि ) उपासनारसमसम्पादयता सह स मित्रत्वं नेच्छति ॥ ४ ॥

भाषान्वयार्थ—( इन्द्र ) हे ऐश्वर्ययुक्त परमात्मन् ! ( त्वाम् ) तुझे ( सन्तस्थानाः-जनाः ) स्पर्धा में स्थित विरोधी जन ( ममसत्येषु ) मेरा सत्य कर्त्तव्य है जिन प्रसङ्गों में, उनमें, तथा ( समीके ) संग्राम में ( विह्वयन्ते ) विशेषरूप से आह्वान करते हैं ( अत्र ) इसमें—वहाँ ( शूरः ) वह प्राप्त होने वाला परमात्मा ( युजं कृणुते ) मुझे सहयोगी सखा बनाता है ( यः-हविष्मान् ) आत्मसमर्पण कर चुका या करता है ऐसे स्तुति करने वाले को परमात्मा मित्र बनाता है, और ( असुन्वता सख्यं न वष्टि ) जो उपासना रस का सम्पादन नहीं करता उसके साथ परमात्मा मित्रता नहीं चाहता ॥ ४ ॥

भावार्थ—मानव के सामने आने वाले विरोधी जन संघर्ष लेने के लिए आह्वान करें। संग्राम में भले ही धकेलना चाहें परन्तु उपासक—परमात्मा की स्तुति करने वाले को घबराने की आवश्यकता नहीं। उसकी सहायता परमात्मा करता है ॥ ४ ॥

**धनं न स्पन्द्रं बहुलं यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान् ।**
**तस्मै शत्रूँन्त्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हन्ति वृत्रम् ॥ ५ ॥**

धनम् । न । स्पन्द्रम् । बहुलम् । यः । अस्मै । तीव्रान् । सोमान् । आऽसुनोति । प्रयस्वान् । तस्मै । शत्रून् । सुऽतुकान् । प्रातः । अह्नः । नि । सुऽअष्ट्रान् । युवति । हन्ति । वृत्रम् ॥ ५ ॥

संस्कृतान्वयार्थः—( यः प्रयस्वान् ) यो योगाभ्यासादिप्रयत्नवान् ( अस्मै ) परमात्मने ( स्पन्द्रं बहुलं धनं न ) स्पन्दनशीलं धैर्येण सुखदं बहुधनमिव ( तीव्रान् सोमान्-आसुनोति ) तीव्रसंवेगेन कृतान् सम्पादितानुपासनारसान् समन्तात् सम्पादयति ( तस्मै ) उपासकाय ( सुतुकान् स्वष्ट्रान् शत्रून् ) बहुहिंसकान् सुव्याप्तान् शातयितॄन् कामादीन् ( अह्नः प्रातः ) दिनस्य पूर्वभागे ( नियुवति ) निवारयति ( वृत्रं हन्ति ) आवरकमज्ञानं नाशयति ॥ ५ ॥

भाषान्वयार्थ—( यः प्रयस्वान् ) जो योगाभ्यास आदि प्रयत्न करने वाला है, वह ( अस्मै ) इस परमात्मा के लिए ( स्पन्द्रं बहुलं धनं न ) स्पन्दनशील अर्थात् धैर्य से सुख देने वाले धन की भांति ( तीव्रान् सोमान्-आसुनोति ) तीव्र संवेग से किये हुए उपासनारसों को सम्पादित करता है ( तस्मै ) उस उपासक के लिए ( सुतुकान् स्वष्ट्रान् शत्रून् ) बहुहिंसक

सुव्याप्त कामादि शत्रुओं को ( अह्नः प्रातः ) दिन के प्रथम अवसर पर ( नि युवति ) निवारित करता है–हटाता है ( वृत्रं हन्ति ) आवरक अज्ञान को नष्ट करता है ॥ ५ ॥

भावार्थ—योगाभ्यास करने वाले कामादि शत्रुओं को नष्ट करने में समर्थ होते हैं तथा बुद्धि के आवरक अज्ञान को हटाकर ज्ञानप्रकाश को उन्नत करके परमात्मा के आनन्द को भी प्राप्त करते हैं ॥ ५ ॥

यस्मिन् वयं दधिमा शंसमिन्द्रे यः शिश्राय मघवा काममस्मे ।
आराच्चित्सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमन्ताम् ॥ ६ ॥

यस्मिन् । वयम् । दधिम । शंसम् । इन्द्रे । यः । शिश्राय । मघऽवा । कामम् । अस्मे इति । आरात् । चित् । सन् । भयताम् । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमन्ताम् ॥ ६ ॥

संस्कृतान्वयार्थः—इन्द्रशब्देन राजा कथ्यते ( वयं यस्मिन्-इन्द्रे शंसं दधिम ) वयं खलु यस्मिन् राजनि–यद्राजनिमित्तं प्रशंसनं धारयामः ( यः-मघवा-अस्मे कामं शिश्राय ) यो हि धनवान् राजाऽस्मासु कमनीयं वस्तु श्रयति ददातीत्यर्थः, तथा ( अस्य शत्रुः ) अस्य विरोधी ( आरात्-चित् सन् ) दूरादपि सन् ( भयताम् ) बिभेति ( अस्मै ) अस्मै राज्ञे ( जन्या द्युम्ना निनमन्ताम् ) जायन्ते तद्देशे यानि तानि-अन्नानि भोग्यानि वस्तूनि *"द्युम्नं द्योततेर्यशो वाऽन्नं वा"* [ निरु० ५ । ५ ] समर्पितानि भवन्ति ॥ ६ ॥

भाषान्वयार्थ—( वयं यस्मिन्-इन्द्रे ) हम जिस राजा में–जिस राजा के निमित्त ( शंसं दधिम ) प्रशंसा धारण करते हैं ( यः-मघवा ) जो धनवान् राजा ( अस्मे कामं शिश्राय ) हमारे में–हमारे निमित्त कमनीय वस्तु को देता है, तथा ( यस्य शत्रुः ) जिसका विरोधी ( आरात्-चित् सन् भयताम् ) दूर से ही भय करता है ( अस्मै ) इस राजा के लिए ( जन्या द्युम्ना निनमन्ताम् ) उस देश में उत्पन्न होने वाली अन्न आदि भोगवस्तुएँ समर्पित हो जाती हैं ॥ ६ ॥

भावार्थ—वह राजा प्रशंसा के योग्य है जो अपनी प्रजा के लिए आवश्यक निर्वाह की वस्तुओं का प्रबन्ध करता है तथा विरोधी शत्रु आदि जिससे दूर से ही भय खाते हैं वह राष्ट्र की भोगसम्पत्ति का अधिकारी है ॥ ६ ॥

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥ ७ ॥

आरात् । शत्रुम् । अप । बाधस्व । दूरम् । उग्रः । यः । शम्बः । पुरुऽहूत । तेन । अस्मे इति । धेहि । यवऽमत् । गोऽमत् । इन्द्र । कृधि । धियम् । जरित्रे । वाजऽरत्नाम् ॥ ७ ॥

संस्कृतान्वयार्थः—( पुरुहूत-इन्द्र ) हे बहुप्रकारेण ह्वातव्य राजन् ! ( यः ) यस्ते ( उग्रः शम्बः ) तीक्ष्णो वज्रः *"शम्ब इति वज्रनाम, शमयतेर्वा शातयतेर्वा"* [ निरु० ५ । २४ ] ( तेन शत्रुम्-आरात्-अपबाधस्व ) तेन वज्रेण समीपात्-आक्रमणसन्निकटात्-पीडय दूरमपगमय ( अस्मे ) अस्मभ्यम् ( यवमत् ) अन्नयुक्तं भोजनम् ( गोमत् ) दुग्धयुक्तं भोज्यं वस्तु ( कृधि ) सम्पादय तथा ( जरित्रे ) पुरोहिताय ( वाजरत्नां धियम् ) अमृतान्नरत्नयुक्तां कर्मप्रवृत्तिं कुरु *"धीः कर्मनाम"* [ निघ० २ । १ ] ॥ ७ ॥

भाषान्वयार्थ—( पुरुहूत-इन्द्र ) हे बहु प्रकार से आमन्त्रण करने योग्य राजन् ! ( यः ) जो तेरा ( उग्रः शम्बः ) तीक्ष्ण वज्र है ( तेन शत्रुम् ) उससे शत्रुको ( आरात्-अपबाधस्व ) समीप से आक्रमण की सन्निकटता से पीड़ित कर या दूर भगा ( अस्मे ) हमारे लिए ( यवमत् ) अन्न वाला भोजन ( गोमत् ) दुग्ध वाला भोजन ( कृधि ) कर-दे ( जरित्रे ) पुरोहित के लिए ( वाजरत्नां धियम् ) अमृतान्नरत्न से युक्त कर्मप्रवृत्ति को कर ॥ ७ ॥

भावार्थ—राजा को चाहिए अपने तीक्ष्ण शस्त्र से शत्रु को पीड़ित करे या दूर करे और प्रजाजनों के लिए दुग्ध आदि मिश्रित भोजन मिलता रहे ऐसी व्यवस्था करे ॥ ७ ॥

**प्र यमन्तर्वृषसवासो अग्मन् तीव्राः सोमा बहुलान्तास इन्द्रम् ।**
**नाह दामानं मघवा नि यंसन्नि सुन्वते वहति भूरि वामम् ॥ ८ ॥**

प्र । यम् । अन्तः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअन्तासः । इन्द्रम् । न । अह । दामानम् । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामम् ॥ ८ ॥

संस्कृतान्वयार्थः—( वृषसवासः ) वृषवद्भिर्बलवद्भिः श्रेष्ठैः सवाः-निष्पादनीयाः ( बहुलान्तासः ) बहुलं विविधं सुखमन्ते येषां ते तथाभूताः ( तीव्राः सोमाः ) प्रकृष्टराज्यैश्वर्यपदार्थाः ( यम्-इन्द्रम् अन्तः प्र-अग्मन् ) यस्य राज्ञोऽन्तः राष्ट्रान्तरे राष्ट्रमध्ये प्राप्ता भवन्ति ( मघवा ) तादृशो धनवान् राजा ( दामानम् ) उपहारदातारम् ( न-अह नियंसत् ) नैव नियन्त्रयति न खलु बध्नाति कार्यतोऽवरोधयति, अपितु ( सुन्वते भूरिवामं निवहति ) राष्ट्रैश्वर्यसम्पादयित्रे बहुविधं वननीयं पदं समर्पयति ॥ ८ ॥

भाषान्वयार्थ—( वृषसवासः ) वृषभ के समान बलवानों श्रेष्ठों द्वारा निष्पादनीय ( बहुलान्तासः ) बहुत विविध सुख अन्त में जिनके हो ऐसे ( तीव्राः सोमाः ) प्रकृष्ट राज्यैश्वर्य पदार्थ ( यम्-इन्द्रम्-अन्तः प्र-अग्मन् ) जिस राजा के राष्ट्र में प्राप्त होते हैं ( मघवा ) उस ऐसे धनवान् राजा ( दामानम् ) उपहार दाता को ( न-अह नि यंसत् ) नियन्त्रित नहीं करता है-नहीं रोकता है, अपितु ( सुन्वते भूरिवामं निवहति ) राष्ट्रैश्वर्य को सम्पादित करने वाले के लिए बहुत प्रकार के वननीय पद को समर्पित करता है ॥ ८ ॥

भावार्थ—राष्ट्र में विविध ऐश्वर्यों को अपने विविध कला व्यापार से बढ़ाने वाले जो

श्रेष्ठ महानुभाव हैं उन पर राजा किसी प्रकार के प्रतिवन्ध न लगाये अपितु उनको राष्ट्र के ऊंचे पद व सहायता दे ॥ ८ ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥ ९ ॥

उत । प्रऽहाम । अतिऽदीव्य । जयाति । कृतम् । यत् । श्वऽघ्नी । विऽचिनोति । काले । यः । देवऽकामः । न । धना । रुणद्धि । सम् । इत् । तम । राया । सृजति । स्वधाऽवान् ॥ ९ ॥

**संस्कृतान्वयार्थः**—( उत ) अपि च ( अतिदीव्य प्रहां जयाति ) अतिजेतुमिच्छां कृत्वा *"दिवु क्रीडा विजिगीषा ..."* [ *दिवा०* ] प्रबलहन्तारं शत्रुं जयति ( यत् कृतं श्वघ्नी विचिनोति काले ) यथा कृतं प्रहारकृतं प्रहृतं शुनो हन्ता वृकः *"श्वघ्नी शुनो हन्ति"* [ *ऋ० २ । १२ । ४ दयानन्दः* ] काले स्वाधीनीकरोति तथा स्वाधीनीकरोति, परन्तु ( यः-देवकामः ) यस्तु देवं मोदं शान्तभावं कामयते तस्य ( धना न रुणद्धि ) धनानि नावरोधयति न गृह्णाति, अपि तु ( स्वधावान् तम्-इत् राया सं सृजति ) धनान्नवान् राजा तं तु धनेन संयोजयति ॥ ९ ॥

भाषान्वयार्थ—( उत ) तथा ( अतिदीव्य प्रहां जयाति ) जीतने की इच्छा करके प्रबल घातक शत्रु को जीतता है ( यत् कृतं श्वघ्नी विचिनोति काले ) जैसे प्रहार किये हुए को भेड़िया समय पर स्वाधीन करता है वैसे ही शत्रु को विजेता स्वाधीन करता है, परन्तु ( यः-देवकामः ) जो तो देव अर्थात् मोद या शान्त भाव को चाहता है उसके ( धना न रुणद्धि ) धनों को नहीं रोकता है–नहीं ग्रहण करता है, अपितु ( स्वधावान् तम्-इत् राया सं सृजति ) धनान्न वाला राजा उसको तो धन से संयुक्त करता है ॥ ९ ॥

भावार्थ—राजा को चाहिए कि जो विनाशकारी विरोधी शत्रु हो उसे विविध साधनों से स्वाधीन करे और जो शान्तिप्रिय हो उसे धनादि की सहायता दे ॥ ९ ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् । वयम् । राजऽभिः । प्रथमा । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

**संस्कृतान्वयार्थः**—( पुरुहूत ) हे बहुह्वातव्य राजन्! ( गोभिः-दुरेवाम्-अमतिम् ) वेदवाग्भिर्दुःखप्रापिकामज्ञानबुद्धिम् ( यवेन विश्वां क्षुधम् ) अन्नेन सर्वां क्षुधम् ( तरेम )

पारयेम ( राजभिः प्रथमा धनानि ) भवादृशैः शासकैः प्रमुखानि धनानि ( अस्माकेन वृजनेन जयेम ) तथा स्वकीयेनास्मदीयेन बलेन जयेम–जयं प्राप्नुयाम ॥ १० ॥

भाषान्वयार्थ—(पुरुहूत) हे बहुत आह्वान करने योग्य राजन् ( गोभिः-दुरेवाम्-अमतिम् ) वेदवाणियों से दुःख प्राप्त कराने वाली अज्ञान बुद्धि को ( यवेन विश्वां क्षुधम् ) अन्न से समस्त भूख को ( तरेम ) पार करें–निवृत्त करें ( राजभिः प्रथमा धनानि ) आप जैसे राजाओं से प्रमुख धनों को प्राप्त करें ( अस्माकेन वृजनेन जयेम ) तथा हम अपने बल से विजय प्राप्त करें ॥ १० ॥

भावार्थ—राष्ट्र की प्रजायें शासकों की सहायता से धनसम्पत्ति का उपार्जन करें। अपने बल से अपने कार्यों में सफलता प्राप्त करें। विविध भोजनों से क्षुधा की निवृत्ति करें एवं नाना-विद्याओं के अध्ययन से अज्ञानबुद्धि को दूर करें ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

संस्कृतान्वयार्थः—( बृहस्पतिः ) वेदवाण्याः स्वामी परमात्मा ( अघायोः ) पापकामिनोऽनिष्टेच्छुकात् ( पश्चात्-उत-उत्तरस्मात्-अधरात्-नः परिपातु ) पश्चिमतोऽप्युत्तरतो दक्षिणतश्चास्मान् रक्षतु ( इन्द्रः ) स ऐश्वर्यवान् परमात्मा ( पुरस्तात्-उत मध्यतः ) पूर्वदिक्तो मध्यतश्च रक्षतु ( सखा नः सखिभ्यः-वरिवः कृणोतु ) स एव सखिभूतः परमात्माऽस्मभ्यं सखिभूतेभ्यो धनप्रदानं करोतु *"वरिवः-धननाम"* [ निघ० २ । १० ] ॥ ११ ॥

भाषान्वयार्थ—( बृहस्पतिः ) वेदवाणी का स्वामी परमात्मा ( अघायोः ) हमारे प्रति पाप–अनिष्ट को चाहने वाले से ( नः पश्चात्-उत-उत्तरस्मात् ) हमें पश्चिम की ओर से, उत्तर की ओर से ( अधरात् परिपातु ) और नीचे की ओर से बचावे ( इन्द्रः ) वही ऐश्वर्यवान् परमात्मा ( पुरस्तात्-उत मध्यतः ) पूर्वदिशा की ओर से और मध्यदिशा की ओर से भी रक्षा करे ( सखा नः सखिभ्यः-वरिवः कृणोतु ) मित्ररूप परमात्मा हम मित्रों के लिए धन प्रदान करे ॥ ११ ॥

भावार्थ—किसी भी दिशा में वर्तमान अनिष्टकारी से परमात्मा रक्षा करता है, जब कि हम सखा समान गुण आचरण को कर लेते हैं ॥ ११ ॥



# त्रिचत्वारिंशं सूक्तम्

ऋषिः—कृष्ण आङ्गिरसः ।

देवता—इन्द्रः ।

छन्दः—१, ९ निचृज्जगती । २ आर्ची स्वराड् जगती । ३, ६ जगती । ४, ५, ७, ८ विराड् जगती । १० विराट् त्रिष्टुप् । ११ त्रिष्टुप् ।

स्वरः—१-९ निषादः । १०, ११ धैवतः।

विषयः—सूक्तेऽस्मिन् 'इन्द्र' शब्देन परमात्मा गृह्यते । स स्वोपासकानां स्तुतिभिः प्रीयमाणः सर्वविधबाधां दूरीकरोति बहूनि सुखानि तेभ्यः प्रयच्छति तदनन्तरं साक्षाद् भवतीति प्रदर्श्यते ।

इस सूक्त में 'इन्द्र' शब्द से परमात्मा लक्षित है। वह अपने उपासकों की स्तुतियों से प्रसन्न होकर उनकी बाधाओं को दूर करता है, सुखों को देता है, उनके अन्दर साक्षात् होता है यह वर्णित है ॥

अच्छा म इन्द्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजन्ते जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ १ ॥

अच्छ । मे । इन्द्रम् । मतयः । स्वःऽविदः । सध्रीचीः । विश्वाः । उशतीः । अनूषत । परि । स्वजन्ते । जनयः । यथा । पतिम् । मर्यम् । न । शुन्ध्युम् । मघऽवानम् । ऊतये ॥ १ ॥

संस्कृतान्वयार्थः—( इन्द्र ) हे परमात्मन् ( मे ) मम ( स्वर्विदः सध्रीचीः-विश्वाः-मतयः ) सुखं मोक्षं प्रापयित्र्यः "स्वर्वित् सुखप्रापिकाः" [ ऋ० १ । ९६ । ४ दयानन्दः ] परस्परं सहयोगिन्यः सङ्गताः सर्वाः खलु वाचः "वाग्वै मतिः [ श० ८ । १ । २ । ७ ] ( उशतीः-अच्छ-अनूषत ) त्वां कामयमानाः सम्यक् स्तुवन्ति "अनूषत-अस्तोषत" [ निरु० ४ । १९ ] "णु स्तुतौ" [ अदादि० ] ताभिः ( यथा जनयः-मर्यं पतिं न ) भार्या यथा

मनुष्यं पतिमिव-एवम् ( शुन्ध्युं मघवानं परिष्वजन्ते-ऊतये ) पवित्रकर्तारमध्यात्मधन-वन्तं त्वामात्मतृप्तये स्तोतारः परिष्वजन्ते-आलिङ्गन्ति ॥ १ ॥

भाषान्वयार्थ—( इन्द्र ) हे परमात्मन् ! ( मे ) मेरी (स्वर्विदः सध्रीचीः-विश्वाः-मतयः) मोक्ष प्राप्त कराने वाली परस्पर सहयोगी सङ्गत हुई सब वाणियां ( उशतीः-अच्छ-अनूषत ) तुझे चाहती हुईं स्तुति करती हैं उनके द्वारा ( यथा जनयः-मर्यं पतिं न ) जैसे भार्यायें—पत्नियां अपने पुरुष पति को एवं ( शुन्ध्युं मघवानम्-उतये परिष्वजन्ते ) पवित्रकर्त्ता तुझ अध्यात्म धन वाले को आत्मतृप्ति के लिए स्तोताजन आलिङ्गित करते हैं ॥ १ ॥

भावार्थ—मनुष्य की वाणियां जो परमात्मा की स्तुति करने वाली हैं, परमात्मा का समागम कराने—मोक्ष प्राप्त कराने की परम साधन हैं ॥ १ ॥

न घा॑ त्वद्रिगप॑ वेति मे॒ मन॒स्त्वे इत्कामं॑ पुरुहूत शिश्रय ।
राजे॑व दस्म॒ नि ष॒दोऽधि॑ ब॒र्हिष्य॒स्मिन्त्सु सोमे॑ऽव॒पान॑मस्तु ते ॥ २ ॥

न । घ॒ । त्व॒द्रिक् । अप॑ । वे॒ति॒ । मे॒ । मन॑ः । त्वे इति॑ । इत । काम॑म् । पु॒रु॒ऽहू॒त॒ । शि॒श्र॒य॒ । राजा॑ऽइव । द॒स्म॒ । नि । स॒दः॒ । अधि॑ । ब॒र्हिषि॑ अ॒स्मिन् । सु । सोमे॑ । अ॒व॒ऽपान॑म् । अ॒स्तु॒ । ते॒ ॥ २ ॥

संस्कृतान्वयार्थः—( पुरुहूत ) हे बहुप्रकारेण ह्वातव्य राजन् ! ( मे मनः-त्वद्रिक्-न घ-अपवेति ) मम मनः खलु त्वयि सम्पृक्तम् *"रिच सम्पर्चने"* [ *चुरादि०* ] 'ततः क्विप्' न हि पृथग्भवति ( त्वे-इत् कामं शिश्रय ) त्वयि हि सर्वमभिलाषं स्थापयामि ( दस्म ) हे दर्शनीय परमात्मन् ! ( राजा-इव बर्हिषि निषदः ) राजा यथा तथाभूतस्त्वं हृदयावकाशे-हृदयासने निषीद ( अस्मिन् सोमे सु-अवपानम्-अस्तु ) अस्मिन्-उपासनारसे तव शोभनं तुच्छपानं भवतु ॥ २ ॥

भाषान्वयार्थ—( पुरुहूत ) हे बहुत प्रकार से बुलाने योग्य राजन् ! ( मे मनः-त्वद्रिक्-न घ-अपवेति ) मेरा मन तेरे में लगकर अलग नहीं होता है ( त्वे-इत कामं शिश्रय ) तेरे अन्दर ही कामना को आश्रय देता हूँ ( दस्म ) हे दर्शनीय परमात्मन् ! ( राजा-इव बर्हिषि निषदः ) राजा की भांति तू मेरे हृदयावकाश—हृदयासन पर विराजमान हो ( अस्मिन् सोमे सु-अवपानम्-अस्तु ) इस उपासना रस में तेरा सुन्दर तुच्छपान हो ॥ २ ॥

भावार्थ—परमात्मा में मन को ऐसा लगाना चाहिए कि उसी के अन्दर सब इच्छायें पूरी हो सकें । मन ठीक ठीक परमात्मा में लग जाने पर इधर उधर भटकना छोड़ देता है । उपासक परमात्मा को अपने हृदय में तब साक्षात् कर लेता है ॥ २ ॥

विषूवृदिन्द्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते ।
तस्येदिमे प्रवणे सप्त सिन्धवो वयो वर्धन्ति वृषभस्य शुष्मिणः ॥ ३ ॥

विषुऽवृत् । इन्द्रः । अमतेः । उत । क्षुधः । सः । इत् । रायः । मघऽवा । वस्वः । ईशते । तस्य । इत् । इमे । प्रवणे । सप्त । सिन्धवः । वयः । वर्धन्ति । वृषभस्य । शुष्मिणः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( सः-इन्द्रः ) स परमात्मा ( विषुवृत् ) विषमान् खल्वसरलान् वृणोति-आच्छादयति निवारयति वा सः *"विषुरूपे विषमरूपे"* [ निरु० १२ । २८ ] ( अमतेः-उत क्षुधः ) अज्ञानस्यापि चाशनायाश्च निवारकः ( मघवा-इत्-रायः-वस्वः-ईशते ) स ऐश्वर्यवान् परमात्मा हि बाह्यधनस्य तथा वासयितुरात्मबलस्याध्यात्मैश्वर्यस्य चेष्टे स्वामित्वं करोति ( वृषभस्य शुष्मिणः-तस्य-इत् प्रवणे ) तस्यैव सुखवर्षयितुर्बलवतः परमात्मनो निम्ने शासने ( इमे सप्त सिन्धवः ) एते सर्पणशीलाः प्राणा नद्यो वा '*प्राणो वै सिन्धुश्छन्दः*" [ श० ८ । ५ । २ । ४ ] ( वयः-वर्धन्ति ) जीवनमन्नं वा वर्धयन्ति ॥ ३ ॥

**भाषान्वयार्थ**—( सः-इन्द्रः ) वह परमात्मा ( विषुवृत् ) विषम अर्थात् कुटिलों को दबाता है या हटा देता है वह ( अमतेः-उत क्षुधः ) अज्ञान और भोगेच्छा को निवृत्त करता है ( मघवा-इत्-रायः-वस्वः-ईशते ) वह ऐश्वर्यवान् परमात्मा बाह्यधन का और बसानेवाले आन्तरिक धन—आत्मबल का स्वामी है ( तस्य वृषभस्य शुष्मिणः-इत्-प्रवणे ) उस सुखवर्षक बलवान् परमात्मा के शासन में ( इमे सप्त सिन्धवः ) ये सर्पणशील प्राण या नदियां ( वयः-वर्धन्ति ) जीवन और अन्न को बढ़ाते हैं ॥ ३ ॥

**भावार्थ**—परमात्मा कुटिलों पर कृपा नहीं करता । उनको किसी न किसी ढंग से दण्ड देता है । अज्ञान और बहुत भोगेच्छा को भी निवृत्त करता है । समस्त बाहरी और आन्तरिकधन का स्वामी है उसी के शासन में नदियां प्रवाहित होती हुई अन्न को बढाती हैं और शरीर में प्राण प्रगति करते हुए जीवन को बढाते हैं ॥ ३ ॥

वयो न वृक्षं सुपलाशमासदन्त्सोमास इन्द्रं मन्दिनश्चमूषदः ।
प्रैषामनीकं शवसा दविद्युतद्विदत्स्वर्मनवे ज्योतिरार्यम् ॥ ४ ॥

वयः । न । वृक्षम् । सुऽपलाशम् । आ । असदन् । सोमासः । इन्द्रम् । मन्दिनः । चमूऽसदः । प्र । एषाम् । अनीकम् । शवसा । दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यम् ॥ ४ ॥

संस्कृतान्वयार्थः—( वयः-न सुपलाशं वृक्षम्-आसदन् ) पक्षिणो यथा शोभनपर्णयुक्तं वृक्षमासीदन्ति, तद्वत् ( चमूषदः सोमासः-मन्दिनः-इन्द्रम् ) चमन्ति खल्वध्यात्मरसं यस्मिन् समाधौ तत्र स्थिताः शान्ताः स्तोतारः *"मदि स्तुतिमोद…"* [ *भ्वादि०* ] उपासकाः परमात्मानमासीदन्ति ( एषाम्-अनीकं शवसा प्रदविद्युतत् ) एषां मुखमात्मबलेन तेजसा प्रकाशयति ( मनवे-आर्यं स्वः-ज्योतिः-विदत् ) मननशीलाय श्रेष्ठं सुखप्रदं ज्ञानज्योतिः प्राप्नोति ॥ ४ ॥

भाषान्वयार्थ—( वयः-न सुपलाशं वृक्षम्-आसदन् ) पक्षी जैसे सुन्दर–हरे भरे पत्तों वाले वृक्ष पर बैठते हैं उसी भांति ( चमूषदः सोमासः-मन्दिनः-इन्द्रम् ) अध्यात्मरस का आस्वादन कराने वाली समाधि में स्थित शान्त, स्तुति करने वाले उपासक परमात्मा को आश्रित करते हैं ( एषाम्-अनीकं शवसा प्रदविद्युतत् ) इनका मुख आत्मबल अर्थात् आत्मतेज से प्रकाशित हो जाता है ( मनवे-आर्यं स्वः-ज्योतिः-विदत् ) मननशील के लिए श्रेष्ठ और सुखद ज्योति प्राप्त हो जाती है ॥ ४ ॥

भावार्थ—जैसे पक्षी हरे भरे सुन्दरपत्तों वाले वृक्ष पर बैठ कर आनन्द लेते हैं ऐसे स्तुति करने वाले उपासक समाधिस्थ, शान्त हो परमात्मा के आश्रय में आनन्द लेते हैं। उनका मुख आत्मतेज से दीप्त हो जाता है–प्रभावशाली बन जाता है और उन्हें श्रेष्ठ सुखद ज्ञानज्योति प्राप्त हो जाती है ॥ ४ ॥

**कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।**
**न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥ ५ ॥**

कृतम् । न । श्वऽघ्नी । वि । चिनोति । देवने । सम्ऽवर्गम् । यत् । मघऽवा । सूर्यम् । जयत् । न । तत् । ते । अन्यः । अनु । वीर्यम् । शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥ ५ ॥

संस्कृतान्वयार्थः—( श्वघ्नी कृतं न विचिनोति ) श्वहन्ता वृकः कृतं प्रहृतं यथा स्वाधीनं करोति ( यत्-मघवा देवने संवर्गं सूर्यं जयत् ) यत्–यथा तथा "ऐश्वर्यवान् परमात्मा प्रकाशस्य वर्जयितारं प्रसारयितारं प्रकाशकरणे सूर्यमभिभवति–स्वाधीनी करोति *"जि-अभिभवे"* [ *भ्वादि०* ] ( तत्-ते-अन्यः-अनुवीर्यं शकत् ) यथा तव वीर्यमनुकर्त्तुं शक्नोति ( मघवन् ) हे परमात्मन् ! ( न पुराणः-न-उत नूतनः ) स एषः सूर्यो न पूर्वकालीनो नावरकालीनः ॥ ५ ॥

भाषान्वयार्थ—( श्वघ्नी कृतं न विचिनोति ) भेड़िया अपने प्रहार किये हुए–मारे हुए प्राणी को जैसे स्वाधीन करता है ( यत् मघवा देवने संवर्गं सूर्यं जयत् ) वैसे ही ऐश्वर्यवान् परमात्मा प्रकाश करने के लिए प्रकाश को छोड़ने वाले–बिखेरने वाले सूर्य को स्वाधीन करता है ( तत्-ते-अन्यः अनुवीर्यं शकत् ) तदनन्तर ही वह तुझसे भिन्न सूर्य तेरे अनुकूल वीर्य तेज करने में

समर्थ होता है ( मघवन् ) हे परमात्मन् ! ( न पुराणः-न-उत नूतनः ) वह सूर्य न तेरे जैसा पूर्ववर्त्ती है और न अन्य वस्तुओं जैसा नवीन है—पश्चाद्वर्त्ती है ॥ ५ ॥

भावार्थ— परमात्मा के अधीन बड़े बड़े शक्तिशाली सूर्य जैसे पिण्ड हैं जो सूर्य ब्रह्माण्ड में प्रकाश फेंकता है वह परमात्मा के अधीन होकर ही फेंकता है। सूर्य शाश्वतिक नहीं है, न अन्य जड़ वस्तुओं जैसा अर्वाचीन है, क्योंकि उसके प्रकाश से ही वनस्पति आदि जीवन धारण करती हैं ॥ ५ ॥

**विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा ।**

**यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥ ६ ॥**

विशम्ऽविशम् । मघऽवा । परि । अशायत । जनानाम् । धेनाः । अवऽचाकशत् । वृषा । यस्य । अह । शक्रः । सवनेषु । रण्यति । सः । तीव्रैः । सोमैः । सहते । पृतन्यतः ॥ ६ ॥

संस्कृतान्वयार्थः—( मघवा ) ऐश्वर्यवान् परमात्मा ( विशं विशं पर्यशायत ) मनुष्यादिप्राणिमात्रं परिप्राप्नोति ( वृषा जनानां धेनाः-अवचाकशत् ) कामानां वर्षयिता मनुष्याणां स्तुतिवाचः *"धेना वाङ्नाम"* [ *निघ०* १ । ११ ] पश्यति जानाति ( यस्य-अह सवनेषु ) यस्य स्तोतुर्हि स्तुतिप्रसङ्गेषु ( तीव्रैः सोमैः शक्रः-रण्यति ) प्रवृद्धैरुपासनाप्रकारैः शक्तिमान् परमात्मा रमते ( पृतन्यतः-सहते ) तस्य स्तोतुः संग्रामं कुर्वतः कामादीन् शत्रून् सहते-अभिभवति-नाशयति ॥ ६ ॥

भाषान्वयार्थ—( मघवा ) ऐश्वर्यवान् परमात्मा ( विशं विशं पर्यशायत ) मनुष्यादि प्राणिमात्र को प्राप्त है ( वृषा जनानां धेनाः-अवचाकशत् ) कामनाओं का बरसाने वाला मनुष्यों के स्तुतिवचनों को जानता है ( यस्य-अह सवनेषु ) जिस स्तोता के स्तुतिप्रसङ्गों में ( तीव्रैः सोमैः शक्रः-रण्यति ) जिसके प्रवृद्ध उपासनाप्रकारों में शक्तिमान् परमात्मा रमण करता है—प्रसन्न होता है ( पृतन्यतः-सहते ) उस स्तोता के शत्रुओं को—कामादि शत्रुओं को दबाता है—नष्ट करता है ॥ ६ ॥

भावार्थ—परमात्मा प्रत्येक मनुष्यादि प्राणी का अन्तःसाक्षी है, वह स्तुतिकर्ता मनुष्य की स्तुतिवाणी को जानता है। वह समस्त स्तुतिप्रसङ्गों में रमण करता है। स्तुति करने वाले के कामादि शत्रुओं को नष्ट करता है ॥ ६ ॥

**आपो न सिन्धुमभि यत्समक्षरन्त्सोमास इन्द्रं कुल्या इव ह्रदम् ।**

**वर्धन्ति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥ ७ ॥**

आपः । न । सिन्धुम् । अभि । यत् । सम्ऽअक्षरन् । सोमासः । इन्द्रम् । कुल्याःऽइव । ह्रदम् । वर्धन्ति । विप्राः । महः । अस्य । सदने । यवम् । न । वृष्टिः । दिव्येन । दानुना ॥ ७ ॥

**संस्कृतान्वयार्थः**—( आपः-न सिन्धुं यत् ) जलप्रवाहा नद्यः समुद्रं प्रति यथा ( कुल्याः-इव ह्रदम् ) नदीकुले भवाः कृत्रिमा अल्पनद्यः *"अल्पनद्यः-निर्मिता जलगमनमार्गाः"* [ *ऋ० ५ । ८३ । ८ दयानन्दः* ] यथा महान्तं जलाशयम् ( समभ्यक्षरन् ) अभिलक्ष्य संवहन्ति, तद्वत् ( सोमासः-इन्द्रम् ) उपासकानामुपासनाप्रवाहाः परमात्मानमभिलक्ष्य संवहन्ति सम्प्राप्ता भवन्ति, नान्यथा भवन्ति ( सदने-अस्य महः ) सदने हृदये 'अस्य'-इमम् 'विभक्तिव्यत्ययेन' महान्तं परमात्मानमभिलक्ष्य ( विप्राः-वर्धन्ति ) उपासक-विद्वांसो वर्धयन्ति-प्रवृद्धं कुर्वन्ति ( वृष्टिः-दिव्येन दानुना यवं न ) यद्वा यथा वर्षणशीलो मेघः *"वृषु सेचने"* [ *भ्वादिः* ] 'ततः क्तिच् कर्त्तरि तथा कृत्वाऽन्तोदात्तः' आकाशभवेन जलप्रदानेनान्नं वर्धयन्ति ॥ ७ ॥

**भाषान्वयार्थ**—( आपः-न सिन्धुं यत् ) जल प्रवाह नदियां जैसे समुद्र के प्रति ( कुल्याः-इव ह्रदम् ) या जैसे नहरें बड़े जलाशय या बड़ी नदियों के प्रति ( समभ्यक्षरन् ) अभिलक्षित होकर बहती हैं, ऐसे ही ( सोमासः-इन्द्रम् ) उपासकों के उपासनारसप्रवाह परमात्मा के प्रति बहते हैं ( सदने-अस्य महः ) हृदय में इस महान् परमात्मा को ( विप्राः-वर्धन्ति ) उपासक बढ़ाते हैं—साक्षात् करते हैं ( वृष्टिः-दिव्येन दानुना यवं न ) या जैसे वर्षणशील मेघ जल प्रदान से खेती के अन्न को बढ़ाता है ॥ ७ ॥

**भावार्थ**—नदियां जैसे समुद्र को और नहरें जैसे बड़े जलाशय अथवा नदी को प्राप्त होती हैं ऐसे ही उपासकों के उपासनाप्रवाह परमात्मा को प्राप्त होते हैं। और वे उपासना प्रवाह उपासकों के अन्दर परमात्मा को प्रवृद्ध करते हैं जैसे मेघजल से खेती के अन्न प्रवृद्ध होते हैं ॥ ७ ॥

**वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।**
**स सुन्वते मघवा जीरदानवेऽविन्दज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥**

वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः । सः । सुन्वते । मघऽवा । जीरऽदानवे । अविन्दत् । ज्योतिः । मनवे । हविष्मते ॥ ८ ॥

**संस्कृतान्वयार्थः**—( क्रुद्धः-वृषा न रजःसु पतयत् ) बलेन संवृद्धो वृषभो यथा धूलिषु मृत्कणेषु पतति, तद्वत् ( यः-इमाः-अपः-अर्यपत्नीः-आकृणोत् ) य आप्तान् मनुष्यान् प्रापण-शीलानुपासकान् *"मनुष्या वा आपश्चन्द्राः"* [ *श० ७ । ३ । १ । २०* ] अर्यस्य स्वस्य पालयितव्याः प्रजाः स्वीकरोति तस्मात्तद्विरोधिकामादिशत्रुषु पतति ताडयति,

अत एव ( सः-मघवा ) स ऐश्वर्यवान् परमात्मा ( हविष्मते ) आत्मवते *"आत्मा वै हविः"* *[ काठ० ८ । ५ ]* ( मनवे ) मननकर्त्रे ( सुन्वते ) उपासनारसं निष्पादयते ( जीरदानवे ) जीवनदात्रे ( ज्योतिः अविन्दत् ) स्वज्योतिः स्वरूपं प्रापयति ॥ ८ ॥

**भाषान्वयार्थ**—( क्रुद्धः-वृषा न रजःसु पतयत् ) बल से बढ़ा हुआ वृषभ जैसे धूलिकणों में गिरता है–बल से धूलि को कुरेदता है, उसी भांति ( यः-इमाः-अपः-अर्यपत्नीः-आकृणोत् ) जो इन प्रापणशील उपासक आप्तजनों को, अपनी पालन करने योग्य प्रजाओं को स्वीकार करता है–अपनाता है, उनके विरोधी कामादि शत्रुओं पर प्रहार करता है ( सः-मघवा ) वह ऐश्वर्यवान् परमात्मा ( हविष्मते ) आत्मवान् ( मनवे ) मननशील ( सुन्वते ) उपासनारस निष्पादन करने वाले ( जीरदानवे ) जीवनदाता के लिए ( ज्योतिः-अविन्दत् ) स्वज्योति–अपने स्वरूप को प्राप्त करता है ॥ ८ ॥

**भावार्थ**—परमात्मा अपने उपासकों को अपनाता है उनके अन्दर से उनके कामादि शत्रुओं को ऐसे उखाड़ फेंकता है जैसे बलवान् वृषभ पृथिवीस्तर से धूलिकणों को उखाड़ फेंकता है। उसका स्वभाव है आत्मसमर्पी उपासनारस सम्पादन करने वाले, अन्यों को जीवन देने वाले के लिए अपनी ज्योति–अपने स्वरूप को प्राप्त कराता है ॥ ८ ॥

उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत् ।
वि रोचतामरुषो भानुना शुचिः स्वर्ण शुक्रं शुशुचीत सत्पतिः ॥ ९ ॥

उत् । जायताम् । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य । सुऽदुघा । पुराणऽवत् । वि । रोचताम् । अरुषः । भानुना । शुचिः । स्वः । न । शुक्रम् । शुशुचीत । सत्ऽपतिः ॥ ९ ॥

**संस्कृतान्वयार्थः**—( ऋतस्य ) अमृतरूपस्य परमात्मनः *"ऋतममृतमित्याह"* [ *जै० २ । १६० ]* ( परशुः ) उपासकस्य परान् शत्रून् शृणाति हिनस्ति येन सः *"आङ्परयोः खनिशृभ्यां डिच्च-उः" [ उणादि० १ । ३३ ]* ( ज्योतिषा सह ) स्वतेजसा सहास्ति ( सुदुघा पुराणवत् ) सुदोहनरूपा सुखदोग्ध्री पूर्ववत्–शाश्वतिकी (भूयाः) भूयात् "पुरुषव्यत्ययः" ( अरुषः-भानुना रोचताम् ) समन्तात् प्रकाशमानः स परमात्मा स्वेन प्रकाशेनास्मासु प्रकाशताम् ( सत्पतिः-स्वः-न शुचिः-शुक्रं शुशुचीत ) स सतां पालकः सूर्य इव शुभ्रं तेजो भृशं प्रकाशयेत् ॥ ९ ॥

**भाषान्वयार्थ**—( ऋतस्य ) अमृतरूप परमात्मा का ( परशुः ) उपासक के शत्रुओं को हिंसित करने वाला गुण ( ज्योतिषा सह ) अपने तेज के साथ है ( सुदुघा पुराणवत् ) सुदोहन–सुखदोहन वाली कृपा पूर्ववत् ( भूयाः ) होवे ( अरुषः-भानुना रोचताम् ) सब ओर से प्रकाशमान परमात्मा अपने प्रकाश से हमारे अन्दर प्रकाशित हो ( सत्पतिः-स्वः-न शुचिः-शुक्रं शुशुचीत ) वह सत्पुरुषों का पालक सूर्य के समान अपने शुभ्र तेज को बहुत प्रकाशित करे ॥ ९ ॥

भावार्थ—परमात्मा अपने उपासकों के कामादि शत्रुओं को अपने तेज से नष्ट करता है। दूध देने वाली गौ की भांति उसकी कृपा अमृतपान कराती है। और वह हमारे अन्दर अपने तेजस्वरूप का दर्शन भी कराता है॥ ९॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम्।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम॥ १०॥
बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु॥ ११॥

एतौ द्वौ मन्त्रौ प्रागेव द्वाचत्वारिंशे सूक्ते व्याख्यातौ॥

इन दोनों मन्त्रों की व्याख्या पहिले ही बयालीसवें सूक्त में की जा चुकी है।



# चतुश्चत्वारिंशं सूक्तम्

ऋषिः—कृष्ण आङ्गिरसः ।

देवता—इन्द्रः ।

छन्दः—१ पादनिचृत् त्रिष्टुप् । २, १० विराट् त्रिष्टुप् । ३, ११ त्रिष्टुप् । ४ विराड् जगती । ५-७, ९, पादनिचृज्जगती । ८ निचृज्जगती ॥

स्वरः—१-३, १०, ११ धैवतः । ४-९ निषादः ।

विषय—अत्र सूक्ते 'इन्द्र' शब्देन परमेश्वरो राजा च गृह्येते । परमेश्वरः स्वोपासकानां कामादीन् नाशयति, मोक्षे गृह्णाति संसारे च रक्षति सुखं प्रयच्छति । एवं राजा स्वप्रजानां बाधकान् नाशयति ताभ्यः स्वराष्ट्रे सुखं प्रयच्छति रक्षति च ताः । इति प्राधान्येन वर्णनमस्ति ।

इस सूक्त में 'इन्द्र' शब्द से परमेश्वर और राजा वर्णित हैं । परमात्मा अपने उपासकों के कामादि शत्रुओं को नष्ट करता है, मोक्ष में ग्रहण करता है, संसार में रक्षा करता है, सुख देता है तथा राजा प्रजाओं की बाधाओं को नष्ट करता है सुख देता है, रक्षा करता है इत्यादि का प्रमुख-तया वर्णन है ।

आ यात्विन्द्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान् ।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥ १ ॥

आ । यातु । इन्द्रः । स्वऽपतिः । मदाय । यः । धर्मणा । तूतुजानः । तुविष्मान् ।
प्रऽत्वक्षाणः । अति । विश्वा । सहांसि । अपारेण । महता । वृष्ण्येन ॥ १ ॥

**संस्कृतान्वयार्थः**—( इन्द्रः ) ऐश्वर्यवान् परमात्मा राजा वा ( स्वपतिः ) स्वभूतस्य जगतो यद्वा स्वभूतस्य राष्ट्रस्य स्वामी ( मदाय-आयातु ) उपासकानामानन्दप्रदानाय साक्षाद्भवतु, प्रजाजनानामानन्ददानाय राजपदे प्राप्नोतु ( यः-धर्मणा )

यः खलु धारकगुणेन न्यायगुणेन वा ( तूतुजानः ) उपासकानाददानः, प्रजाजनानाददानः-स्वीकुर्वन् "तुज् हिंसाबलादाननिकेतनेषु" [ चुरादि० ] "ततः कानच् प्रत्ययश्छान्दसः" ( तुविष्मान् ) प्रशस्तवृद्धिशक्तिमान् "तु गतिवृद्धिहिंसासु" [ अदादि० ] "ततो बाहुलकादौणादिक इसि प्रत्ययः, स च कित्" [ ऋ० १ । ५५ । १ दयानन्दः ] 'प्रशंसार्थे मतुप्', तथा ( विश्वा सहांसि ) सर्वाणि-उपासकानां कामादिशत्रुबलानि "सहः-बलनाम" :[निघ० २ । ९ ] ( अपारेण महता वृष्ण्येन ) केनापि न पारयितुं योग्येन महता नाशनबलेन ( प्रत्वक्षाणः ) नाशयन् साक्षाद् भवतु, राजपदं प्राप्नोतु वा ॥ १ ॥

भाषान्वयार्थ—( इन्द्रः ) ऐश्वर्यवान् परमात्मा वा राजा ( स्वपतिः ) अपने आधीन जगत् का या अपने आधीन राष्ट्र का स्वामी ( मदाय-आयातु ) उपासकों को आनन्द प्रदान करने के लिए साक्षात् होवे, प्रजाजनों को आनन्द प्रदान करने के लिए राजासन को प्राप्त करे (यः-धर्मणा) धारकगुण से या न्याय गुण से ( तूतुजानः ) उपासकों को या प्रजाजनों को स्वीकार करता हुआ ( तुविष्मान् ) प्रशस्त वर्धक शक्तिवाला, तथा ( विश्वा सहांसि ) उपासकों के कामादि सब शत्रुबलों को या प्रजा के सब शत्रुबलों को ( अपारेण महता वृष्ण्येन ) किसी से भी पार न पा सकने वाले नाशन बल से ( प्रत्वक्षाणः ) नाश करता हुआ साक्षात् हो या राजपद पर प्राप्त हो ॥ १ ॥

भावार्थ—परमात्मा अपने उपासकों को स्वीकार करता है और आनन्द देने के लिए उन्हें प्राप्त होता है तथा उनके कामादि शत्रुओं को नष्ट करता है। एवं राजा प्रजाजनों को अपनावे उन्हें सुखी बनावे और उनके शत्रुओं तथा दुःखों को सदा दूर किया करे ॥ १ ॥

**सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ ।**
**शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो वृष्ण्यानि ॥ २ ॥**

सुऽस्थामा । रथः । सुऽयमा । हरी इति । ते । मिम्यक्ष । वज्रः । नृऽपते । गभस्तौ । शीभम् । राजन् । सुऽपथा । आ । याहि । अर्वाङ् । वर्धाम । ते । पपुषः । वृष्ण्यानि ॥ २ ॥

संस्कृतान्वयार्थः—( नृपते राजन् ) हे मुमुक्षुजनानां पालक ! "नरो ह वै देवविशः" [ जै० १ । ८९ ] प्रजाजनानां पालक ! "प्रजा वै नरः" [ ऐ० २ । २४ ] नयनशक्तीनां पालक विद्युत्पदार्थ ! संसारे राजमान ! राष्ट्रे राजमान ! गतिमत्सु कलायन्त्रेषु राजमान ! ( ते ) तव ( रथः ) रमणयोग्यो मोक्षः, गमनशीलं यानम्, गतिपञ्जरो वा ( सुष्ठामा ) सुखस्थानः, सुरक्षास्थितिमान्, सुव्यवस्थितो वा ( हरी सुयमा ) दुःखापहरणसुखाहरणकर्त्तारौ, दयाप्रसादौ, सेनासभाविभागौ, नयनानयनधर्मौ शुष्कार्द्रधारामयौ वा सुनियमेन प्रवर्तमानौ ( गभस्तौ वज्रः-मिम्यक्ष ) बाहौ संसारवहनबले, भुजे, नियन्त्रणे, ओजः "वज्रो वा ओजः [ श० ८ । ४ । १ । २० ] शस्त्रं वा, वर्जनबलं वा प्राप्तं भवेत्

( सुपथा शीभम्-अर्वाङ्-आयाहि ) सुमार्गेण, ध्यानेन, गतिमार्गेण तन्त्रीमार्गेण वा शीघ्र अस्मदभिमुखम्, अत्रत्यं गृहं प्राप्तो भव ( पपुषः-ते वृष्ण्यानि वर्धाम ) उपासनारस-पानकर्त्तुः, सोम्यानन्दरसपानकर्त्तुः द्रवपदार्थपानकर्त्तुस्तव बलानि स्वस्मिन् वर्धयामः ॥ २ ॥

भाषान्वयार्थ—( नृपते राजन् ) हे मुमुक्षुजनों के पालक ! सर्वत्र राजमान परमात्मन् ! या प्रजाजनों के पालक राजन् ! तथा गतिशक्तियों के पालक धारक विद्युत् पदार्थ ! कलायन्त्र में प्रकाशमान ! ( ते ) तेरा ( रथः ) रमणयोग्य मोक्ष या गमनशील यान अथवा गतिपिञ्जर ( सुष्ठामा ) सुखस्थान, सुरक्षितस्थितिमान्, सुव्यवस्थित ( हरी सुयमा ) दुःखापहरण और सुखाहरणकर्ता, दया और प्रसाद, सेनाविभाग और सभाविभाग, तथा शुष्क और आर्द्र धारायें, सुनियम से प्रवर्तमान ( गभस्तौ वज्रः-मिम्यक्ष ) बाहु में—संसारवहनबल में, या भुजा में तथा नियन्त्रण में ओज या शस्त्र अथवा वर्जनबल प्राप्त हो ( सुपथा-शीभम्-अर्वाङ्-आयाहि ) सुमार्ग से—ध्यान से, गतिमार्ग से, तारमार्ग के द्वारा शीघ्र हमारी ओर इस घर में प्राप्त हो ( पपुषः-ते वृष्ण्यानि वर्धाम ) उपासनारसपानकर्त्ता के, सोम्यानन्दरसपानकर्त्ता के, द्रवपदार्थपानकर्त्ता के तेरे बलों को अपने में बढ़ावें ॥ २ ॥

भावार्थ—मुमुक्षुओं का पालक परमात्मा अपनी कृपा और प्रसाद से उपासकों के अन्दर अध्यात्ममार्ग द्वारा प्राप्त होता है। एवं प्रजा का पालक राजा अपने सेनाविभाग और सभाविभाग के द्वारा प्रजाओं का हित चाहता हुआ यानादि द्वारा उनमें प्राप्त होता है। इसी प्रकार गतिशक्तियों का रक्षक अपनी दो धाराओं के द्वारा किसी कलायन्त्र में उपयुक्त और प्रयुक्त होता है ॥ २ ॥

एन्द्र॑वाहो॑ नृप॑तिं॒ वज्र॑बाहुमु॒ग्रमु॒ग्रास॑स्तवि॒षास॑ एनम् ।
प्रत्व॑क्षसं वृ॒ष॒भं स॒त्यशु॑ष्म॒मेम॑स्म॒त्रा स॑ध॒मादो॑ वहन्तु ॥ ३ ॥

आ । इ॒न्द्र॒ऽवाहः॑ । नृ॒ऽपति॑म् । वज्र॑ऽबाहुम् । उ॒ग्रम् । उ॒ग्रासः॑ । त॒वि॒षासः॑ । ए॒न॒म् । प्रऽत्व॑क्षसम् । वृ॒ष॒भम् । स॒त्यऽशु॑ष्मम् । आ । ई॒म् । अ॒स्म॒ऽत्रा । स॒ध॒ऽमादः॑ । व॒ह॒न्तु ॥ ३ ॥

संस्कृतान्वयार्थः—( अस्मत्रा-इन्द्रवाहः ) अस्मासु—ऐश्वर्यवन्तं परमात्मानं वहन्ति प्रापयन्ति ये ते ( उग्रासः ) तपस्विनः, तेजस्विनो वा ( तविषासः ) आत्मबल-वन्तः, शस्त्रास्त्रबलवन्तो वा ( सधमादः ) सहैव हर्षमनुभवन्तः, उपासकाः, राजकर्मसहा-यकाः, प्रमुखसभासदो वा ( एनं नृपतिम् ) एतं मुमुक्षूणां पालकम्, प्रजाजनानां पालकम् ( वज्रबाहुम् ) ओज एव संसारवहनशक्तिर्यस्य शस्त्रं वा तं तेजस्विनं प्रतापिनं वा ( उग्रम् ) उद्‌गूर्णं प्रवृद्धं वा ( प्रत्वक्षसम् ) विरोधिनो बलहीनकर्त्तारम् ( वृषभम् ) सुखवर्षकम् ( सत्यशुष्मम् ) अविनश्वरात्मबलवन्तं परमात्मानं राजानं वा ( ईम्-आवहन्तु ) अवश्यं समन्तात् प्रापयन्ति, नेतरे ॥ ३ ॥

भाषान्वयार्थ—( अस्मत्रा-इन्द्रवाहः ) हमारे में ऐश्वर्यवान् परमात्मा को प्राप्त कराने

वाले ( उग्रासः ) तपस्वी, तेजस्वी ( तविषासः ) आत्मबलवाले या शस्त्रास्त्रबलवाले ( सधमादः ) साथ ही हर्ष अनुभव करने वाले उपासक या राजसहायक, प्रमुखसभासद् ( एन नृपतिम् ) इस मुमुक्षुओं के पालक, प्रजाजनों के पालक ( वज्रबाहुम् ) ओज ही जिसकी संसार-वहन शक्ति है उस ओजस्वी परमात्मा को या प्रतापी राजा को ( उग्रम् ) उद्गूर्ण-उत्तम गुण वाले या बढ़े-चढ़े राजा को ( प्रत्वक्षसम् ) विरोधी को बलहीन करने वाले-( वृषणम् ) सुख-वर्षक-( सत्यशुष्मम् ) अविनश्वर आत्मबल वाले परमात्मा या राजा को ( ईम्-आवहन्तु ) अवश्य भलीभांति प्राप्त करते हैं, दूसरे नहीं ॥ ३ ॥

भावार्थ—उत्तम गुण वाले परमात्मा को तपस्वी उपासक प्राप्त करते हैं, दूसरे नहीं। ऐसे ही प्रतापी राजा को तेजस्वी सहायक कर्मचारी अपने अनुकूल बनाते हैं ॥ ३ ॥

एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कम्भं धरुण आ वृषायसे ।
ओजः कृष्व सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे ॥ ४ ॥

एव । पतिम् । द्रोणऽसाचम् । सऽचेतसम् । ऊर्जः । स्कम्भम् । धरुणे । आ । वृषऽयसे । ओजः । कृष्व । सम् । गृभाय । त्वे इति । अपि । असः । यथा । केऽनिपानाम् । इनः । वृधे ॥ ४ ॥

संस्कृतान्वयार्थः—( एव ) अत एव यतस्त्वम् ( धरुणे-आवृषायसे ) संसारस्य राष्ट्रस्य वा धारणनिमित्तं बलं प्रसारयसि, तस्मात् त्वाम् ( द्रोणसाचम् ) द्रवन्ति कर्मकरणाय प्राणिनः प्रजाजनाश्च यस्मिन् तस्य संसारस्य राष्ट्रस्य वा साचयितारं गमयितारं चालयितारम् *"सचति गतिकर्मा"* [ *निघ० २ । १४* ] ( सचेतसम् ) सर्वज्ञं सदा सावधानं वा ( ऊर्जः स्कम्भम् ) बलस्य बलवतश्चाधारभूतम् ( पतिम् ) पालकं त्वां परमात्मानं राजानं वा वयमुपास्महे सेवामहे वेति शेषः ( संगृभाय ) त्वमस्मान् स्वस्मिन् स्वाधारे वा सम्यक् गृहाण ( ओजः कृष्व ) अस्मासु-अध्यात्मबलं साहसं वा सम्पादय ( त्वे-अपि ) वयं त्वयि-आश्रिताः स्मः ( यथा केनिपानां वृधे-इनः-असः ) यतो हि त्वमस्माकं मेधाविनां स्तोतॄणां प्रशंसकानां वा *"केनिपः-मेधाविनाम"* [ *निघ० ३ । १५* ] वृद्ध्ये-ईश्वरः-स्वामी *"इन ईश्वरनाम"* [ *निघ० २ । २३* ] असि ॥ ४ ॥

भाषान्वयार्थ—( एव ) अत एव जिससे कि तू ( धरुणे-आवृषायसे ) संसार या राष्ट्र के धारण करने के निमित्त बल का प्रसार करता है, उसी कारण तुझ-( द्रोणसाचम् ) कर्म करने के लिए गति करते हैं जिसमें प्राणी या प्रजायें उस संसार या राष्ट्र के संचालन करने वाले—( सचेतसम् ) सर्वज्ञ या सावधान-( ऊर्जः-स्कम्भम् ) बल या बलवानों के आधारभूत-( पतिम् ) पालक परमात्मा या राजा की हम उपासना करते हैं या सेवा करते हैं ( संगृभाय ) तू हमें अपने में या अपने सहारे में स्वीकार कर ( ओजः कृष्व ) हमारे में अध्यात्मबल या साहस को सम्पादित कर ( त्वे-अपि ) हम तुझ में-तेरे आश्रित हैं ( यथा केनिपानां वृधे-इनः-असः ) जिससे तू मेधावी स्तुतिकरने वालों या प्रशंसकों का स्वामी है ॥ ४ ॥

भावार्थ—परमात्मा संसार का संचालक तथा सर्वज्ञ, वलों का आधार और हमारा रक्षक है, स्वामी है । हमें उसकी उपासना करनी चाहिये । एवं राजा–राष्ट्र के संचालक को प्रत्येक गतिविधि में सावधान, सैन्य आदि वलों का रखने वाला और प्रजापालक होना चाहिए ॥ ४ ॥

गमन्नुस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः ।

त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा ॥ ५ ॥

गमन् । अस्मे इति । वसूनि । आ । हि । शंसिषम् । सुऽआशिषम् । भरम् । आ । याहि । सोमिनः । त्वम् । ईशिषे । सः । अस्मिन् । आ । सत्सि । बर्हिषि । अनाधृष्या । तव । पात्राणि । धर्मणा ॥ ५ ॥

संस्कृतान्वयार्थः—( अस्मे वसूनि हि-आगमन् ) अस्मभ्यं वासयोग्यानि धनान्यवश्यमागच्छन्तु–प्राप्नुवन्तु ( सु-आशिषं शंसिषम् ) शोभनं प्रार्थनावचनं प्रशंसामि ( सोमिनः-भरम्-आयाहि ) उपासनारस–समर्पिणः, उपहारसमर्पिणो वा अध्यात्मभावं भरन्ति यस्मिन्, तस्मिन् हृदये प्राप्नुहि, यद्वा-ऐश्वर्यभरे राष्ट्रपदे प्राप्नुहि ( सः-अस्मिन्-बर्हिषि-आसत्सि ) स त्वमस्मिन् हृदयावकाशे–हृदयासने राजपदे वा विराजस्व ( तव पात्राणि-अनाधृष्या ) तव वयं श्रद्धावन्तः पात्रभूताः स्तोतारः प्रशंसकाः प्रजाजना वा त्वयि स्थिताः केनापि पीडयितुं विचालयितुं न शक्याः ॥ ५ ॥

भाषान्वयार्थ—( अस्मे वसूनि हि-आगमन् ) हमारे लिए वासयोग्य धन अवश्य प्राप्त हों, अतः ( सु आशिषं शंसिषम् ) शोभन प्रार्थनावचनों से प्रशंसा करता हूँ ( सोमिनः-भरम्-आयाहि ) उपासना–रससमर्पी अथवा उपहार समर्पण करने वाले जिसमें अध्यात्मभाव को भरते हैं, उस हृदय में प्राप्त हो अथवा ऐश्वर्य–धनसम्पत्ति से भरपूर राष्ट्रपद पर प्राप्त हो ( सः-अस्मिन् बर्हिषि-आसत्सि ) वह तू इस हृदयावकाश-हृदयासन में या राजपद पर विराजमान हो ( तव पात्राणि-अनाधृष्या ) हम तेरे श्रद्धावान्, पात्रभूत, स्तोता, प्रशंसक या प्रजाजन तेरे सहारे में स्थित हुए, किसी से भी पीड़ित या विचलित नहीं किये जा सकते हैं ॥ ५ ॥

भावार्थ—परमात्मा की उपासना करने वालों के समीप आवश्यक वस्तुएं प्राप्त हो जाती हैं और परमात्मा भी उनके हृदय में साक्षात् हो जाता है । कोई बाधक कामादि दोष परमात्मा से उन्हें विचलित नहीं कर सकता है एवं प्रजाजन जब राजा के शासन के अनुकूल चलते हैं तो सुख-साधन वस्तुएं उन्हें सुगमतया प्राप्त हो जाती हैं । उनके मध्य में राजा राजपद पर विराजमान होकर उनकी पूरी रक्षा करता है । राजा के रक्षण से उन्हें कोई हटा नहीं सकता ॥ ५ ॥

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।

न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥ ६ ॥

पृथक् । प्र । आयन् । प्रथमाः । देवऽहूतयः । अकृण्वत । श्रवस्यानि । दुस्तरा । न । ये । शेकुः । यज्ञियाम् । नावम् । आऽरुहम् । ईर्मा । एव । ते । नि । अविशन्त । केपयः ॥ ६ ॥

**संस्कृतान्वयार्थः**—( प्रथमाः ) श्रेष्ठजनाः ( देवहूतयः ) दिव्यगुणान् देवधर्मान् मुमुक्षुगुणानाह्वयन्ति निजान्तःकरणे समवेतानि कुर्वन्ति ये ते स्तोतारः ( श्रवस्यानि दुष्टरा-अकृण्वत ) श्रवणीयानि श्रवणमनननिदिध्यासनसाक्षात्काराख्यानि–अन्यैरप्रथमैर-श्रेष्ठैर्दुरनुकरणीयानि 'क्षुरस्य धारेव दुरत्ययानि' कुर्वन्त्यनुतिष्ठन्ति, ते ( पृथक् प्रायन् ) संसारनद्याः पृथक् प्रथितं पारं मोक्षधाम प्राप्नुवन्ति । येऽप्रथमा अश्रेष्ठाः ( केपयः ) कुत्सितस्य शोधनीयकर्मणः कर्त्तारः "*केपयः कपूया भवन्ति, कपूयमिति पुनाति कर्म कुत्सितम्*" [ *निरु० ५ । २४* ] ( ये यज्ञियां नावम्-आरुहं न शेकुः ) ये खलु–अध्यात्मयज्ञसम्बन्धिनीं नावमुपासनामारोढुं न शक्नुवन्ति ( ते-ईर्मा-एव न्यवशिन्त ) ते–इहैव लोके निविशन्ते, यद्वा "*ऋणे हैव, ऋणे हैव*" [ *निघ० ५ । २४* ] पितृणनिवारणव्यवहारे पुत्रोत्पत्तिकरणे गृहस्थे निविशन्ते, न मोक्षभाजो भवन्ति ॥ ६ ॥

**भाषान्वयार्थ**—( प्रथमाः ) श्रेष्ठ (देवहूतयः) दिव्यगुणों, मुमुक्षुगुणों को अपने अन्तःकरण में ले आने वाले–बिठा लेने वाले स्तुतिकर्ताजन ( श्रवस्यानि दुष्टरा-अकृण्वत ) श्रवणीय अर्थात् श्रवण-मनन निदिध्यासन–साक्षात्कार–नामक जो अन्य अश्रेष्ठ लोगों द्वारा आचरण में लाने के लिए दुस्तर हैं, छुरी की धारा के समान हैं, उन्हें वे श्रेष्ठजन सेवक करते हैं ( पृथक् प्रायन् ) संसारनदी से पृथक्–प्रथित पार अर्थात् मोक्षधाम को प्राप्त करते हैं। और जो अप्रथम-अश्रेष्ठ ( केपयः ) कुत्सित, शोधने योग्य कर्म के करने वाले हैं ( ये यज्ञियां नावम्-आरुहं न शेकुः ) जो अध्यात्मयज्ञसम्बन्धी नौका–उपासनारूप नौका पर आरोहण नहीं कर सकते ( ते-ईर्मा-एव न्यविशन्त ) वे इसी लोक में निविष्ट रहते हैं या पितृ ऋण के चुकाने में अर्थात् पुत्र पौत्र आदि उत्पन्न करने कराने में लगे रहते हैं, वे मोक्षभागी नहीं बनते ॥ ६ ॥

**भावार्थ**—अध्यात्मगुणों को धारण करने वाले मुमुक्षु जन ऊंचे उठते हुए संसार नदी को पार करके मोक्षधाम को प्राप्त होते हैं। निकृष्ट जन उन दिव्यगुणों को धारण करने में असमर्थ होकर इसी संसार में जन्मजन्मान्तर धारण करते रहते हैं, पुत्रादि के मोह में पड़े रहते हैं ॥ ६ ॥

**एवैवापागपरे सन्तु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे ।**
**इत्था ये प्रागुपरे सन्ति दावने पुरूणि यत्र वयुनानि भोजना ॥ ७ ॥**

एव । एव । अपाक् । अपरे । सन्तु । दुःऽध्यः अश्वाः । येषाम् । दुःऽयुजः । आऽयुयुज्रे । इत्था । ये । प्राक् । उपरे । सन्ति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥ ७ ॥

**संस्कृतान्वयार्थः**—( एव-एव ) एवमेव ( अपरे दूढ्यः-अपाक् सन्तु ) अन्ये दुर्धियो दुर्बुद्धयः *"दूढ्यो दुर्धियः पापधियः"* [ *निरु० ५ । २३* ] पापसङ्कल्पा जना नीचैर्गता भवन्ति ( येषाम्-अश्वाः-दुर्युजः-आयुयुज्रे ) येषां हि खल्विन्द्रियरूपा अश्वा विषयेषु व्यापिनः *"इन्द्रियाणि हयानाहुः"* [ *कठो० १-३-४* ] दुःखेन योक्तुं शक्या असंयता आयुज्यन्ते तथा सन्ति (उपरे ये प्राक् इत्था सन्ति) ये उपरः-उपरा.-उपरता 'विभक्तिव्यत्ययः, उपपूर्वक रमधातोः डः प्रत्ययः' परमात्मानं सम्मुखं लक्ष्यीकृत्य सत्यमननभाषणकर्माचरणवन्तः *"इत्था सत्यनाम"* [ *निघ० ३ । १०* ] सन्ति ( यत्र दावने पुरूणि वयुनानि भोजना ) यत्रानन्ददातरि खल्वानन्दाश्रये मोक्षे बहुविधानि अनन्तानि वा प्रज्ञानानि–अनुभववेद्यानि वा भोक्तव्यानि सुखानि भोगवस्तूनि वा विद्यन्ते तत्र गच्छन्ति ॥ ७ ॥

भाषान्वयार्थ—( एव-एव ) इसी प्रकार ( अपरे-दूढ्यः अपाक् सन्तु ) अन्य दुर्बुद्धि, पापसङ्कल्पी जन नीचगति को पाते हैं ( येषाम्-अश्वाः-दुर्युजः-आयुयुज्रे ) जिनके इन्द्रियरूपी अश्व विषयव्यापी हैं, कठिनाई से उपयोग में लेनें योग्य हैं—असंयत हैं, तथा ( उपरे ये प्राक्-इत्था सन्ति ) जो उपरत हैं, परमात्मा को लक्ष्य कर सत्यमानी, सत्यभाषी, सत्यकारी हैं, वे ( यत्र दावने पुरूणि वयुनानि भोजना ) जहाँ पर, आनन्दाश्रय मोक्ष में बहुत प्रकार के या अनन्त प्रज्ञान, अनुभवयोग्य सुख हैं वहाँ जाते हैं ॥ ७ ॥

भावार्थ—विषयलोलुप असंयमी जन दुर्बुद्धि, नीचगति को प्राप्त होते हैं परन्तु विषयों से उपरत वैराग्यवान् उपासनाशील अनन्त आनन्द से पूर्ण मोक्ष को प्राप्त होते हैं ॥ ७ ॥

**गिरीँरज्राँ रेजमानाँ अधारयद् द्यौः क्रन्ददन्तरिक्षाणि कोपयत् ।**
**समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥८॥**

गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रन्दत् । अन्तरिक्षाणि । कोपयत् । समीचीने इति सम्ऽईचीने । धिषणे इति । वि । स्कभायति । वृष्णः । पीत्वा । मदे । उक्थानि । शंसति ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अज्रान्-रेजमानान्-गिरीन्-अधारयत् ) स इन्द्र ऐश्वर्यवान् परमात्मा गतिशीलान् कम्पयमानान् मेघान् पृथिव्यां धारयति पातयतीत्यर्थः ( द्यौः-क्रन्दत्-अन्तरिक्षाणि कोपयत् ) विद्युदिव कम्पयन्-गर्जन्नन्तरिक्षस्थानि लोकलोकान्तराणि कोपयति चेतयति गतिं कर्त्तुम् ( समीचीने धिषणे विष्कभायति ) सम्मुखीभूते द्यावापृथिव्यौ *"धिषणे द्यावापृथिवीनाम"* [ *निघ० ३ । १०* ] विशिष्टतया स्कम्भयति स्तम्भयति ( वृष्णः पीत्वा मदे-उक्थानि शंसति ) उपासकानामुपासनाप्रवाहान् पीत्वाऽऽदाय स्वकीयमदे-आनन्ददानाय वेदवचनानि प्रवक्ति ॥ ८ ॥

भाषान्वयार्थ—( अज्रान्-रेजमानान् गिरीन्-अधारयत् ) वह इन्द्र परमेश्वर गतिशील कम्पमान मेघों को पृथिवी पर गिराता है ( द्यौः-क्रन्दत्-अन्तरिक्षाणि कोपयत् ) विद्युत् की

भांति गर्जता हुआ अन्तरिक्षस्थ लोकलोकान्तरों को कुपित करता है गति करने के लिए ( समीचीने निषणे विष्कभायति ) सम्मुख हुए द्यावापृथिवी को विशेषरूप से स्तम्भित करता है—थामता है ( वृष्णः पीत्वा मदे-उक्थानि शंसति ) उपासनाप्रवाहों को पीकर—लेकर—स्वीकार करके आनन्द देने के लिए वेदवचनों का प्रवचन करता है ॥ ८ ॥

भावार्थ—परमात्मा मेघों को बरसाता है, लोकलोकान्तरों को चलाता है, उपासकों के उपासनारसों को स्वीकार कर वेदमन्त्रों का प्रवचन करता है ॥ ८ ॥

इमं बिभर्मि सुकृतं ते अङ्कुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः ॥ ९ ॥

इमम् । बिभर्मि । सुऽकृतम् । ते । अङ्कुशम् । येन । आऽरुजासि । मघऽवन् । शफऽआरुजः । अस्मिन् । सु । ते । सवने । अस्तु । ओक्यम् । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥ ९ ॥

संस्कृतान्वयार्थः—( ते-इमं सुकृतम्-अङ्कुशं बिभर्मि ) हे इन्द्र परमात्मन् ! तव खल्विमं सुसंस्कृतं सुबद्धं सुरचितं सुसिद्धं वा ज्ञानाङ्कुशं वेदशासनमहं धारयामि—आचरामि—सेवे (येन शफारुजः-आरुजासि) येन ज्ञानाङ्कुशेन खुरैरन्यान् रुजन्ति पीडयन्ति, तीक्ष्णखुरवन्तः पशव इव प्रहारका जनास्तान् त्वं पीडयसि ( अस्मिन् सुते सवने ) अस्मिन् निष्पादितेऽध्यात्मरसस्थाने हृदये ( ते सु-ओक्यम्-अस्तु ) तव शोभनं स्थानम्—ओको गृहमेवौक्यमस्तु ( मघवन् ) हे ऐश्वर्यवन् ! परमात्मन् ! ( इष्टौ-आभगः-बोधि ) अध्यात्मेष्टौ समन्ताद् भजनीयस्त्वमस्माकं स्तुतिप्रार्थनां बोधयसि—पूरय ॥ ९ ॥

भाषान्वयार्थ—( ते-इमं सुकृतम्-अङ्कुशं बिभर्मि ) हे परमात्मन् ! तेरे इस सुसंस्कृत, सुबद्ध, सुरचित, सुसिद्ध, ज्ञानाङ्कुश वेदशासन को मैं धारण करता हूं—आचरण में लाता हूँ ( येन शफारुजः-रुजासि ) जिस ज्ञानाङ्कुश से, अपने खुरों से पीड़ा देने वाले—तीक्ष्ण खुरों वाले पशुओं की भांति प्रहारक जनों को तू पीड़ित करता है ( अस्मिन् सुते सवने ) इस निष्पादित अध्यात्मरसस्थान हृदय में ( ते सु-ओक्यम्-अस्तु ) तेरा शोभन स्थान घर है ( मघवन् ) हे ऐश्वर्यवन् परमात्मन् ! (इष्टौ-आभगः-बोधि ) अध्यात्मयज्ञ में भलीभांति तू हमारा भजनीय हुआ स्तुति प्रार्थना को जान—पूरा कर । ९ ॥

भावार्थ—परमात्मा ने समस्त मनुष्यों को ठीक मार्ग में चलने के लिए वेदज्ञान का उपदेश दिया है । उससे विपरीत चलने वालों को वह दण्ड देता है किन्तु जो उसके अनुसार आचरण करते हैं, उसकी उपासना करते हैं, उनके हृदयसदन में उन्हें वह साक्षात् होता है । उनकी स्तुति प्रार्थना को पूरा करता है ॥ ९ ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

इदमृग्द्वयं द्वाचत्वारिंशे सूक्ते प्रागेव व्याख्यातम् ॥

इन दोनों मन्त्रों की व्याख्या बयालीसवें सूक्त में पहिले ही की जा चुकी है ।



# पञ्चचत्वारिंशं सूक्तम्

ऋषिः—वत्सप्रिर्भालन्दनः ।

देवता—अग्निः ।

छन्दः—१-५, ७ निचृत् त्रिष्टुप् । ६ त्रिष्टुप् । ८ पादनिचृत् त्रिष्टुप् । ९-१२ विराट् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अस्मिन् सूक्ते 'अग्नि' शब्देन सूर्यविद्युदग्नयो गृह्यन्ते, तेषामुत्पत्तिस्थानानि तदुपयोगश्च प्रतिपाद्यते । अन्तिमे मन्त्रषट्के परमात्मा गृह्यते, स च मानवानां कल्याण-साधको यथा यथा भवतीति तदुपदिश्यते ।

इस सूक्त में 'अग्नि' शब्द से सूर्य, विद्युत्, अग्नि, तीनों गृहीत हैं, उनकी उत्पत्ति, विज्ञान और उपयोग बतलाया है । अन्तिम छः मन्त्रों में परमात्मा लिया है, वह जैसे जैसे मनुष्यों का कल्याणसाधक है वह कहा गया है ॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १ ॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परि । जातऽवेदाः । तृतीयम् । अप्ऽसु । नृऽमनाः । अजस्रम् । इन्धानः । एनम् । जरते । सुऽआधीः ॥ १ ॥

**संस्कृतान्वयार्थः**—(अग्निः प्रथमं दिवः-परि जज्ञे) अग्नि-नामकः पदार्थः प्रथमं तु दिवि-द्युलोके *"पञ्चम्याः परावध्यर्थे"* [अष्टा० ८ । ३ । ५१] जातः-जायते सूर्य-रूपेण (जातवेदाः-द्वितीयम्-अस्मत् परि) स एव जातानि वस्तूनि वेद्यन्ते ज्ञायन्ते प्रत्यक्षी-क्रियन्ते खलूपयोगे नीयन्ते येन सोऽस्मासु-अस्माकं निमित्तं पृथिव्यां पार्थिवोऽग्निर्द्वितीयं जज्ञे जायते (तृतीयम्-अप्सु) तृतीयं जायतेऽन्तरिक्षे *"आपः-अन्तरिक्षनाम"* [निघ० १ । ३]

विद्युदाख्यः ( नृमणाः ) एषः त्रिविधोऽग्निर्येन नृषु मनो मननबलं भवति सोऽस्ति, तम् ( एनम्-अजस्रम्-इन्धानः स्वाधीः-जरते ) एवं निरन्तरं दीपयमानः प्रज्वलयन् कार्ये खलूपयोजयन् सम्यग्ध्यानी जन परमात्मानं स्तौति येनोत्पादितोऽग्निरेष जरां जरापर्यन्तजीवनावस्थां प्राप्नोतीति श्लैषिकोऽर्थः "जरते-अर्चतिकर्मा" [ निघ० ३ । १४ ] ॥ १ ॥

भाषान्वयार्थ—( अग्निः-प्रथमं दिवः-परि जज्ञे ) भौतिक अग्नि पदार्थ प्रथम द्युलोक में प्रकट हुआ सूर्य रूप में ( जातवेदाः-द्वितीयम्-अस्मत् परि ) दूसरा जातवेद नाम से पार्थिव अग्नि हमारी ओर अर्थात् पृथिवी पर प्रकट हुआ ( तृतीयम्-अप्सु ) तृतीय अग्नि विद्युत् अन्तरिक्ष में उत्पन्न हुआ ( नृमणाः ) वह यह तीन प्रकार का अग्नि मनुष्यों में मनन करने का बल देने वाला है—मननशक्तिप्रद है ( एनम्-अजस्रम्-इन्धानः स्वाधीः-जरते ) इसको निरन्तर प्रज्वलित करता हुआ; होम आदि कार्य में प्रयुक्त करता हुआ, सम्यग्ध्यानी जन परमात्मा की स्तुति करता है जिसने इस अग्नि को उत्पन्न किया तथा जरावस्था तक इसे काम में लेता है ॥ १ ॥

भावार्थ—परमात्मा ने प्रथम द्युलोक में सूर्य अग्नि को उत्पन्न किया, दूसरे पृथिवी पर अग्नि को उत्पन्न किया, तीसरे अन्तरिक्ष में विद्युदग्नि को उत्पन्न किया। इस प्रकार मनुष्य को इन अग्नियों को देखकर परमात्मा का मनन करते हुए, जरा पर्यन्त इनसे लाभ लेते हुए परमात्मा की स्तुति करनी चाहिए ॥ १ ॥

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ २ ॥

विद्म । ते । अग्ने । त्रेधा । त्रयाणि । विद्म । ते । धाम । विऽभृता । पुरुऽत्रा । विद्म । ते । नाम । परमम् । गुहा । यत् । विद्म । तम् । उत्सम् । यतः । आऽजगन्थ ॥ २ ॥

संस्कृतान्वयार्थः—( अग्ने ) हे अग्ने ! ( ते त्रेधा त्रयाणि विद्म ) तव त्रिविधानि त्रीणि स्वरूपाणि सम्यगुपयोगतो जानीयाम ( ते पुरुत्रा विभृता धाम विद्म ) तव बहुत्र विधृतानि धामानि स्थानानि खनिजानि वस्तूनि जानीयाम ( ते परमं नाम यत्-गुहा विद्म ) तव परममभीष्टतमं नाम प्रशंसनीयं स्वरूपं यद् विज्ञानक्रियायां तज्जानीयाम *"गुहा बुद्धौ विज्ञाने"* [ ऋ० १ । ६७ । ४ *दयानन्दः* ] ( तम्-उत्सं यतः-आजगन्थ विद्म ) तमुत्स्यन्दयितारमाशयं जानीयाम यत आगच्छसि ॥ २ ॥

भाषान्वयार्थ—(अग्ने) हे अग्नि ! (ते त्रेधा त्रयाणि विद्म) तेरे तीन प्रकार के तीन स्वरूपों को हम जानें ( ते पुरुत्रा विभृता धाम विद्म ) तेरे बहुत प्रकार से फैले हुए स्थानों को, खनिज वस्तुओं को जानें—जानते हैं (ते परमं नाम यत्-गुहा विद्म) तेरे अत्यन्त अभीष्ट प्रशंसनीय स्वरूप को जो विज्ञान क्रिया में है उसे हम जानें ( तम्-उत्सं यतः-आजगन्थ विद्म ) उस स्रोत को भी हम जानें जहाँ से तू उत्पन्न होता है ॥ २ ॥

भावार्थ—मनुष्य जैसे अन्य अन्य विज्ञानों में कुशलता प्राप्त करता है वैसे उसे अग्नि-

विज्ञान में भी कुशलता प्राप्त करनी चाहिए। अर्थात् अग्नि के भिन्न-भिन्न रूप और उसके भिन्न-भिन्न उत्पत्तिस्थान तथा खनिज पदार्थ जिनसे अग्नि उत्पन्न होती है, उन्हें भी जानना चाहिए ॥२॥

समुद्रे त्वा नृमणा अप्स्व१न्तर्नृचक्षा ईधे दिवो अंग्न ऊधंन् ।
तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥ ३ ॥

समुद्रे । त्वा । नृऽमनाः । अप्ऽसु । अन्तः । नृऽचक्षाः । ईधे । दिवः । अग्ने । ऊधन् । तृतीये । त्वा । रजसि । तस्थिऽवांसम् । अपाम् । उपऽस्थे । महिषाः । अवर्धन् ॥ ३ ॥

संस्कृतान्वयार्थः—(अग्ने) हे अग्ने ! (त्वा) त्वाम् (नृमणाः-नृचक्षाः) नृषु मननबलं प्रेरकः प्रजापतिः परमात्मा *"प्रजापतिर्वै नृमणाः"* [*श० ६।७।४।३*] स एव नृणां द्रष्टा तेषां कर्मव्यवहारस्य ज्ञाता परमात्मा *"प्रजापतिर्वै नृचक्षाः"* [*श० ६।७।४।५*] (दिवः-ऊधन्) द्युलोकस्य ज्योतिर्मण्डले सूर्यरूपेण, तथा (समुद्रे-अप्सु-अन्तः-ईधे) अन्तरिक्षे मेघरूपेषु जलेषु विद्युद्रूपेण दीपयति (तृतीये रजसि तस्थिवांसम्) तृतीये पृथिवीलोके स्थितं वर्तमानौषधिषु काष्ठेषु वर्तमानम् तथा (अपाम्-उपस्थे) जलप्रवाहाणां मध्ये वर्तमानम् (महिषाः-अवर्धन्) ऋत्विजो विद्वांसो *"ऋत्विजो वै महिषाः"* [*श० १२।१।८।२*] वर्धयन्ति प्रकटीकरणेन ॥ ३ ॥

भाषान्वयार्थ—(अग्ने) हे अग्नि ! (त्वा) तुझे (नृमणाः-नृचक्षाः) मनुष्यों में मननबल का प्रेरक तथा मनुष्यों के कर्म का द्रष्टा परमात्मा (दिवः-ऊधन्) द्युलोक के ज्योतिमण्डल में सूर्य रूप से, तथा (समुद्रे-अप्सु-अन्तः-ईधे) अन्तरिक्ष में मेघों के अन्दर विद्युत् रूप में दीप्त करता है (तृतीये रजसि तस्थिवांसम्) तीसरे पृथिवी लोक में स्थित ओषधियों में काष्ठों में वर्तमान, तथा (अपाम्-उपस्थे) जलप्रवाहों के मध्य में वर्तमान (महिषाः-अवर्धन्) ऋत्विज् विद्वान् प्रकट करते हैं—बढाते हैं ॥ ३ ॥

भावार्थ—परमात्मा आग्नेय तत्त्व को द्युमण्डल में सूर्यरूप से, अन्तरिक्ष में विद्युत् रूप से, पृथिवी पर पार्थिव अग्नि के रूप में उत्पन्न करता है पुनः ऋत्विक् लोग या विद्वान् उसे अपने विविध कार्यों में प्रकट करके उपयोग में लाते हैं ॥ ३ ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ४ ॥

अक्रन्दत् । अग्निः । स्तनयन्ऽइव । द्यौः । क्षाम । रेरिहत् । वीरुधः । समऽअञ्जन् । सद्यः । जज्ञानः । वि । हि । ईम् । इद्धः । अख्यत् । आ । रोदसी इति । भानुना । भाति । अन्तरिति ॥ ४ ॥

**संस्कृतान्वयार्थः**—( द्यौः ) द्युलोकं प्रति दीप्तो विद्युदग्निः ( स्तनयन् इव यथा ) शब्दयन् प्रकाशते, तथा ( अग्निः ) एषः पार्थिवोऽग्निः ( क्षाम ) पृथिवीं प्रति *"क्षाम क्षामा पृथिवीनाम"* [ *निघ० १ । १* ] ( अक्रन्दत् ) क्रन्दति ज्वलन् सन् शब्दं करोति ( वीरुधः-समञ्जन् रेरिहत् ) ओषधीः काष्ठानि संसक्तः सन् प्रज्वलयन् पुनः पुनः लेढि भस्मीकरणाय ( सद्यः-जज्ञानः ) प्रकटीभूतस्तत्काले तदैव ( हि-ईम्-इद्धः ) एवं खलु दीप्तः प्रज्वलितः ( अख्यन् ) प्रत्यक्षं भवति ( रोदसी-अन्तः-भानुना विभाति ) द्यावापृथिव्योरन्तर्मध्ये *"रोदसी द्यावापृथिवीनाम"* [ *निघ० ३ । ३०* ] द्युलोकपृथिवीलोकयोर्मध्ये विशिष्टं प्रकाशते ॥ ४ ॥

**भाषान्वयार्थ**—( द्यौः ) द्युलोक में दीप्त विद्युदग्नि ( स्तनयन्-इव यथा ) शब्द करता हुआ चमकता है, तथा ( अग्निः ) यह पार्थिव अग्नि ( क्षाम ) पृथिवी के प्रति ( अक्रन्दत् ) जलता हुआ शब्द करता है ( वीरुधः-समञ्जन् रेरिहत् ) ओषधियों को काष्ठों को संसक्त हुआ-जलता हुआ भस्मी करने के लिए बार बार चाटता है—स्पर्श करता है ( सद्यः-जज्ञानः ) तुरन्त प्रकट हुआ ( हि-ईम्-इद्धः ) इस प्रकार प्रज्वलित हुआ ( अख्यत् ) प्रत्यक्ष होता है ( रोदसी -अन्तः-भानुना विभाति ) द्युलोक पृथिवी लोक के मध्य में दीप्ति से विशिष्ट रूप में प्रकाशित होता है ॥ ४ ॥

**भावार्थ**—द्युलोक में सूर्यरूप से अग्नि प्रकाशमान होता है, अन्तरिक्ष में विद्युत् रूप से और पृथिवी पर काष्ठ इंधन द्वारा पार्थिव अग्नि रूप में प्रकाशित होता है इस प्रकार अग्नितत्त्व द्यावापृथिवीमय जगत् में प्रसिद्ध हुआ अन्य पदार्थों का प्रकाशक है ॥ ४ ॥

**श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।**
**वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ ५ ॥**

श्रीणाम् । उत्ऽआरः । धरुणः । रयीणाम् । मनीषाणाम् । प्रऽअर्पणः । सोमऽगोपाः । वसुः । सूनुः । सहसः । अप्ऽसु । राजा । वि । भाति । अग्रे । उषसाम् । इधानः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( श्रीणाम्-उदारः ) एष सूयरूपोऽग्निः प्राणानाम् *"प्राणाः श्रियः"* [ *श० ६ । १ । १ । ४* ] उत्प्रेरक उन्नायकः ( रयीणां धरुणः ) पुष्टीनां धारको धारयिता ( मनीषाणां प्रार्पणः ) बुद्धीनां प्रेरयिता ( सोमगोपाः ) सवनीयानामुत्पद्यमानानां गोपायिता रक्षकः ( वसुः ) वासयिता ( सहसः सूनुः ) बलस्य-उत्प्रेरकः ( अप्सु राजा ) अन्तरिक्षे आकाशे पिण्डानां राजेव ( उषसाम्-अग्रे-इधानः-विभाति ) उषसां प्रभाते भवानां ज्योतीरेखानामग्रे-अनन्तरं विशिष्टं दीप्यते ॥ ५ ॥

**भाषान्वयार्थ**—( श्रीणाम्-उदारः ) यह सूर्यरूप अग्नि प्राणों का उत्तेजक है—उन्नत करने वाला है ( रयीणां धरुणः ) पुष्टियों का धारक है ( मनीषाणां प्रार्पणः ) बुद्धियों का प्रेरक है ( सोमगोपाः ) उत्पन्न होते हुए पदार्थों का रक्षक है ( वसुः ) बसाने वाला-विस्तृत करने वाला

है ( सहसः सूनुः ) बल का उद्बोधक है ( अप्सु राजा ) अन्तरिक्ष में वर्तमान पिण्डों का राजा की भांति है ( उषसाम्-अग्रे-इधानः-विभाति ) प्रभात में ज्योतिरेखाओं के आगे अर्थात् पश्चात् विशिष्ट रूप से दीप्त होता है ॥ ५ ॥

भावार्थ—सूर्य संसार में प्राणशक्ति का प्रेरक है, नाना प्रकार की पुष्टियों को देने वाला है। बुद्धियों का प्रेरक, उत्पन्न होने वाले पदार्थों को बढ़ाने वाला, बलवर्धक, आकाश के पिण्डों को प्रकाश देने वाला, और उषावेलाओं के पश्चात् प्रकाशित होने वाला या उदय होने वाला उपयोगी पिण्ड है ॥ ५ ॥

**विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।**
**वीळुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥ ६ ॥**

विश्वस्य । केतुः । भुवनस्य । गर्भः । आ । रोदसी इति । अपृणात् । जायमानः । वीळुम् । चित् । अद्रिम् । अभिनत् । पराऽयन् । जनाः । यत् । अग्निम् । अयजन्त । पञ्च ॥ ६ ॥

**संस्कृतान्वयार्थः**—( विश्वस्य केतुः ) संसारस्य प्रद्योतयिता प्रेरयिता चालयिता ( भुवनस्य गर्भः ) भूतजातस्य प्राणिमात्रस्य ग्रहणकर्त्ता स्वीकर्त्ता ( जायमानः-रोदसी-अपृणात् ) उदयन् द्यावापृथिव्यौ स्वप्रकाशेन पूरयति ( परायन् वीळु चित्-अद्रिम्-अभिनत् ) बलवन्तमपि मेघम् *"अद्रिर्मेघनाम"* [ *निघ० १ । १०* ] पराक्रमं कुर्वन् भिनत्ति ( यत् पञ्च जनाः-अग्निम्-अयजन्त ) ब्राह्मणक्षत्रियवैश्यशूद्रनिषादाः यदाऽग्निहोत्रेऽग्निं यजन्ति-अग्निहोत्रं कुर्वन्ति तदा । *"पञ्चजना……चत्वारो वर्णा निषादः पञ्चमः [ निरु० ३ । ८ ]* ॥ ६ ॥

भाषान्वयार्थ—( विश्वस्य केतुः ) संसार का प्रकाशक, प्रेरक, संचालक (भुवनस्य गर्भः) प्राणिमात्र का ग्रहण करने वाला—स्वीकार करने वाला ( जायमानः-रोदसी-अपृणात् ) उदय होता हुआ द्युलोक और पृथिवी लोक को अपने प्रकाश से भर देता है ( परायन् वीळुं चित्-अद्रिम् -अभिनत् ) बलवान् मेघ को भी पराक्रम से तोड़ देता है—छिन्न-भिन्न कर देता है ( यत्-पञ्च जनाः-अग्निम्-अयजन्त ) ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, निषाद नामक पांचों जन जब अग्नि-होत्र में अग्नि का यजन करते हैं, उस समय ॥ ६ ॥

भावार्थ—सूर्य संसार में प्रगति देने वाला है, आकाश और पृथिवी के मध्य में अपने प्रकाश को भर देता है। मनुष्य मात्र सामूहिक रूप से जब यजन करते हैं, और यज्ञ से मेघ बनते हैं उन मेघों को पृथिवी पर बरसा देने वाला सूर्य है। वह मेघों को छिन्न-भिन्न करके पृथिवी पर बरसा देता है जो प्राणियों के पोषण का निमित्त बनता है ॥ ६ ॥

**उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।**
**इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ७ ॥**

उशिक् । पावकः । अरतिः । सुऽमेधाः । मर्तेषु । अग्निः । अमृतः । नि । धायि । इयर्ति । धूमम् । अरुषम् । भरिभ्रत् । उत् । शुक्रेण । शोचिषा । द्याम् । इनक्षन् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( उशिक् ) जीवानां कल्याणं कामयमानः ( पावकः ) पवित्रीकर्त्ता ( अरतिः ) सर्वत्र व्याप्तो भोगरहितो वा ( सुमेधाः ) शोभनप्रज्ञः सर्वज्ञः ( मर्तेषु-अमृतः-अग्निः-निधायि) मरणधर्मकेषु प्राणिषु खल्वमृतो मरणधर्मरहितोऽग्नि-ज्ञानस्वरूपः परमात्मा निधीयते निहितोऽन्तर्हितोऽस्ति ( अरुषं धूमम्-इयर्ति ) आरोच-मानं प्रकाशं धूनयितारमज्ञाननिवारकं प्रेरयति (शुक्रेण शोचिषा द्याम्-इनक्षन् भरिभ्रत्) शुभ्रेण प्रकाशेन मोक्षधाम *"पादो-ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"* [ ऋ० १० । ९० । ३ ] *"इनक्षन्-व्याप्नुवन्"* [ *यजु० १२ । २४ दयानन्दः* ] व्याप्नुवन्, बिभर्ति धारयति ॥ ७ ॥

**भाषान्वयार्थ**—( उशिक् ) जीवों के लिए कल्याण कामना करने वाला ( पावकः ) तथा पवित्रकर्त्ता ( अरतिः ) सर्वत्र व्यापक या भोगरति से रहित ( सुमेधाः ) शोभनबुद्धि वाला—सर्वज्ञ ( मर्तेषु-अमृतः-अग्निः-निधायि ) मरणधर्मी प्राणियों में अमृत—मरणधर्मरहित ज्ञानस्वरूप परमात्मा निहित है ( अरुषं धूमम्-इयर्ति ) अज्ञाननिवारक प्रकाश को प्रेरित करता है ( शुक्रेण शोचिषा द्याम्-इनक्षन्-भरिभ्रत् ) शुभ्र प्रकाश से मोक्षधाम को व्याप्त होता हुआ धारण करता है ॥ ७ ॥

**भावार्थ**—परमात्मा प्राणियों की कल्याण कामना करता हुआ सबके अन्दर व्यापक होकर जीवन प्रकाश प्रदान करता है और विशिष्ट मनुष्यों को मोक्ष की ओर भी प्रेरित करता है ॥ ७ ॥

**दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।**
**अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत् सुरेताः ॥ ८ ॥**

दृशानः । रुक्मः । उर्विया । वि । अद्यौत् । दुःऽमर्षम् । आयुः । श्रिये । रुचानः । अग्निः । अमृतः । अभवत् । वयःऽभिः । यत् । एनम् । द्यौः । जनयत् । सुऽरेताः ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अमृतः-अग्निः-अभवत् ) एषोऽमरो मरणधर्मरहितः परमात्माग्निः सर्वत्र विराजते ( दृशानः ) द्रष्टा ( रुक्मः ) रोचमानः ( उर्विया व्यद्यौत् ) महत्या दीप्त्या विशिष्टतया प्रकाशते ( दुर्मर्षम्-आयुः श्रिये रुचानः ) आश्रयति यस्तस्मै-आश्रयप्राप्तये खलूपासकाय *"श्रिञ् धातोः क्विप्"* [ *उणा० २ । ५७* ] अबाध्यमायुः प्रकाशयन् प्रकटयन् ( सुरेताः-द्यौः-वयोभिः-यत्-एनं जनयत् ) सोऽग्निः परमात्मा सम्य-गुत्पादकशक्तिमान् पितेव तेजोवीर्यवान् प्राणैः *"प्राणो वै वयः"* [ ऐ० १ । २८ ] यतः-एनमुपासकं जनयति ॥ ८ ॥

भाषान्वयार्थ—( अमृतः-अग्निः-अभवत् ) यह अमर-मरणधर्मरहित परमात्मा सर्वत्र स्वामीरूप में विराजता है ( दृशानः ) द्रष्टा ( रुक्मः ) रोचमान ( उर्विया व्यद्यौत् ) महती दीप्ति से विशिष्टरूप से प्रकाशित है–प्रकाश करता है ( दुर्मर्षम्-आयुः श्रिये रुचानः ) आश्रय लेने वाले उपासक के लिए अबाध्य ज्ञान को प्रकाशित करता हुआ–प्रकट करता हुआ ( सुरेताः-द्यौः-वयोभिः -यत्-एनं जनयत् ) सम्यक् उत्पादक शक्ति वाले पिता की भांति तेजो वीर्यवान् प्राणों के द्वारा इस उपासक को सम्पन्न करता है ॥ ८ ॥

भावार्थ—परमात्मा सर्वत्र एकरस विराजमान है। अबाध्य ज्ञान को विशेषरूप से अपने आश्रयी उपासक के लिए देता है और उत्तम प्राणों से समृद्ध करता है ॥ ८ ॥

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ ९ ॥

यः । ते । अद्य । कृणवत् । भद्रऽशोचे । अपूपम् । देव । घृतऽवन्तम् । अग्ने । प्र । तम् । नय । प्रऽतरम् । वस्यः । अच्छ । अभि । सुम्नम् । देवऽभक्तम् । यविष्ठ ॥ ९ ॥

संस्कृतान्वयार्थः—( भद्रशोचे यविष्ठ देव-अग्ने ) हे कल्याणदीप्तिक ! अतिसङ्गतिशील ! ज्ञानप्रकाशक परमात्मदेव ! ( ते ) तुभ्यम् ( अद्य ) अस्मिन् वर्तमाने काले जन्मनि वा ( यः ) यः खलूपासकः ( घृतवन्तम्-अपूपं कृणवत् ) संयमेन तेजस्विनं खल्विन्द्रियगणम् "इन्द्रियमपूपः" [ ऐ० २ । २४ ] करोति ( तं प्रतरं वस्यः-अभि-अच्छ-सुम्नं देवभक्तं प्र नय ) तमुपासकं जनमतिप्रकृष्टं श्रेष्ठं वसुतरं वासयितृतरं प्रशंसनीय-धनैश्वर्यरूपं सुम्नं सुखविशेषं देवैर्भजनीयमभिमोक्षं प्रति "सुम्नं सुखनाम" [ निघ० ३ । ६ ] प्रेरय–प्रगमय ॥ ९ ॥

भाषान्वयार्थ—( भद्रशोचे यविष्ठ देव-अग्ने ) हे कल्याणदीप्तिवाले ! अत्यन्तसङ्गमनीय ! परमात्मदेव ! ( ते ) तेरे लिए ( अद्य ) इस वर्तमान काल में या जीवन में ( यः ) जो उपासक ( घृतवन्तम्-अपूपं कृणवत् ) संयम द्वारा इन्द्रियगण को तेजस्वी बनाता है ( तं प्रतरं वस्यः-अभि -अच्छ सुम्नं देवभक्तं प्रनय ) उस उपासक जन को प्रकृष्टतर, श्रेष्ठ, अत्यन्त बसने वाला, प्रशंसनीय, धनैश्वर्यरूप, मुमुक्षुओं के द्वारा भजनीय सुख विशेष–मोक्ष के प्रति प्रेरित कर–लेजा ॥ ९ ॥

भावार्थ—परमात्मा का ज्ञानप्रकाश कल्याणकारी है, वह समागम के योग्य है। जो उपासक संयम द्वारा अपनी इन्द्रियों को तेजस्वी बना लेता है उसे परमात्मा सांसारिक सुख भोगों से उत्कृष्ट सुख विशेषरूप मोक्ष को प्राप्त कराता है ॥ ९ ॥

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥

आ । तम् । भज । सौश्रवसेषु । अग्ने । उक्थेऽउक्थे । आ । भज । शस्यमाने । प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । उत् । जातेन । भिनदत् । उत् । जनिऽत्वैः ॥ १० ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे ज्ञानप्रकाशस्वरूप परमात्मन्! त्वम् ( तं सौश्रवसेषु-आ भज ) तं खल्विमं संयमिनं शोभने श्रवसि श्रवणे वेदश्रवणे भवानि सौश्रवसानि श्रवणमनननिदिध्यासनसाक्षात्कारास्तेषु-आभज-अभिलष स्वीकुरु *"भज अभिलष"* *[ ऋ० १ । १२५ । १५ दयानन्दः ]* ( शस्यमाने-उक्थे-उक्थे-आ भज ) प्रस्तूयमाने समर्प्यमाणे प्रत्येकवचने तमभिलष स्वीकुरु ( सूर्ये प्रियः-अग्ना प्रियः-भवाति ) स च सूर्यरूपे सूर्य इव प्रकाशके त्वयि प्रियो भवेत् *"लिङर्थे लेट्"* *[ अष्टा० ३ । ४ । ७ ]* अग्ना-अग्नौ 'आकारादेशश्छान्दसः' अग्रणेतरि त्वयि प्रियो भवेत् ( जातेन-उद्भिनदत्-जनित्वेन-उत् ) जातेन पापकर्मणा-उद्भिन्नः सम्पर्करहितो जनिष्यमाणेन पापकर्मणा सम्पर्करहितो भवेत् ॥ १० ॥

**भाषान्वयार्थ**—( अग्ने ) हे ज्ञानप्रकाशस्वरूप परमात्मन्! तू ( तं सौश्रवसेषु-आ भज ) उस इस संयमी को शोभन श्रवण–वेद श्रवण में होने वाले श्रवण, मनन, निदिध्यासन, साक्षात्कार में इनके सेवन करने पर स्वीकार कर–चाहना कर ( शस्यमाने-उक्थे-उक्थे-आभज ) प्रस्तूयमान अर्थात् स्तुत किये जाते हुए–समर्पित किये जाते हुए प्रत्येक वचन में स्वीकार कर ( सूर्ये प्रियः -अग्ना प्रियः-भवाति ) वह सूर्यरूप सर्वप्रकाशक तुझ में–तेरी दृष्टि में प्यारा होवे, तुझ अग्रनेता में तेरी दृष्टि में प्रिय होवे ( जातेन-उद्भिनदत्-जनित्वेन-उत् ) हुए पापकर्म से सम्पर्करहित हो तथा होने वाले पापकर्म से भी सम्पर्करहित हो ॥ १० ॥

**भावार्थ**—परमात्मा का जो श्रवण, मनन, निदिध्यासन, साक्षात्कार करता है तथा उसकी स्तुति करने में लगा रहता है वह सर्वप्रकाशक, अग्रनेता, परमात्मा का प्रिय हो जाता है। वह किसी भी काल में पापकर्म नहीं करता है, पापकर्म के दुःख को नहीं भोगता है ॥ १० ॥

**त्वामग्ने यजमाना अनु द्यून्विश्वा वसु दधिरे वार्याणि ।**
**त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः ॥ ११ ॥**

त्वाम् । अग्ने । यजमानाः । अनु । द्यून् । विश्वा । वसु । दधिरे । वार्याणि । त्वया । सह । द्रविणम् । इच्छमानाः । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुः ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन्! ( यजमानाः ) अध्यात्मयज्ञस्य यजमानाः-आत्मयाजिनः ( त्वाम्-अनु ) त्वामनुलक्ष्य ( द्यून् ) दिनानि प्रतिदिनम् ( विश्वा वार्याणि वसु दधिरे ) सर्वाणि वरणीयानि वसूनि धनानि धारयन्ति प्राप्नुवन्ति ( त्वया सह द्रविणम्-इच्छमानाः ) तव साहाय्येन धनमिच्छन्तः ( उशिजः )

मेधाविनः *"उशिजः-मेधाविनाम"* *[ निघ० ३ । १५ ]* ( गोमन्तं व्रजं विवव्रुः ) वाग्वन्तं ज्ञानमार्गं विवृतं कुर्वन्ति ॥ ११ ॥

भाषान्वयार्थ—( अग्ने ) हे अग्रणायक परमात्मन् ! ( यजमानाः ) अध्यात्मयज्ञ के यजमान–आत्मयाजी ( त्वाम्-अनु ) तेरे अनुकूल हो ( द्यून् ) सब दिन ( विश्वा वार्याणि वसु दधिरे ) सारे वरणीय धनों को धारण करते हैं–प्राप्त करते हैं ( त्वया सह द्रविणम्-इच्छमानाः ) तेरे साहाय्य से धन को चाहते हुए ( उशिजः ) मेधावी जन ( गोमन्तं व्रजं विवव्रुः ) वाणी वाले ज्ञान मार्ग को विवृत करते हैं—खोलते हैं ॥ ११ ॥

भावार्थ—परमात्मा के आदेशानुकूल जीवन के सब दिनों में वरणीय धनों को मनुष्य प्राप्त करते हैं और वे अपने लिए ज्ञानमार्ग का विस्तार करते हैं ॥ ११ ॥

**अस्ताव्यग्निर्नरां सुशेवो वैश्वानर ऋषिभिः सोमगोपाः ।**
**अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ १२ ॥**

अस्तावि । अग्निः । नराम् । सुऽशेवः । वैश्वानरः । ऋषिऽभिः । सोमऽगोपाः । अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः । धत्त । रयिम् । अस्मे इति । सुऽवीरम् ॥ १२ ॥

**संस्कृतान्वयार्थः**—( नरां सुशेवः ) नराणां यः सुसुखसाधकः ( वैश्वानरः ) विश्वनायकोऽग्निः परमात्मा ( सोमगोपाः ) सोम्यगुणवतामुपासकानां गोपायिता रक्षकः ( ऋषिभिः-अस्तावि ) ज्ञानिभिः स्तूयते ( अद्वेषे द्यावापृथिवी हुवे ) द्यौश्च पृथिवी चोभयरूपः परमात्मा ज्ञानप्रकाशदाता धारकश्चाद्वेष्टा च तमहं हुवे–निमन्त्रये स्तौमि 'हुवे स्तुयाम्" *[ यजु० ३३ । ४६ दयानन्दः ]* ( देवाः-अस्मे सुवीरं रयिं धत्त ) अथैवं स एव परमात्मदेवः 'बहुवचनमादरार्थम्' अस्मभ्यं शोभनवीरा वयं यस्माद् भवेम तथाभूतमध्यात्मपुषं धनं धारय ॥ १२ ॥

भाषान्वयार्थ—( नरां सुशेवः ) मनुष्यों के अच्छे सुखों का साधक ( वैश्वानरः ) विश्व का नायक–नेता अग्निरूप परमात्मा ( सोमगोपाः ) सोम्यगुण वाले उपासकों का रक्षक है, वह ( ऋषिभिः-अस्तावि ) ज्ञानियों के द्वारा स्तुत किया जाता है ( अद्वेषे द्यावापृथिवी हुवे ) द्यौरूप पृथिवीरूप दोनों धर्मों से युक्त परमात्मा ज्ञानप्रकाशदाता और धारणकर्ता द्वेषरहित है उसे मैं स्तुति में लाता हूँ ( देवाः-अस्मे सुवीरं रयिं धत्त ) और वह परमात्मदेव हमारे लिए, हम जिससे शोभन वीर वाले बन जायें ऐसे अध्यात्म पोषक धन को धारण कराये ॥ १२ ॥

भावार्थ—परमात्मा मनुष्यों का सुखदाता, उपासकों का रक्षक है। वह ज्ञानप्रकाशदाता तथा धारणकर्त्ता भी है सदा उसकी स्तुति करते हुए अध्यात्मधन की याचना करनी चाहिए ॥१२॥



# षट्चत्वारिंशं सूक्तम्

ऋषिः—वत्सप्रिः ।

देवता—अग्निः ।

छन्दः—१, २ पादनिचृत् त्रिष्टुप् । ३, ५ आर्ची स्वराट् त्रिष्टुप् । ४, ८, १० त्रिष्टुप् । ६ आर्ची भुरिक् त्रिष्टुप् । ७ त्रिष्टुप् । ९ निचृत् त्रिष्टुप् ।

स्वरः—धैवतः ।

विषयः—अत्र सूक्ते 'अग्नि' शब्देन परमात्मा गृह्यते स च जड-जङ्गमानामाधारः, मनुष्याणां कर्मप्रेरकः, सृष्टेर्विज्ञानदाता, स्तुतिप्रार्थना-वचनानामङ्गीकर्त्तेत्यादयो विषयाः सन्ति ।

इस सूक्त में 'अग्नि' शब्द से परमात्मा गृहीत है वह जड़जङ्गमका आधार, मनुष्यों का कर्मप्रेरक, सृष्टिविषयक विज्ञानदाता, स्तुतिप्रार्थनावचनों का अङ्गीकार करने वाला इत्यादि विषय वर्णित हैं ॥

प्र होता॑ जा॒तो म॒हान्न॑भो॒विन्नृ॒षद्वा॑ सीद॒द॒पामु॒पस्थे॑ ।
द॒धिर्यो धायि॒ स ते॒ वयां॑सि य॒न्ता वसू॑नि विध॒ते त॑नू॒पाः ॥ १ ॥

प्र । होता॑ । जा॒तः । म॒हान् । न॒भः॒ऽवित् । नृ॒ऽसद्वा॑ । सी॒द॒त् । अ॒पाम् । उ॒पऽस्थे॑ । द॒धिः । यः । धायि॑ । सः । ते॒ । वयां॑सि । य॒न्ता । वसू॑नि । वि॒ध॒ते । त॒नू॒ऽपाः ॥ १ ॥

**संस्कृतान्वयार्थः**—( यः-महान् ) यः खलु महान् सर्वतः स्वरूपतो महान् ( जातः ) प्रसिद्धः ( होता ) सर्वेषामादाता स्वस्मिन् ग्रहीता ( नभोवित् ) न भान्ति यानि तानि वस्तुजातानि वेत्ति सः सूक्ष्मातिसूक्ष्मस्य ज्ञाता ( नृषद्वा ) नृषु मुमुक्षुषूपासकेषु *"नरो ह वै देवविशः"* [ जै० १ । ८९ ] सीदति साक्षाद् भवति 'सद धातोः क्वनिप्' ( अपाम्-उपस्थे ) सर्वेषां प्राणानाम् *"आपो वै प्राणाः"* [ श० ४ । ८ । २ । २ ] उपस्थाने हृदये वर्तमानोऽस्ति ( दधिः-धायि ) सर्वं जगद्दधाति धारयति स सर्वधारकः, धीयते-

आश्रियते ( सः ) स खलु परमात्मा ( तनूपाः ) आत्मनां रक्षकः "आत्मा वै तनूः" [ ६ । ७ । २ । ६ ] ( विधते ते ) उपासनां कुर्वते तुभ्यम् ( वयांसि वसूनि यन्ता ) प्राणान् "प्राणो वै वयः" [ ऐ० १ । २८ ] जीवनसाधनान् भोक्तव्यधनानि च नियतीकर्त्ता ऽस्ति ॥ १ ॥

भाषान्वयार्थ—( यः-महान् ) जो सबसे महान् ( जातः ) प्रसिद्ध ( होता ) सबको अपने अन्दर धारण करने वाला ( नभोवित् ) जो वस्तु नहीं भी प्रतीत होती हैं ऐसी सूक्ष्मातिसूक्ष्म वस्तुओं का भी ज्ञाता ( नृषद्वा ) मुमुक्षुओं के हृदय में साक्षात् होने वाला ( अपाम्-उपस्थे ) प्राणों के आश्रयरूप हृदय में वर्तमान है ( दधिः-धायि ) सब जगत् को धारण करने वाला आश्रित किया जाता है ( सः ) वह परमात्मा ( तनूपाः ) आत्माओं का रक्षक ( विधते ते ) तुझ उपासना करते हुए के लिए ( वयांसि वसूनि यन्ता ) प्राणों को, जीवन के साधन भोक्तव्य धनों को नियत करता है ॥ १ ॥

भावार्थ—परमात्मा सब जड़ जङ्गम का आधार है। सूक्ष्मातिसूक्ष्म का भी ज्ञाता, प्राणियों को रक्षा के साधन देने वाला, जीवनशक्ति तथा जीवन के लिए उपयोगी वस्तुओं का देने वाला, सबका आश्रयणीय और उपास्य है ॥ १ ॥

इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन् ।
गुहा चतन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवोऽविन्दन् ॥ २ ॥

इमम् । विधन्तः । अपाम् । सधऽस्थे । पशुम् । न । नष्टम् । पदैः । अनु । ग्मन् । गुहा । चतन्तम् । उशिजः । नमःऽभिः । इच्छन्तः । धीराः । भृगवः । अविन्दन् ॥ २ ॥

संस्कृतान्वयार्थः—( उशिजः-भृगवः-धीराः ) परमात्मानं कामयमानाः "उशिग्वष्टेः कान्तिकर्मणः" [ निरु० ६ । १० ] तेजस्विनः, "भृगुर्भृज्यमानो न देहे" [ निरु० ३ । १७ ] "ध्यानिनः-ध्यानवन्तः" [ ऋ० १ । ६२ । १२ दयानन्दः ] ( इमं विधन्तः ) एतं परमात्मानं परिचरन्तः-उपासमानाः "विधन्तः परिचरन्तः" [ ऋ० २ । ४ । २ दयानन्दः ] ( अपां सधस्थे ) प्राणानां सहस्थाने हृदये ( इच्छन्तः पशुं न नष्टं पदैः-अनुग्मन् ) अपहृतं पलायितं गुप्तं पशुं यथा तत्पदचिह्नैः पदचिह्नानि-अनुगच्छन्ति अन्विष्यन्ति तद्वत् परमात्मानमिच्छन्तस्तमन्वेषयन्ति प्राप्नुवन्ति ( गुहा चतन्तम् ) हृद्गुहायां व्याप्तं वर्तमानम् "चतन्तम् गच्छन्तं व्याप्तम्" [ ऋ० १ । ६५ । १ दयानन्दः ] ( नमोभिः-अविन्दन् ) स्तुतिभिः-अध्यात्मयज्ञैर्वा "सप्तनामा सप्तैनमृषयः स्तुवन्ति" [ निरु० ४ । २७ ] "यज्ञो वै नमः" [ श० २ । ४ । २ । २४ ] लभन्ते प्राप्नुवन्ति साक्षात्कुर्वन्ति ॥ २ ॥

भाषान्वयार्थ—( उशिजः-भृगवः-धीराः ) परमात्मा को चाहते हुए तेजस्वी ध्यानीजन ( इमं विधन्तः ) इस परमात्मा को उपासना में लाते हुए ( अपां सधस्थे ) प्राणों के सहस्थान हृदय में ( इच्छन्तः-नष्टं पशुं न पदैः-अनुग्मन् ) नष्ट—खोये हुए पशु को जैसे पदचिह्नों से खोजते

हुए पदचिह्नों का अनुसरण करते हैं, उसी भांति परमात्मा को चाहते हुए प्राप्त करते हैं ( गुहा चतन्तम् ) हृदयगुहा में प्राप्त को ( नमोभिः-अविन्दन् ) स्तुतियों—अध्यात्मयज्ञों के द्वारा साक्षात् करते हैं ।। २ ।।

भावार्थ—उपासक जन परमात्मा की खोज स्तुतियों और अध्यात्मयज्ञों के द्वारा करते हैं पुनः उसे हृदय में साक्षात् प्राप्त कर लेते हैं ।। २ ।।

इमं त्रितो भूर्यविन्दद्दिच्छन् वैभूवसो मूर्धन्यघ्न्यायाः ।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य ।। ३ ।।

इमम् । त्रितः । भूरि । अविन्दत् । इच्छन् । वैभूऽवसः । मूर्धनि । अघ्न्यायाः ।
सः । शेऽवृधः । जातः । आ । हर्म्येषु । नाभिः । युवा । भवति । रोचनस्य ।। ३ ।।

संस्कृतान्वयार्थः—( त्रितः ) मेधया दुःखादत्यन्ततीर्णः, *"त्रितः-तीर्णतमो मेधया"* [ *निरु० ४ । ६* ] तिसृभिः स्तुतिप्रार्थनोपासनाभिः सम्पन्नः, यद्वा स्तुतिप्रार्थनोपासनासु वर्तमान आत्मा ( वैभुवसः ) विभुः सन् वसति सर्वत्रेति विभुवसः परमात्मा तस्य यः पुत्र उपासको वा-आत्मा ( इमम् ) एनं परमात्मानम् ( इच्छन् ) द्रष्टुं प्राप्तुं कामयमानः ( अघ्न्यायाः-मूर्धन् भूरि-अविन्दन् ) अहन्तव्याया वेदवाचो मूर्धभूते 'ओ३म्' इति प्रणवे-अतिशयेन बहुभावेन वा विन्दति प्राप्नोति ( सः-शेवृधः-जातः ) स परमात्मा सुखस्य वर्धको जातः ( हर्म्येषु नाभिः ) गृहेषु सुखगृहेषु सुखलोकेषु केन्द्रभूतोऽस्ति ( रोचनस्य युवा-आभवति ) ज्ञानप्रकाशस्वरूपस्य मिश्रयिता सङ्गतिकर्त्ता—अधिकारी समन्ताद् भवति ।। ३ ।।

भाषान्वयार्थ—( त्रितः ) मेधा द्वारा दुःख से अत्यन्त पार हुआ अथवा तीनों स्तुति-प्रार्थना-उपासनाओं से सम्पन्न या स्तुति-प्रार्थना-उपासना में वर्तमान आत्मा ( वैभुवसः ) विभु होता हुआ जो सबमें बसता है उस परमात्मा का पुत्र या उपासक आत्मा ( इमम् ) इस परमात्मा को ( इच्छन् ) देखने—प्राप्त करने को चाहता हुआ ( अघ्न्यायाः-मूर्धनि भूरि-अविन्दत् ) अहन्तव्य वेदवाणी के मूर्धाभूत प्रणव—'ओ३म्' में अतिशय से प्राप्त करता है ( सः-शेवृधः-जातः ) वह परमात्मा सुखवर्धक प्रसिद्ध होता है ( हर्म्येषु नाभिः ) सुखपूर्ण घरों में—सुखस्थानों में केन्द्ररूप है ( रोचनस्य युवा-आभवति ) ज्ञानप्रकाशकस्वरूप का सङ्गतिकर्त्ता अधिकारी बन जाता है ।। ३ ।।

भावार्थ—जो मनुष्य मेधावी और स्तुति प्रार्थना उपासना से सम्पन्न होता है वह सर्वत्र व्यापक वैभवशाली परमात्मा के प्रिय पुत्र के समान उपासक होता है। वह वाणी के मूर्धा स्वरूप 'ओ३म्' नाम के जप से सुखस्वरूप परमात्मा का साक्षात् करता है जो सब सुखों में ऊंचा श्रेष्ठ सुख है ।। ३ ।।

मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं नेतारमध्वराणाम् ।
विशामकृण्वन्नरतिं पावकं हव्यवाहं दधतो मानुषेषु ।। ४ ।।

मन्द्रम् । होतारम् । उशिजः । नमःऽभिः । प्राञ्चम् । यज्ञम् । नेतारम् । अध्वराणाम् । विशाम् । अकृण्वन् । अरतिम् । पावकम् । हव्यऽवाहम् । दधतः । मानुषेषु ॥ ४ ॥

**संस्कृतान्वयार्थः**—( मानुषेषु दधतः-उशिजः ) मनुष्येषु मनुष्याणां मध्ये ये दधानाः स्वान्तरे धारणहेतवे कामयमानाः स्तोतारः ( मन्द्रं होतारम् ) हर्षयितारमादातारं स्वीकर्तारम् ( यज्ञम ) यजनीयं सङ्गमनीयम् ( अध्वराणां नेतारम् ) अध्यात्ममार्गे रममाणानां नेतारम् ( विशाम्-अरतिम् ) समस्तमनुष्यादिप्रजानां स्वामिनम् ( पावकम् ) पवित्रकारकम ( हव्यवाहम् ) स्तुतिप्रार्थनोपहारस्य स्वीकर्तारं परमात्मानम् ( प्राञ्चम्-अकृण्वन् ) साक्षात् कुर्वन्ति ॥ ४ ॥

**भाषान्वयार्थ**—( मानुषेषु दधतः-उशिजः ) मनुष्यों के मध्य में जो अपने अन्दर धारण करने के हेतु कामना रखने वाले ( मन्द्रं होतारम् ) हर्षित करने वाले तथा स्वीकार करने वाले ( यज्ञम् ) सङ्गमनीय ( अध्वराणां नेतारम् ) अध्यात्ममार्ग में रमण करने वालों के नेता ( विशाम्-अरतिम् ) मनुष्यादि प्रजाओं के स्वामी ( पावकम् ) पवित्र कारक ( हव्यवाहम् ) स्तुतिप्रार्थनोपहार के स्वीकार करने वाले परमात्मा को ( प्राञ्चम्-अकृण्वन् ) साक्षात् करते हैं ॥ ४ ॥

**भावार्थ**—मनुष्यों में जो परमात्मा को अपने अन्दर धारण करने के अत्यन्त इच्छुक होते हैं और पवित्र आचरण वाले तथा श्रद्धा से उपासना करते हैं वे ही प्राणिमात्र के स्वामी हर्षित करने वाले परमात्मा का साक्षात्कार करते हैं ॥ ४ ॥

**प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दर्माणम् ।**
**नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम् ॥ ५ ॥**

प्र । भूः । जयन्तम् । महाम् । विपःऽधाम् । मूराः । अमूरम् । पुराम् । दर्माणम् । नयन्तः । गर्भम् । वनाम् । धियम् । धुः । हिरिऽश्मश्रुम् । न । अर्वाणम् । धनऽअर्चम् ॥ ५ ॥

**संस्कृतान्वयार्थः**—( जयन्तम् ) जडजेतनात्मकं सर्वं स्वाधीने कुर्वन्तम् ( महाम् ) महान्तम् ( विपोधाम् ) मेधाविनः स्तोतुर्धारकम् *"विपः-मेधाविनाम"* [ निघ० ३ । १५ ] ( पुरां दर्माणम् ) मनसां मनोवासनानाम् *"मन एव पुरः"* [ श० १० । ३ । ५ । ७ ] विदारकम् ( गर्भम् ) स्तोतव्यम् *"गर्भः स्तोतव्यः"* [ ऋ० १ । ७० । २ दयानन्दः ] ( अमूरम् ) अमूढं सर्वज्ञम् *"अमूरः-अमूढः"* [ निरु० ६ । ८ ] ( नयन्तः ) स्वान्तरे प्रापयन्तः ( मूढाः ) अल्पज्ञाः ( प्र भूः ) प्रभवेयुः *"भूः-भव"* [ ऋ० १ । ३३ । ३ दयानन्दः ] *"लोडर्थे लुङ् न माङ्योगे-इत्यडभावः, दयानन्दः"* वचनव्यत्ययः ( वनाम् ) वननीयम् *"अमि पूर्वरूपाभावश्छन्दसि वावचनात्, सायणः"* ( हिरिश्मश्रुम् ) हिरण्यश्मश्रुमिव तेजस्विनम् *"हिरिश्मश्रुः हिरण्यमिव श्मश्रूणि यस्य सः"* [ ऋ० ५ । ५ । ७ दयानन्दः ] ( अर्वाणं न )

अश्वमिव व्याप्तगतिमन्तम् ( धनर्चम् ) धना प्रीणनीयाऽर्चा यस्मै तं परमात्मानम् ( धियं धुः ) प्रज्ञां धारयन्तु जनाः *"धुः-दधति"* [ *ऋ० ५ । ५८ । ७ दयानन्दः* ] ॥ ५ ॥

**भाषान्वयार्थ**—( जयन्तम् ) जड़ चेतन को स्वाधीन करते हुए–( महाम् ) महान्–( विपोधाम् ) मेधावी स्तुतिकर्त्ताओं के धारण करने वाले–( पुरां दर्माणम् ) मानसिक वासनाओं के नष्ट करने वाले–( अमूरम् ) सदा सावधान–सर्वज्ञ ( गर्भम् ) स्तुति करने योग्य परमात्मा को ( नयन्तः ) अपने अन्दर प्राप्त करते हुए ( मूढाः ) अल्पज्ञ मनुष्य भी ( प्र भूः ) समर्थ हो जाते हैं–कुशल हो जाते हैं ( वनाम् ) वननीय–( हिरिश्मश्रुम् ) हिरण्यश्मश्रु जैसे तेजस्वी–( अर्वाणं न ) व्याप्तगतिमान् घोड़े की भांति ( धनर्चम् ) प्रसन्न करने वाली अर्चा–स्तुति जिसके लिए की जाये ऐसे परमात्मा के प्रति ( धियं धुः ) बुद्धि–आस्तिकता को मनुष्य धारण करें ॥ ५ ॥

**भावार्थ**—परमात्मा समस्त जड़ चेतन को अपने अधिकार में रखे हुए है। वह अपने उपासकों की वासनाओं को नष्ट करता है। अल्पज्ञानी मनुष्य उसकी उपासना से कुशल बन जाते हैं। उस तेजस्वी परमात्मा की यथार्थ अर्चना और उसके प्रति आस्तिक बुद्धि मनुष्यों को रखनी चाहिए ॥ ५ ॥

**नि पस्त्यासु त्रितः स्तभूयन्परिवीतो योनौ सीददन्तः ।**
**अतः संगृभ्या विशां दमूना विधर्मणायन्त्रैरीयते नॄन् ॥ ६ ॥**

नि । पस्त्यासु । त्रितः । स्तभुऽयन् । परिऽवीतः । योनौ । सीदत् । अन्तरिति । अतः । सम्ऽगृभ्य । विशाम् । दमूनाः । विऽधर्मणा । अयन्त्रैः । ईयते । नॄन् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( पस्त्यासु ) विक्षु मनुष्यादिप्रजासु *"विशो वै पस्त्याः"* [ *श० ५ । ३ । ५ । १९* ] ( त्रितः ) सुखत्रयस्य विस्तारकः परमात्मा, *"यस्त्रीणि शरीरात्ममनस्सम्बन्धीनि सुखानि तनोति सः"* [ *ऋ० २ । ३४ । १४ दयानन्दः* ] ( परिवीतः ) परिप्राप्तः ( स्तभुयन् ) ता विशः प्रजाः स्थिरीकुर्वन् ( योनौ–अन्तः-निसीदत् ) हृदयेऽन्तर्निषीदति ( अतः ) अत एव ( विशां सङ्गृभ्य दमूनाः ) मनुष्यप्रजानां कर्माणि सङ्गृह्य तत्कर्मफलाय दानमनाः सन् ( विधर्मणा ) स्वकीयन्यायकर्मणा *"विधर्मधर्मस्य विधृत्यै"* [ *ताण्ड्य० १५ । ५ । ३१* ] ( नॄन्-अयन्त्रैः-ईहते ) मुमुक्षून् *"नरो ह वै देवविशः"* [ *जै० १ । ८९* ] कैश्चिद् गमनसाधनैर्विना प्राप्नोति साक्षाद् भवति ॥ ६ ॥

**भाषान्वयार्थ**—( पस्त्यासु ) मनुष्य प्रजाओं के अन्दर ( त्रितः ) शरीर–आत्मा–मन सम्बन्धी तीनों सुखों का विस्तार करने वाला परमात्मा ( परिवीतः ) परिप्राप्त–व्याप्त ( स्तभुयन् ) उन मनुष्यादि प्रजाओं को स्थिर करता हुआ–नियत करता हुआ ( योनौ-अन्तः-नि-सीदत् ) हृदयों के अन्दर विराजमान है ( अतः ) इससे ( विशां सङ्गृभ्य दमूनाः ) मनुष्य प्रजाओं के कर्मों को लेकर उनके कर्मफल देने के मनवाला होकर ( विधर्मणा ) अपने न्यायकर्म से ( नॄन्-अयन्त्रैः-ईयते ) मुमुक्षुओं को किन्हीं गमनसाधनों के बिना प्राप्त होता है–साक्षात् होता है ॥ ६ ॥

भावार्थ— मनुष्यों के शारीरिक मानसिक तथा आत्मिक सुखों का विस्तार करने वाला परमात्मा है। वह उनके कर्मानुसार फल देता है। मुमुक्षु उपासकों के हृदय में स्वतः साक्षात् होता है उसे किसी यानादि साधन की आवश्यकता नहीं है ॥ ६ ॥

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः।
श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ ७ ॥

अस्य। अजरासः। दमाम्। अरित्राः। अर्चत्ऽधूमासः। अग्नयः। पावकाः। श्वितीचयः। श्वात्रासः। भुरण्यवः। वनऽसदः। वायवः। न। सोमाः ॥ ७ ॥

संस्कृतान्वयार्थः—(अस्य) एतस्योपासकस्य (दमाम्) दमनकर्तृभ्यो बाधकेभ्यः *"दमाम्-यो दामयति तम्"* [*ऋ० ६। ३। ७ दयानन्दः*] (अरित्राः) तेभ्य एव अरिभ्यस्त्राता *"अरित्राः-ये अरिभ्यस्त्रायन्ते ते"* [*यजु० ३३। १। दयानन्दः*] 'अत्र सर्वत्र बहुवचनमादरार्थम्' (अजरासः) अजरः-जरारहितः (अर्चद्धूमासः) ज्वलत्तेजाः-अर्चनीयतेजोयुक्तो वा (पावकाः) पवित्रकारकः (श्वितीचयः) श्वेतवर्णसंस्त्यानः शुभ्रः *"श्वितीचयः ये श्वितिं श्वेतवर्णं चिन्वन्ति ते"* [*यजु० ३३। १ दयानन्दः*] (श्वात्रासः) शीघ्रकारी (भुरण्यवः) पालनकर्त्ता (वनर्षदः) ये वने वनयितरि सम्भाजयितरि स्तोतरि सीदन्ति ते-स्तोतरि प्रापणशीलः *"वनर्षदः-ये वने सीदन्ति ते"* [*ऋ० २। ३१। १ 'वा छन्दसीति रुडागमः' दयानन्दः*] (वायवः-न सोमाः) वायव इव शान्तप्रवाहाः-वायुरिव शान्तप्रवाहवान् (अग्नयः) ज्ञानप्रकाशकः परमात्माऽस्ति ॥ ७ ॥

भाषान्वयार्थ—(अस्य) इस उपासक के (दमाम्) दमनकर्त्ता बाधकों से (अरित्राः) रक्षा करने वाला (अजरासः) जरारहित (अर्चद्धूमासः) अर्चनीय तेज वाला (पावकः) पवित्रकारक (श्वितीचयः) शुभ्रस्वरूप (श्वात्रासः) शीघ्रकारी (भुरण्यवः) पालनकर्त्ता (वनर्षदः) सम्भक्ति-स्तुति करने वाले में प्राप्तिशील-प्राप्त होने वाला (वायवः-न सोमाः) वायु के समान प्राप्त होने वाला शान्तस्वरूप (अग्नयः) ज्ञानप्रकाशक परमात्मा है ॥ ७ ।

भावार्थ—उपासक के बाधकों को नष्ट करने वाला उनसे रक्षा करने वाला परमात्मा अजर, अर्चनीय तेज वाला, पवित्रकर्त्ता, शुभ्रस्वरूप वाला, शीघ्रकारी, पालनकर्त्ता, उपासक के हृदय में प्राप्त होने वाला, शान्त गतिमान् और ज्ञानप्रकाशक है ॥ ७ ॥

प्र जिह्वया भरते वेपो अग्निः प्र वयुनानि चेतसा पृथिव्याः।
तमायवः शुचयन्तं पावकं मन्द्रं होतारं दधिरे यजिष्ठम् ॥ ८ ॥

प्र। जिह्वया। भरते। वेपः। अग्निः। प्र। वयुनानि। चेतसा। पृथिव्याः। तम्। आयवः। शुचयन्तम्। पावकम्। मन्द्रम्। होतारम्। दधिरे। यजिष्ठम् ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अग्निः ) ज्ञानप्रकाशकः परमात्मा ( जिह्वया ) वेदवाचा स्तुतिवाचा वा *"जिह्वा वाङ्नाम"* [ *निघ० १ । ११* ] ( वेपः प्रभरते ) कर्म *"वेपः कर्मनाम"* [ *निघ० २ । १* ] मनुष्येषु प्रकृष्टं धारयति ( पृथिव्याः-वयुनानि चेतसा प्र ) प्रथितायाः सृष्टेश्चेतयित्रा वेदज्ञानेन प्रज्ञानानि मनुष्येषु प्रकृष्टं धारयति ( तं शुचयन्तं पावकं मन्द्रं होतारं यजिष्ठम् ) तं ज्ञानेन प्रकाशमानं पवित्रकारकं स्तुत्यं स्वीकर्तारं बहुसङ्गमनीयम् ( आयवः-दधिरे ) मनुष्याः *"आयवः-मनुष्यनाम"* [ *निघ० २ । ३* ] धारयन्ति ॥ ८ ॥

**भाषान्वयार्थ**—( अग्निः ) ज्ञानप्रकाशक परमात्मा ( जिह्वया ) वेदवाणी द्वारा वा स्तुति द्वारा ( वेपः प्रभरते ) मनुष्यों में कर्म—कर्मशक्ति को प्रकृष्टरूप से भरता है—धरता है ( पृथिव्याः -वयुनानि चेतसा प्र ) प्रथित—विस्तृत सृष्टि के प्रज्ञानों को वेदज्ञान से मनुष्यों में प्रकृष्ट रूप से धारण करता है ( तं शुचयन्तं पावकं मन्द्रं होता रं यजिष्ठम् ) उस ज्ञान से प्रकाशमान, पवित्र-कारक, स्तुति करने योग्य, स्वीकर्त्ता, बहुसङ्गमनीय परमात्मा को ( आयवः-दधिरे ) मनुष्य लोग धारण करते हैं ॥ ८ ॥

**भावार्थ**—परमात्मा वेदद्वारा मनुष्यों को कर्मविधान का उपदेश देता है तथा वेद के द्वारा ही विस्तृत सृष्टि के ज्ञानकर्मों को भी जनाता है। वह परमात्मा सबके द्वारा स्तुति करने और धारण करने योग्य है ॥ ८ ॥

**द्यावा यमग्निं पृथिवी जनिष्टामापस्त्वष्टा भृगवो यं सहोभिः ।**
**ईळेन्यं प्रथमं मातरिश्वा देवास्ततक्षुर्मनवे यजत्रम् ॥ ९ ॥**

द्यावा । यम् । अग्निम् । पृथिवी इति । जनिष्टाम् । आपः । त्वष्टा । भृगवः । यम् । सहःऽभिः । ईळेन्यम् । प्रथमम् । मातरिश्वा । देवाः । ततक्षुः । मनवे । यजत्रम् ॥ ९ ॥

**संस्कृतान्वयार्थः**—( द्यावा पृथिवी ) द्यावापृथिव्यौ द्यौर्द्युलोकः पृथिवीलोकश्चोभौ ( यम्-अग्निं सहोभिः-जनिष्टाम् ) यमग्रणायकं जगत्प्रकाशकं परमात्मानं बलैः प्रादुर्भावयतः-प्रदर्शयतः ( आपः-च ) जलप्रवाहाश्च स्ववेगैः ( भृगवः ) भर्जनशीलाः-रश्मयः ( यम् ) यं परमात्मानं स्वतेजःप्रभावैः प्रदर्शयन्ति ( मातरिश्वा देवाः-मनवे प्रथमम्-ईळेन्यं यजत्रं ततक्षुः ) वायुः-दिविभवाः पदार्थाः—मननशीलायास्तिकजनाय प्रमुखं श्रेष्ठं स्तुत्यमध्यात्मयज्ञे यजनीयं परमात्मानं तक्षन्ति स्पष्टं दर्शयन्ति, स उपास्य इति शेषः ॥ ९ ॥

**भाषान्वयार्थ**–( द्यावा पृथिवी ) द्युलोक और पृथिवीलोक दोनों ( यम्—अग्निं सहोभिः -जनिष्टाम् ) जिस अग्रणायक जगत्प्रकाशक परमात्मा को अपने गुण बलों से प्रसिद्ध—प्रदर्शित करते हैं ( आपः-च ) और जलप्रवाह भी जिसे प्रसिद्ध करते हैं—प्रदर्शित करते हैं ( भृगवः ) भर्जनशील रश्मियां—किरणें ( यम् ) जिस परमात्मा को अपने तेजप्रभावों से प्रदर्शित करती हैं ( मातरिश्वा

देवाः ) वायु और द्युलोक-आकाश के पदार्थ ( मनवे प्रथमम्-ईळेन्यं यजत्रं ततक्षुः ) मननशील आस्तिकजन के लिए प्रमुख श्रेष्ठ स्तुति करने योग्य अध्यात्मयज्ञ में यजनीय परमात्मा को स्पष्ट दर्शाते हैं—उपास्य रूप में सिद्ध करते हैं ॥ ९ ॥

भावार्थ—द्युलोक, पृथिवीलोक, जलप्रवाह, किरणें और वायु तथा आकाश के पदार्थ परमात्मा को अपना नायक और कर्त्ता के रूप में मननशील मनुष्य के लिए दर्शाते हैं—सिद्ध करते हैं। उस परमात्मा की उपासना करनी चाहिए ॥ ९ ॥

यं त्वा देवा दधिरे हव्यवाहं पुरुस्पृहो मानुषासो यजत्रम् ।
स यामन्नग्ने स्तुवते वयो धाः प्रदेवयन् यशसः सं हि पूर्वीः ॥ १० ॥

यम् । त्वा । देवाः । दधिरे । हव्यऽवाहम् । पुरुऽस्पृहः । मानुषासः । यजत्रम् ।
सः । यामन् । अग्ने । स्तुवते । वयः । धाः । प्र । देवऽयन् । यशसः । सम् । हि ।
पूर्वीः ॥ १० ॥

**संस्कृतान्वयार्थः**— ( अग्ने ) हे अग्रणायक ! ज्ञानप्रकाशक परमात्मन् ! ( यं त्वा हव्यवाहं यजत्रम् ) यं त्वां प्रार्थनावचनस्य स्वीकर्त्तारं यजनीयं सङ्गमनीयं देवम् (पुरुस्पृहः-मानुषासः-दधिरे) बहुवाञ्छन्तो जनाः-धारयन्ति ( सः स्तुवते यामन् वयः-धाः ) स त्वं स्तुतिकर्त्रे मोक्षमार्गे जीवनमायुर्बलं धारय ( देवयन् यशसः पूर्वीः-हि सम् ) त्वां देवं कामयमानो जनो यशांसि प्राप्नोति पुरातनीः श्रेष्ठा वा सम्पत्तीः सम्यगाप्नोति ॥ १० ॥

**भाषान्वयार्थ**—( अग्ने ) हे अग्रणायक, ज्ञानप्रकाशक, परमात्मन् ! ( यं त्वा हव्यवाहं यजत्रम् ) जिस तुझ प्रार्थनावचन के स्वीकार कर्त्ता सङ्गमनीय देव को ( पुरुस्पृहः-मानुषासः-दधिरे) बहुत चाहने वाले मनुष्य धारण करते हैं ( सः स्तुवते यामन् वयः-धाः ) वह तू स्तुतिकर्त्ता के लिए मोक्षमार्ग में जीवन, आयु, बल को धारण करा ( देवयन् यशसः पूर्वीः-हि सम्० ) तुझ देव को चाहने वाला मनुष्य भांति-भांति के यशों को प्राप्त करता है और पुरातन या श्रेष्ठ सम्पत्तियों को भी प्राप्त करता है ॥ १० ॥

**भावार्थ**—परमात्मा प्रार्थनावचनों को स्वीकार करता है, वह सङ्गमनीय है, उसे चाहने वाले मनुष्य धारण करते हैं—उपासना में लाते हैं। उपासक जन उसकी कृपा से नानाप्रकार के यशों को और आध्यामित्क सम्पत्तियों को प्राप्त करते हैं ॥ १० ॥



# सप्तचत्वारिंशं सूक्तम्

ऋषिः—सप्तगुः ।

देवता—वैकुण्ठ इन्द्रः ।

छन्दः—१, ४, ७, त्रिष्टुप् । २ आर्ची स्वराट् त्रिष्टुप् । ३ भुरिक् त्रिष्टुप् । ५, ६, ८, निचृत् त्रिष्टुप् ।

विषयः—सूक्तेऽत्र 'इन्द्र' शब्देन परमात्मा कथ्यते स च जगतो मोक्षस्य स्वामी सन् यथायोग्यं भोगप्रदाता योगसाधकेभ्यो मोक्षस्य दाता चेत्येवमादयो विषया वर्तन्ते ।

इस सूक्त में 'इन्द्र' शब्द से परमात्मा कहा गया है और वह जगत् और मोक्ष का स्वामी होता हुआ यथायोग्य भोग का दाता, योग साधकों के लिए मोक्षदाता, आदि विषय वर्णित हैं ॥

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ १ ॥

जगृभ्म । ते । दक्षिणम् । इन्द्र । हस्तम् । वसुऽयवः । वसुऽपते । वसूनाम् । विद्म । हि । त्वा । गोऽपतिम् । शूर । गोनाम् । अस्मभ्यम् । चित्रम् । वृषणम । रयिम् । दाः ॥ १ ॥

**संस्कृतान्वयार्थः**—( वसूनां वसुपते शूर-इन्द्र ) हे धनानां धनस्वामिन् सर्वत्रगतिमन् व्यापक परमात्मन् ! *"शूरः शवतेर्गतिकर्मणः"* [ *निरु० ३ । १३* ] ( वसूयवः ) वयं धनकामाः ( ते दक्षिणं हस्तं जगृभ्म ) तव दश्यते दीयते येन तं दानसाधनन् *"दक्षिणः....... दशतेर्वा स्याद्दानकर्मणः"* [ *निरु० १ । ७* ] हस्तमिवालम्बनमाश्रयं गृह्णीमः ( त्वा गोनां गोपतिं विद्म हि ) गवां सुखस्य गमयितॄणां पदार्थानां तथाभूतानाञ्च स्वामिनं त्वां जानीम मन्यामहे, अतः ( अस्मभ्यं चित्रं वृषणं रयिं दाः ) अस्मदर्थं चायनीयं दर्शनीयं स्वरूपभूतं सुखवर्षकं धनमात्मपोषं देहि ॥ १ ॥

**भाषान्वयार्थ**—( वसूनां वसुपते शूर इन्द्र ) हे धनों के धनस्वामिन् सर्वत्रगतिमान् व्यापक परमात्मन् ! ( वसूयवः ) हम धन की कामना करने वाले ( ते दक्षिणं हस्तं जगृभ्म ) तेरे देने

वाले हस्तरूप साधन को पकड़ते हैं–हाथ के समान आश्रय को ग्रहण करते हैं ( त्वा गोनां गोपतिं विद्म हि ) तुझ सुख प्राप्त कराने वाले पदार्थों के स्वामी को हम जानते हैं–मानते हैं–उपासना में लाते हैं ( अस्मभ्यं चित्रं वृषणं रयिं दाः ) हमारे लिए दर्शनीय अपने स्वरूप को और सुखवर्षक आत्मपोषक धन को दे ॥ १ ॥

भावार्थ—परमात्मा समस्त धनों और सुखों को देने वाले पदार्थों का स्वामी है, उसकी हम उपासना करें तो वह हमें निश्चित धन और सुख से सम्पन्न कर सकता है ॥ १ ॥

स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ।
चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ २ ॥

सुऽआयुधम् । सुऽअवसम् । सुऽनीथम् । चतुःऽसमुद्रम् । धरुणम् । रयीणाम् । चर्कृत्यम् । शंस्यम् । भूरिऽवारम् । अस्मभ्यम् । चित्रम । वृषणम् । रयिम् । दाः ॥ २ ॥

संस्कृतान्वयार्थः—( सु-आयुधम् ) शोभनायुधारयितारम् ( सु-अवसम् ) सम्यग्रक्षणकर्तारम् ( सुनीथम् ) सुसञ्चालकं शोभननेतारम् ( चतुः समुद्रम् ) चत्वारः कामाः कमनीयपदार्था धर्मार्थकाममोक्षा यस्मात् सिद्ध्यन्ति तथाभूतम् *"कामं समुद्रमाविश"* [ तै० आ० ३ । १० । २ ] ( रयीणां धरुणम् ) पोषणकराणां धनानां धारकम् ( चर्कृत्यम् ) पुनः पुनः सत्करणीयमुपासनीयम् *"चर्कृत्यः-यो जगदीश्वरः सर्वमनुष्यैः पुनः पुनरुपासनायोग्यः"* [ *ऋग्वेदादिभाष्यभूमिका, दयानन्दः* ] ( शस्यम् ) प्रशंसनीयम् ( भूरिवारम् ) भूरयो वाराः-वरणीया यस्मात् तं बहुवरणीयानां दातारं विद्म जानीम इति ( अस्मभ्यं चित्रं वृषणं रयिं दाः ) पूर्ववत् ॥ २ ॥

भाषान्वयार्थ—( सु-आयुधम् ) शोभन आयु के धारण कराने वाले–( सु-अवसम् ) सम्यक् रक्षा करने वाले–( सुनीथम् ) सुसंचालक–अच्छे नेता–( चतुः-समुद्रम् ) चार अर्थात् धर्मार्थकाममोक्ष जिससे सिद्ध होते हैं उस ऐसे–( रयीणां धरुणम् ) पोषण कारक धनों के धारण करने वाले–( चर्कृत्यम् ) पुनः पुनः सत्करणीय–उपासनीय–( शस्यम् ) प्रशंसनीय–( भूरिवारम् ) बहुत वरणीय पदार्थों के दाता परमात्मा को जानते हैं–मानते हैं ( अस्मभ्यं चित्रं वृषणं रयिं दाः ) पूर्ववत् ॥ २ ॥

भावार्थ—परमात्मा उत्तम आयु का देने वाला, उत्तम रक्षक, धर्मार्थकाममोक्ष का साधक, विविध धनों का धारण करने वाला, बहुत वरणीय पदार्थों के दाता सत्करणीय परमात्मा को जानना और मानना चाहिए वह हमें निश्चित धन और सुख से सम्पन्न कर सकता है ॥ २ ॥

सुब्रह्माणं देववन्तं बृहन्तमुरुं गभीरं पृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ३ ॥

सुऽब्रह्माणम् । देवऽवन्तम् । बृहन्तम् । उरुम् । गभीरम । पृथुऽबुध्नम् । इन्द्र । श्रुतऽऋषिम् । उग्रम । अभिमातिऽसहम् । अस्मभ्यम् । चित्रम । वृषणम । रयिम् । दाः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( सुब्रह्माणम् ) शोभनवेदज्ञानस्वामिनम् ( देवयन्तम् ) मुमुक्षून् कामयमानम् ( बृहन्तम् ) सर्वतो महान्तम् ( उरुम् ) विस्तीर्णमनन्तम् (गभीरम्) अपारम् (पृथुबुध्नम्) सर्वस्य जगतः प्रथितमूलरूपम् ( श्रुतऋषिम् ) श्रुतः श्रोतव्य ऋषिभिस्तथाभूतो यस्तम् ( उग्रम् ) उद्गूर्णं सर्वत उपरि वर्तमानम् ( अभिमातिषहम् ) अभिमानिनां परिभावकं त्वामिन्द्रं परमात्मानं विद्म जानीम इति ( इन्द्र ) स त्वमिन्द्र ! ( अस्मभ्यम्....) पूर्ववत् ॥ ३ ॥

**भाषान्वयार्थ**—( सुब्रह्माणम् ) शोभन वेदज्ञान के स्वामी–( देवयन्तम् ) मुमुक्षुओं के चाहने वाले–( बृहन्तम् ) सर्वतो महान्–( उरुम् ) अनन्त–( गभीरम् ) अपार–( पृथुबुध्नम् ) सब जगत् के प्रथितमूल ( श्रुतऋषिम् ) ऋषियों द्वारा श्रवण करने योग्य–( उग्रम् ) सब के ऊपर विराजमान–( अभिमातिषहम् ) अभिमानी जनों के दबाने वाले परमात्मा को जानते हैं–मानते हैं ( इन्द्र ) वह तू इन्द्र ! ( अस्मभ्यम्... ) पूर्ववत् ॥ ३ ॥

**भावार्थ**—परमात्मा उत्तम वेदज्ञान का स्वामी है। सबसे महान्, अनन्त, जगत् का आदि कारण, ऋषियों द्वारा श्रवण करने योग्य, सर्वोपरि विराजमान, अभिमानियों का मानमर्दक है, उस परमात्मा को जानना चाहिए, वह हमें निश्चित रूप से धन और सुख से सम्पन्न कर सकता है ॥ ३ ॥

सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ४ ॥

सनत्ऽवाजम् । विप्रऽवीरम् । तरुत्रम् । धनऽस्पृतम् । शूशुऽवांसम् । सुऽदक्षम् । दस्युऽहनम् । पूःऽभिदम् । इन्द्र । सत्यम् । अस्मभ्यम् । चित्रम । वृषणम । रयिम् । दाः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( सनद्वाजम् ) वाजममृतान्नं सनति सम्भजतीति सनद्वाजम्–अमृतान्नसम्भाजयितारम्, यथा भरद्वाजम्–"*प्रजा वै वाजास्ता एष बिभर्ति तस्माद् भरद्वाजः*" [ ऐ० आ० २ । २ । २ ] ( विप्रवीरम् ) विप्रा उपासका मेधाविनो वीरा वीर्यं धारयमाणा यस्य तम् ( तरुत्रम् ) भवसागरात् तारकम् ( धनस्पृतम् धनं ) स्पारयति प्रापयति यस्तम् 'अन्तर्गतो णिजर्थः' ( शूशुवांसम् ) वर्धयितारम्, व्याप्नुवन्तम्, "*शूशुवांसं व्याप्नुवन्तम्*" [ *ऋ० ६ । १८ । २ दयानन्दः* ] ( सुदक्षम् ) श्रेष्ठबलवन्तम् ( दस्युहनम् ) दुष्टनाशकम् ( पूर्भिदम् ) पापपुरां मनोवृत्तीनां भेत्तारम् ( सत्यम् ) सत्यमविनाशिनम्, इन्द्र ! त्वां विद्म जानीम ( अस्मभ्यम्....) पूर्ववत् ॥ ४ ॥

भाषान्वयार्थ—( सनद्वाजम् ) अमृतान्न के सम्भाजक-( विप्रवीरम् ) मेधावी उपासकों वाले-( तरुतारम् ) संसारसागर तराने वाले-( धनस्पृतम् ) धनप्राप्त कराने वाले-( शूशुवांसम् ) बढाने वाले या व्यापने वाले-( सुदक्षम् ) श्रेष्ठ बलवाले-( दस्युहनम् ) दुष्टनाशक ( पूर्भिदम् ) पापपुरों-मन की वासना के नाशक-( सत्यम् ) अविनाशी तुझ परमात्मा को हम जानते हैं-मानते हैं ( अस्मभ्यम् ) पूर्ववत् ॥ ४ ॥

भावार्थ—परमात्मा अमृतान्न भोग का दाता, मेधावी लोगों द्वारा उपासनीय, संसारसागर से तराने वाला, धन को प्राप्त कराने वाला, वर्धक, व्यापक, प्रशस्त बल वाला, दुष्टनाशक, मानसिक वासनाओं को दूर करने वाला एवं अविनाशी है। वह सबके द्वारा जानने, मानने और उपासना करने योग्य है ॥ ४ ॥

अश्वा॑वन्तं र॒थिनं॑ वी॒रव॑न्तं सह॒स्रिणं॑ श॒तिनं॒ वाज॑मिन्द्र ।
भ॒द्रव्रा॑तं॒ विप्र॑वीरं स्व॒र्षाम॒स्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दाः ॥ ५ ॥

अश्व॑ऽवन्तम् । र॒थिन॑म् । वी॒रऽव॑न्तम् । स॒हु॒स्रिण॑म् । श॒तिन॑म् । वाज॑म् । इ॒न्द्र॒ । भ॒द्रऽव्रा॑तम् । विप्र॑ऽवीरम् । स्वः॒ऽसाम् । अ॒स्मभ्य॑म् । चि॒त्रम् । वृष॑णम् । र॒यिम् । दाः॒ ॥ ५ ॥

संस्कृतान्वयार्थः—( अश्वान्वतम् ) अश्ववद्व्याप्तधर्माणम् ( रथिनम् ) मुमुक्षूणां रमणस्थानं मोक्षस्तद्वन्तम् ( वीरवन्तम् ) अध्यात्मवीराणां स्वामिनम् ( सहस्रिणं शतिनं वाजम् ) सहस्रगुणितं तथासंख्यगुणितवाजममृतान्नरूपम् ( भद्रव्रातम् ) भद्राणि कल्याणकराणि वस्तुवृन्दानि यस्य तथाभूतम् ( विप्रवीरम् ) विप्रा मेधाविन उपासका वीराः पुत्राः *"पुत्रो वै वीरः"* [ श० ३ । ३ । १ । १२] यस्य तथाभूतम् ( स्वर्षाम् ) सुखसम्भाजकं सुखदातारं विद्म जानीमः ( अस्मभ्यम्·····) पूर्ववत् ॥ ५ ॥

भाषान्वयार्थ—( अश्वावन्तम् ) अश्व के समान व्याप्ति वाले-( रथिनम् ) मुमुक्षुओं के रमणयोग्य मोक्ष वाले-( वीरवन्तम् ) अध्यात्मवीरों के स्वामी-( सहस्रिणं शतिनं वाजम् ) सहस्रगुणित तथा असंख्यगुणित, अमृतान्नरूप-( भद्रव्रातम् ) कल्याणकारी वस्तुओं के स्वामी-( विप्रवीरम् ) मेधावी उपासक वाले-( स्वर्षाम् ) सुखसम्पादक-सुखदाता परमात्मा को हम जानते हैं-मानते हैं ( अस्मभ्यम्...) पूर्ववत् ॥ ५ ॥

भावार्थ—व्याप्तिमान्-सब में व्याप्त, मुमुक्षुओं के मोक्ष का स्वामी, अध्यात्मवीरों का स्वामी, सहस्रों और असंख्य अमृतान्न भोगों का स्वामी, कल्याणकारी वस्तु समूहों का स्वामी, मेधावी उपासकों का स्वामी परमात्मा मनुष्यों का सुखसम्भाजक जानने-मानने योग्य है वह धन और सुखों से हमें अवश्य सम्पन्न करता है ॥ ५ ॥

प्र स॒प्तगु॑मृ॒तधी॑तिं सुमे॒धां बृह॒स्पतिं॑ म॒तिरच्छा॑ जिगाति ।
य आ॑ङ्गिर॒सो नम॑सोपस॒द्यो॑ऽस्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दाः ॥ ६ ॥

प्र । सप्तऽगुम् । ऋतऽधीतिम् । सुऽमेधाम् । बृहस्पतिम् । मतिः । अच्छ । जिगाति । यः । आङ्गिरसः । नमसा । उपऽसद्यः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ६ ॥

**संस्कृतान्वयार्थः**—( सप्तगुम् ) सप्तगावो गानकर्त्र्यो गायत्रीप्रभृतयो वाचो यस्य तथाभूतम् ( ऋतधीतिम् ) सत्यकर्माणम् *"धीतिभिः कर्मभिः"* [ *निरु० २ । २४* ] ( सुमेधाम् ) शोभनप्रज्ञम् ( बृहस्पतिम ) बृहतामाकाशादीनां पतिं स्वामिनम् ( यः-आङ्गिरसः-मतिः ) यः खलु प्राणानामभ्यासी मेधावीजनः *"मतयः-मेधाविनाम"* [ *निघ० ३ । १५* ] ( नमसा–उपसद्यः-अच्छ प्रजिगाति ) स्तुत्या प्राप्तुं योग्योऽभिमुखं प्राप्नोति ( अस्मभ्यम्.... ) पूर्ववत् ॥ ६ ॥

**भाषान्वयार्थ**—( सप्तगुम् ) सात छन्दोमय गान करने वाली वेदवाणियों के स्वामी –( ऋतधीतिम् ) सत्यकर्म वाले–( सुमेधाम् ) शोभन प्रज्ञा वाले–( बृहस्पतिम् ) महान् आकाशादि पदार्थों के स्वामी परमात्मा को ( यः-आङ्गिरसः-मतिः ) जो प्राणायाम का अभ्यासी मेधावी जन है वह ( नमसा-उपसद्यः-अच्छ-प्र जिगाति ) स्तुति से समीप पहुंचने वाला, भलीभांति प्राप्त करता है ( अस्मभ्यम्... ) पूर्ववत् ॥ ६ ॥

**भावार्थ**—प्राणायाम आदि योगाभ्यास करने वाला जन वेदवाणी के स्वामी, सर्वज्ञ, सत्यकर्म वाले महान् विश्व के स्वामी परमात्मा को स्तुति से प्राप्त करता है । जो परमात्मा हमें निश्चित धनों और सुखों को प्राप्त कराता है ॥ ६ ॥

**वनीवानो मम दूतास इन्द्रं स्तोमाश्चरन्ति सुमतीरियानाः ।**
**हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ७ ॥**

वनीवानः । मम । दूतासः । इन्द्रम् । स्तोमाः । चरन्ति । सुऽमतीः । इयानाः । हृदिऽस्पृशः । मनसा । वच्यमानाः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( मम ) मम स्तोतुः ( स्तोमाः ) पूर्वोक्ताः स्तुतिसमूहाः ( वनीवानाः ) सम्भजनवन्तः-अनुरागवन्तः ( दूतासः ) दूतवदभिप्रायं प्रकटयन्तः ( सुमतीः-इयानाः ) अनुकूलमतीः प्रियकारिणीर्मतीर्याचमानाः ( हृदिस्पृशः-मनसा वच्यमानाः ) हृदये संलग्ना मनसाऽन्तःकरणेनोच्यमानाः ( इन्द्रं चरन्ति ) परमात्मानं प्राप्नुवन्ति ( अस्मभ्यम्........ ) पूर्ववत् ॥ ७ ॥

**भाषान्वयार्थ**—( मम ) मुझ स्तोता के ( स्तोमाः ) पूर्वोक्त स्तुतिसमूह ( वनीवानाः ) अनुराग वाले ( दूतासः ) दूत की भांति अभिप्राय प्रकट करने वाले ( सुमतीः-इयानाः ) प्रियकारिणी मतियों को चाहते हुए ( हृदिस्पृशः-मनसा वच्यमानाः ) हृदय में लगती हुई–अन्तःकरण

से उच्चरित होती हुई सी ( इन्द्रं चरन्ति ) परमात्मा को प्राप्त होती हैं ( अस्मभ्यम्⋯⋯ ) पूर्ववत् ॥ ७ ॥

भावार्थ—उपासक की स्तुतियां अनुरागपूर्ण कल्याण चाहती हुई, हृदय में लगती हुई, अन्तःकरण से निकली हुई परमात्मा के लिए होनी चाहिएं। वह परमात्मा हमारे लिए धनों और सुखों को प्राप्त कराता है ॥ ७ ॥

यत्त्वा यामि दुद्धि तन्न इन्द्र बृहन्तं क्षयमसमं जनानाम् ।
अभि तद्द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ८ ॥

यत् । त्वा । यामि । दुद्धि । तत् । नः । इन्द्र । बृहन्तम् । क्षयम् । असमम् । जनानाम् । अभि । तत् । द्यावापृथिवी इति । गृणीताम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ८ ॥

संस्कृतान्वयार्थः—( इन्द्र ) हे ऐश्वर्यवन् परमात्मन् ! ( त्वा ) त्वाम् ( यत्-यामि ) यत् खलु याचामि याचेऽहम् *"यामि याच्ञाकर्मा" [ निघ० ३ । १९ ]* ( तत्-नः-दद्धि ) तदस्मभ्यं देहि *"दद दाने"* [ भ्वादिः ] 'लोटि व्यत्ययेन परस्मैपदं बहुलं छन्दसि शपो लुक् च', तत्किमित्युच्यते ( जनानाम्-असमं क्षयम् ) उपासकजनानामन्येभ्यो विशिष्टममरस्थानं मोक्षमित्यर्थः ( तत्-द्यावापृथिवी-अभिगृणीताम् ) तत् खलु मातापितरौ मातापितृभूतौ स्त्रीपुरुषौ, अध्यापिकाध्यापकौ *"द्यौर्मे पिता⋯माता पृथिवी महीयम्" [ ऋ० १ । १६४ । ३३ ]* अभ्युपदिशतः ( अस्मभ्यम्⋯) पूर्ववत् ॥ ८ ॥

भाषान्वयार्थ—( इन्द्र ) हे ऐश्वर्यवन् परमात्मन् ! ( त्वा ) तुझे-तुझ से ( यत्-यामि ) जो मांगता हूँ या चाहता हूँ ( तत्-नः-दद्धि ) उसे हमारे लिए प्रदान कर ( जनानाम्-असमं क्षयम् ) उपासक जनों का अन्यों की अपेक्षा जो विशिष्ट अमर स्थान मोक्ष है उसे दे ( तत्-द्यावापृथिवी-अभिगृणीताम् ) उसे माता पिता रूप स्त्री पुरुष अध्यापिका अध्यापक, उसका उपदेश करते हैं ( अस्मभ्यम्⋯⋯ ) पूर्ववत् ॥ ८ ॥

भावार्थ—उपासकों का अभीष्ट अमरधाम मोक्ष है। उसे प्राप्त करने के लिए परमात्मा से याचना करनी चाहिए। माता-पिता, अध्यापिका-अध्यापक, स्त्री-पुरुष, अपने पुत्रों और शिष्यों को उसकी प्राप्ति करने के यत्न का उपदेश दें ॥ ८ ॥



# अष्टाचत्वारिंशं सूक्तम्

ऋषिः—वैकुण्ठ इन्द्रः ।

देवता—वैकुण्ठ इन्द्रः ।

छन्दः—१, ३, पादनिचृज्जगती । २, ८, जगती । ४, निचृज्जगती । ५, विराड् जगती । ६, ९, आर्ची स्वराड् जगती । ७, विराट् त्रिष्टुप् । १०, ११, त्रिष्टुप् ॥

विषयः— अत्र 'इन्द्र' शब्देन परमेश्वर गृह्यते । स च योगिभ्य उपासकेभ्य आस्तिकेभ्यो मोक्षं प्रयच्छति तैः मित्रतामाचरति वेदवाचं च प्रयच्छति रक्षति च दुष्टकर्मभ्यः । नास्तिकान् दण्डयतीत्यादयो विषयाः सन्ति ।

इस सूक्त में 'इन्द्र' शब्द से परमेश्वर ग्रहण किया है। वह परमात्मा योगियों, उपासकों, आस्तिकों को मोक्ष प्रदान करता है, उनके साथ मित्रता करता है, वेदज्ञान देता है दुष्कर्मों से बचाता है और नास्तिकों को दण्ड देता है यह वर्णित है ॥

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥ १ ॥

अहम् । भुवम् । वसुनः । पूर्व्यः । पतिः । अहम् । धनानि । सम् । जयामि । शश्वतः । माम् । हवन्ते । पितरम् । न । जन्तवः । अहम् । दाशुषे । वि । भजामि । भोजनम् ॥ १ ॥

संस्कृतान्वयार्थः—( अहम् ) अहं परमात्मा ( वसुनः ) नितान्तं वसन्ति मुक्तात्मानो यस्मिन् तस्य मोक्षधाम्नो धनभूतस्य ( पूर्व्यः ) सनातनः ( पतिः ) स्वामी खल्वस्मि ( अहम् ) अहमेव परमात्मा ( धनानि ) लौकिकानि धनानि ( शश्वतः ) बहोर्गणस्य जीवगणस्य *"शश्वत्-बहुनाम"* [ *निघ० ३ । १* ] तृप्तये ( संजयामि ) संरक्षामि स्वाधीने संस्थापयामि, [अतः ( जन्तवः ) जीवाः-मनुष्याः *"मनुष्या वै जन्तवः"* [ *श० ७ । ३ । १ । ३२* ] ( मां पितरं न हवन्ते) मां पितरमिव-आह्वयन्ति ( अहम् ) अहं हि (दाशुषे)

दत्तवतेऽन्येभ्यो दानकर्त्रे यद्वा स्वात्मसमर्पणं कृतवते ( भोजनम् ) लोकसुखकरं भोगं मोक्षानन्दम् च ( विभजामि ) यथायोग्यं विभज्य प्रयच्छामि ॥ १ ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( वसुनः ) मुक्तों के नितान्त वासस्थान मोक्ष का ( पूर्व्यः ) पुरातन ( पतिः ) स्वामी हूँ ( अहम् ) मैं ही ( धनानि ) लौकिक धनों को ( शश्वतः ) बहुतेरे जीवगणों को उनकी तृप्ति के लिए ( संजयामि ) संरक्षित रखता हूँ—स्वाधीन रखता हूँ ( जन्तवः ) मनुष्यादि प्राणी ( मां पितरं न हवन्ते ) मुझे पिता के समान आमन्त्रित करते हैं—पुकारते हैं ( अहम् ) मैं ही ( दाशुषे ) अन्यों को देने वाले के लिए अथवा आत्मसमर्पण करने वाले के लिए ( भोजनम् ) लोकसुखकर भोग तथा मोक्षानन्द को ( विभजामि ) यथायोग्य विभक्त करके देता हूँ ॥ १ ॥

**भावार्थ**—परमात्मा मुक्तात्माओं के मोक्षरूप वास का पुरातन स्वामी है प्राणिगणों के लिए विविध धनों और जीवननिर्वाहक भोगों को यथायोग्य देता है ॥ १ ॥

**अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अजनयमहेरधि ।**
**अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन् दधीचे मातरिश्वने ॥२॥**

**अहम् । इन्द्रः । रोधः । वक्षः । अथर्वणः । त्रिताय । गाः । अजनयम । अहेः । अधि । अहम् । दस्युऽभ्यः । परि । नृम्णम् । आ । ददे । गोत्रा । शिक्षन् । दधीचे । मातरिश्वने ॥ २ ॥**

**संस्कृतान्वयार्थः**—( अहम्-इन्द्रः ) अहमैश्वर्यवान् परमात्मा ( अथर्वणः ) अविचलितस्य योगिनः *"अथर्वा··· थर्वति गतिकर्मा तत्प्रतिषेधः"* [*निरु० ११ । १९*] *"अहिंसकस्य विदुषः"* [ *यजु० ११ । ३३ दयानन्दः* ] ( वक्षः-रोधः ) भासः-ज्ञानप्रकाशकस्य, *"वक्षो भासः"* [ *निरु० ४ । १६* ] रोधयिता-अज्ञानान्निवारयिताऽस्मि ( त्रिताय-अहेः-गाः-अधि-अजनयम् ) स्तुतिप्रार्थनोपासनास्तनोति यः स त्रितस्तस्मै-आध्यात्मिक जनाय, अहेः पापहन्त्रे जनाय "चतुर्थ्यर्थे बहुलं छन्दसि" [ अष्टा० २ । ३ । ६२ ] 'इति चतुर्थ्यर्थे षष्ठीः' *"अहिः-नि-ह्र्सितोपसर्गः-आहन्ता"* [ *निरु० २ । १७* ] ज्ञानवाचः "गौ-वाङ्नाम" [ निघ० १ । ११ ] जनयामि-प्रादुर्भावयामि ( अहम् ) अहं परमात्मा ( दस्युभ्यः-नृम्णं परि-आ ददे ) अन्येषां क्षयकारकेभ्यस्तत्सकाशाद्धनं पूर्णतो गृह्णामि ( मातरिश्वने दधीचे गोत्रा शिक्षन् ) मातरि मातुर्गर्भे गच्छते गमनशीलाय ध्यानिने जीवाय सामान्यवाचः प्रयच्छामि ॥ २ ॥

**भाषान्वयार्थ**—( अहम्-इन्द्रः ) मैं ऐश्वर्यवान् परमात्मा ( अथर्वणः ) अचल योगी का—अहिंसक विद्वान् का ( वक्षः-रोधः ) ज्ञानप्रकाशक का अज्ञाननिवारक हूँ ( त्रिताय-अहेः-गाः-अधि-अजनयम् ) स्तुति—प्रार्थना—उपासना तीनों का विस्तार करने वाले आध्यात्मिक और पापनाशक जन के लिए मैं वेदवाणियों को उत्पन्न करता हूँ ( अहम् ) मैं परमात्मा ( दस्युभ्यः- नृम्णं परि-

आ ददे ) अन्यों के पीड़क जन के धन को स्वाधीन करता हूँ—लेता हूँ ( मातरिश्वने दधीचे गोत्रा-शिक्षत् ) माता के गर्भ में जाने वाले अर्थात् ध्यानी जीवात्मा के लिए सामान्य वाणियों को देता हूँ ॥ २ ॥

**भावार्थ**—परमात्मा योगी—स्तुति प्रार्थना उपासना करने वाले पापरहित आत्मा के लिए वेदज्ञान का उपदेश देता है और साधारण जनों के लिए सामान्य वाणी देता है। अज्ञानी दुष्ट मनुष्य की सम्पत्ति, शक्ति को नष्ट कर देता है ॥ २ ॥

**मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम् ।**
**ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च ॥ ३ ॥**

मह्यम् । त्वष्टा । वज्रम् । अतक्षत् । आयसम् । मयि । देवासः । अवृजन् । अपि । क्रतुम् । मम । अनीकम् । सूर्यस्यऽइव । दुस्तरम् । माम् । आर्यन्ति । कृतेन । कर्त्वेन । च ॥ ३ ॥

**संस्कृतान्वयार्थः**—( मह्यम् ) मदर्थं मां द्योतयितुम् ( त्वष्टा-आयसं वज्रम्-अतक्षत् ) सूर्यः *"त्वष्टारं छेदनकर्तारं सूर्यम्"* [ *यजु० २२ । ९ दयानन्दः* ] तेजोमयं ज्योतिर्मयम् *"आयसं तेजोमयम्"* [ *ऋ० १ । ८० । ११२ दयानन्दः* ] वज्रमोजो बलं करोति *"तक्षति करोतिकर्मा"* [ *निरु० ४ । १९* ] ( मयि ) मदर्थं ( देवासः-क्रतुम्-अपि-अवृजन् ) मुमुक्षवः कर्माध्यात्मकमंध्यानं समर्पयन्ति ( मम-अनीकं सूर्यस्य-इव दुष्टरम् ) मम बलं तेजोबलं सूर्यस्य यथा तीक्ष्णतरं भवति तद्वत् ( कृतेन कर्त्वेन च माम्-आर्यन्ति ) कृतेनाथ कर्त्तव्येन करिष्यमाणेन च मां प्राप्नुवन्ति फलाय ॥ ३ ॥

**भाषान्वयार्थ**—( मह्यम् ) मुझे प्रदर्शित करने को ( त्वष्टा-आयसं वज्रम्-अतक्षत् ) सूर्य अपने ज्योतिरूप ओज को प्रकट करता है ( मयि ) मेरे लिए ( देवासः-क्रतुम्-अपि-अवृजन् ) मुमुक्षुजन कर्म—अध्यात्मकर्म—ध्यान समर्पित करते हैं ( मम-अनीकं सूर्यस्य-इव दुष्टरम् ) मेरा बल—तेजोबल सूर्य जैसा अतितीक्ष्ण है ( कृतेन कर्त्वेन च माम्-आर्यन्ति ) पिछले किये कर्म और आगे किये जाने वाले कर्म के द्वारा मुझे प्राप्त होते हैं, फल पाने के लिये ॥ ३ ॥

**भावार्थ**—सूर्य अपने तापप्रकाश के देने वाले परमात्मा को प्रदर्शित करता है। मुमुक्षुजन स्तुति—प्रार्थना—उपासना ईश्वर के प्रति समर्पित करते हैं तथा कर्म करने वाले मनुष्य फल पाने के लिए भी परमात्मा के अधीन हैं ॥ ३ ॥

**अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययम् ।**
**पुरू सहस्रा नि शिशामि दाशुषे यन्मा सोमास उक्थिनो अमन्दिषुः ॥४॥**

अहम् । एतम् । गव्यर्यम् । अश्व्यम् । पशुम् । पुरीषिणम् । सायकेन । हिरण्ययम् । पुरु । सहस्रा । नि । शिशामि । दाशुषे । यत् । मा । सोमासः । उक्थिनः । अमन्दिषुः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( अहम् ) अहं परमात्मा ( एतं गव्ययम्-अश्व्यं पुरीषिणं पशुम् ) एतं गोषु-इन्द्रियेषु साधुं तथाश्वे व्यापनशीले मनसि साधुं कुशलं पुरीषवन्तं प्राणवन्तम् *"स एष प्राण एव यत्पुरीषम्"* [ श० ८ । ७ । ३ । ६ ] द्रष्टारमात्मानम् ( सायकेन ) पापस्यान्तकारकेण *"स्यन्ति क्षयन्ति येन"* [ ऋ० १ । ८४ । ११ *दयानन्दः* ] ( हिरण्ययम् ) हिरण्ययेन ज्ञानमयेन तेजसा 'विभक्तिव्यत्ययः' ( पुरुसहस्रा ) अतीव सहस्रगुणितधनलाभान् ( निशिशामि ) नितरां निरन्तरं वा ददामि *"शिशीति दानकर्मा"* [ *निरु० ५ । २३* ] ( दाशुषे ) आत्मसमर्पणं कृतवते ( यत् ) यतः ( मा ) माम् ( उक्थिनः सोमासः-अमन्दिषुः ) तस्य स्तुतिवाग्वतः-उपासनारसा मोदयन्ति हर्षयन्ति ॥ ४ ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( एतं गव्ययम्-अश्व्यं पुरीषिणं पशुम् ) इन्द्रियों में साधु, व्यापनशील मन में साधु-कुशल प्राणवान् द्रष्टा आत्मा को ( सायकेन ) पाप का अन्त करने वाले ( हिरण्ययम् ) ज्ञानमय तेज से ( पुरुसहस्रा ) अतीव सहस्रगुणित धनलाभों को ( निशिशामि ) निरन्तर देता हूँ ( दाशुषे ) आत्मसमर्पण करने वाले के लिए ( यत् ) जो ( मा ) मेरे प्रति ( उक्थिनः सोमासः-अमन्दिषुः ) स्तुतिवाणी वाले के–स्तोता के उपासनारस हर्षित करते हैं ॥ ४ ॥

**भावार्थ**—इन्द्रियसंयमी मनोनिरोधक सावधान आत्मा के प्रति परमात्मा पापनाशक अपने तेज से सहस्रगुणित धनलाभ देता है तथा स्तुति करने वाले उपासक के उपासनारसों से हर्षित होकर भी वह उन्हें धनलाभ देता है ॥ ४ ॥

**अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।**
**सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥ ५ ॥**

अहम् । इन्द्रः । न । परा । जिग्ये । इत । धनम् । न । मृत्यवे । अव । तस्थे । कदा । चन । सोमम् । इत् । मा । सुन्वन्तः । याचत । वसु । न । मे । पूरवः । सख्ये । रिषाथन ॥ ५ ॥

**संस्कृतान्वयार्थः**—( अहम्-इन्द्रः-न-इत्-धनं पराजिग्ये ) अहमैश्वर्यवान् परमात्मा नैवाध्यात्मधनं पराभावयामि न तस्माद्रिक्तो भवामि ( मृत्यवे न कदाचन-अवतस्थे ) मृत्यवेऽपि कदाचिन्नावस्थितो भवामि नहि मृत्युर्मा मारयति, अतः ( सोमम्-इत् सुन्वन्तः ) उपासनारसमुत्पादयन्तः ( पूरवः-मा वसु याचत ) हे मनुष्याः ! "पूरवः-

मनुष्यनाम" [ निघ० २ । ३ ] मां धनं प्रार्थयध्वम् ( मे सख्ये न रिषाथन ) मम सखित्वे यूयं न हिंसिता भवथ ॥ ५ ॥

**भाषान्वयार्थ**—( अहम्-इन्द्रः-न-इत्-धनं पराजिग्ये ) मैं ऐश्वर्यवान् परमात्मा कभी अध्यात्म धन को नहीं हराता हूँ–उससे रिक्त नहीं होता हूँ ( मृत्यवे न कदाचन–अवतस्थे ) मृत्यु के लिये भी कभी अवस्थित नहीं होता–मुझे मृत्यु कभी मार नहीं सकता, अतः ( सोमम्-इत् सुन्वन्तः ) उपासनारस का निष्पादन करते हुए–( पूरवः-मा वसु याचत ) हे मनुष्यो ! मुझ से धन के लिए प्रार्थना करो ( मे सख्ये न रिषाथन ) मेरी मित्रता में तुम हिंसित नहीं होते हो ॥ ५ ॥

**भावार्थ**—ऐश्वर्यवान् परमात्मा के यहां अध्यात्मधन की कमी नहीं होती, क्योंकि वह अमर है अतः उसका अध्यात्म ऐश्वर्य भी अमर है । उपासना रस समर्पित करने वाले उस धन की याचना किया करें और उसकी मित्रता के लिये यत्न करें तो कभी पीड़ित न होवें ॥ ५ ॥

**अहमेताञ्छाश्वसतो द्वाद्वेन्द्रं ये वज्रं युधयेऽकृण्वत ।**
**आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्ननमस्युर्नमस्विनः ॥ ६ ॥**

**अहम् । एतान् । शाश्वसतः । द्वाऽद्वा । इन्द्रम् । ये । वज्रम् । युधये । अकृण्वत । आऽह्वयमानान् । अव । हन्मना । अहनम् । दृळ्हा । वदन् । अनमस्युः । नमस्विनः ॥ ६ ॥**

**संस्कृतान्वयार्थः**—( एतान्-शाश्वसतः ) इमान् पुनः पुनर्भृशं वा प्राणतः प्राणं गृह्णतः ( ये-इन्द्रं द्वा द्वा वज्रं युधये-अकृण्वत ) ये मामिन्द्रं प्रति द्वौ द्वौ मिलित्वा यच्छुष्कार्द्रभावको वज्रो भवति तं युद्धाय कुर्वन्ति सम्पादयन्ति क्षिपन्ति ( आह्वयमानान् ) तानह्वयतो विरोधिनः (नमस्विनः) वज्रवतः *"नम वज्रनाम" [ निघ० २ । २० ]* ( अनमस्युः ) वज्रमनिच्छुरपि ( दृढा वदन् ) दृढानि वचनानि वदन् घोषयन् ( हन्मना-अहम्-अव-अहनम् ) हननबलेनाहं हन्मि ॥ ६ ॥

**भाषान्वयार्थ**—( एतान्-शाश्वसतः ) इन बार-बार या भली भांति प्राण लेते हुओं को ( ये-इन्द्रं द्वा द्वा वज्रं युधये अकृण्वत ) जो मुझ ऐश्वर्यवान् के प्रति शुष्क–आर्द्र दो–दो धाराओं वाले वज्र को युद्ध के लिए सम्पन्न करते हैं–फेंकते हैं–( आह्वयमानान् ) उन आह्वान करने वाले विरोधियों–( नमस्विनः ) वज्रवालों को ( अनमस्युः ) वज्र को अपेक्षित न करते हुए भी ( दृढा वदन् ) दृढ़ वचनों को घोषित करता हुआ ( हन्मना-अहम्-अव-अहनम् ) मैं हनन बल रखने वाला नष्ट करता हूं ॥ ६ ॥

**भावार्थ**—वज्रधारी नास्तिक प्राणीजनों को वज्र की अपेक्षा न रखता भी हननशक्ति से सम्पन्न परमात्मा नष्ट कर देता है ॥ ६ ॥

अभी३दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥७॥

अभि । इदम् । एकम् । एकः । अस्मि । निष्षाट् । अभि । द्वा । किम् । ऊँ इति । त्रयः । करन्ति । खले । न । पर्षान् । प्रति । हन्मि । भूरि । किम् । मा । निन्दन्ति । शत्रवः । अनिन्द्राः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( एकः-निष्षाट्-इदम्-अस्मि ) यद्यपि खलु निष्षहमानः परमात्माऽहमेकोऽस्मि, "इदं वाक्यालङ्कारे," तथापि ( एकम्-अभि ) एकं वर्गं निन्दकं नास्तिकमभिभवामि-स्वाधीनीकृत्य दण्डयामि ( द्वा-अभि ) द्वौ वर्गौ दण्डयामि यद्वा ( त्रयः किम्-उ करन्ति ) यद्वा त्रयो नास्तिकवर्गा अपि किं हि कुर्वन्ति-करिष्यन्ति, तानपि खल्वभिभवामि-दण्डयामि ( खले न पर्षान् भूरि प्रति हन्ति ) संग्रामे *"खले संग्रामनाम"* [ *निघ०* २ । १७ ] तस्य पूरकान् संग्रामकारिण इव निन्दकाय नास्तिकान् यद्वा खले शस्यसञ्चयस्थाने गाह्यमाने पूलकानिव भूरि-अतिशयेन बहून् वा प्रतिहन्ति विदारयामि ( अनिन्द्राः शत्रवः किं मा निन्दन्ति ) ये खल्विन्द्रं न विदुः, इन्द्रमैश्वर्यवन्तं न जानन्ति मन्यन्ते नास्तिकाः शत्रवः-विरोधिनः किम्-कथं मां ते निन्दन्ति, दण्डभागिनो भविष्यन्ति ॥ ७ ॥

**भाषान्वयार्थ**—( एकः-निष्षाट्-इदम्-अस्मि ) यद्यपि मैं अभिभूत करने वाला परमात्मा अकेला हूँ, तथापि ( एकम्-अभि ) एक निन्दक या नास्तिक वर्ग को भी अभिभूत करता हूँ—अपने अधीन करके दण्ड देता हूँ ( द्वा-अभि ) दो वर्गों को भी दण्ड दे देता हूं यद्वा ( त्रयः किम्-उ करन्ति ) अथवा तीन नास्तिक वर्ग भी क्या कर सकते हैं-क्या करेंगें ? उनको भी मैं अभिभूत करता हूँ दण्ड देता हूँ ( खले न पर्षान् भूरि प्रतिहन्मि ) जैसे संग्राम में उसके भर देने वाले योद्धाओं को हनन किया जाता है, ऐसे नास्तिकों-निन्दकों का हनन करता हूँ अथवा खलिहान में जैसे गाहे जाते हुए पूलों का विदारण किया जाता है, ऐसे विदारण करता हूं ( अनिन्द्राः शत्रवः किं मा निन्दन्ति ) वे जो मुझ इन्द्र को—ऐश्वर्य वाले परमात्मा को जो नहीं जानते और मानते, ऐसे नास्तिक—शत्रु-विरोधी मेरी क्यों निन्दा करते हैं अतः वे दण्डभागी होंगे ॥ ७ ॥

**भावार्थ**—परमात्मा एक है, परन्तु वह अकेला भी अनेक या बहुतेरे निन्दकों नास्तिकों—पापियों के वर्गों को दण्ड दे सकता है, जैसे संग्रामस्थल में सैनिक हताहत कर दिये जाते हैं या जैसे खलिहान में अन्नपूलों को चूर—चूर कर दिया जाता है, ऐसे ही परमात्मा उन वर्गों को चूर-चूर कर देता है । वे निन्दक या नास्तिक परमात्मा का कुछ नहीं बिगाड़ सकते हैं ॥ ७ ॥

अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम् ।
यत्पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि ॥ ८ ॥

अहम् । गुङ्गुऽभ्यः । अतिथिऽग्वम् । इष्करम् । इषम् । न । वृत्रऽतुरम् । विक्षु । धारयम् । यत् । पर्णयऽघ्ने । उत । वा । करञ्जऽहे । प्र । अहम् । महे । वृत्रऽहत्ये । अशुश्रवि ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अहम् ) अहं परमात्मा ( विक्षु गुङ्गुभ्यः ) मनुष्यप्रजासु मदर्थं ये गुङ्गवः-अव्यक्तं शब्दयन्ति गायन्ति मनसि जपन्ति तेभ्यस्तेषां हिताय "गुङ्गाः-अव्यक्तोच्चारणाः" [ ऋ० २ । ३२ । ८ दयानन्दः ] "गौङ्गवं साम ऊर्ध्वमिव च तिर्यगिव च गीयते सामगैः" [ जै० ३ । १८५ ] ( अतिथिग्वम् ) अतिथिना ज्ञानिनोपासकेन गन्तव्यं प्रापणीयम् ( इष्करम्-इषं न धारयम् ) इष्टकरमन्नमिव मोक्षसुखम् ( वृत्रतुरम् ) पापाज्ञाननाशकेन मोक्षसुखं धारयामि ( यत् पर्णयघ्ने-उत वा करञ्जहे ) यतःपिपर्ति पालयति यः स पर्णो ऽहं परमात्मा, तं मां याति प्राप्नोति मदुपासकस्तं यो हन्ति तस्मै, अपि च करं शरणं मदीयं जहाति त्यजति तस्मै नास्तिकाय ( महे वृत्रहत्ये-अहं प्र-अशुश्रवि ) तद्वधे महते पापनाशनकार्येऽहं प्रकर्षेण श्रुतः-प्रसिद्धोऽस्मि ॥ ८ ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( विक्षु गुङ्गुभ्यः ) मनुष्यप्रजाओं में मेरे लिए जो अव्यक्त शब्द गाते हैं–मानसिक जप करते हैं उनके हित के लिए ( अतिथिग्वम् ) अतिथि द्वारा-ज्ञानोपासक द्वारा प्रापणीय–( इष्करम्-इषं न धारयम् ) इष्ट करने वाले अन्नादि की भांति मोक्षसुख–( वृत्रतुरम् ) पापाज्ञाननाशक को धारण करता हूँ ( यत् पर्णयघ्ने-उत वा करञ्जहे ) यतः मुझ पालने वाले परमात्मा को प्राप्त होने वाले आस्तिक उपासक जन को जो हनन करता है उसके लिए तथा मेरी शरण को जो त्यागता है उस नास्तिक के लिए ( महे वृत्रहत्ये-अहं प्र-अशुश्रवि ) उसके वध के निमित्त–महान् पापनाशन कार्य के निमित्त, मैं प्रकृष्ट रूप से प्रसिद्ध हूँ ॥ ८ ॥

**भावार्थ**—जो मनुष्य परमात्मा के लिए उपांशु–अव्यक्त या मानसिक जप करता है वह उनके अज्ञान को नष्ट करता है तथा जो ज्ञानी जन परमात्मा को प्राप्त करना चाहते हैं वह उन्हें मोक्ष प्रदान करता है। परमात्मा की शरण लेने वाले के प्रति जो पापचिन्तन करता है उसको वह दण्ड देता है ॥ ८ ॥

**प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता ।**
**दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करम् ॥ ९ ॥**

प्र । मे । नमी । साप्यः । इषे । भुजे । भूत् । गवाम् । एषे । सख्या । कृणुत । द्विता । दिद्युम् । यत् । अस्य । समऽइथेषु । मंहयम् । आत् । इत् । एनम् । शंस्यम् । उक्थ्यम् । करम् ॥ ९ ॥

**संस्कृतान्वयार्थः**—( मे नमी साप्यः-इषे भुजे प्रभूत् ) मम नमते स्तौतीति

नमी *"सप्तनामा सप्तैनमृषयः स्तुवन्ति"* [ *निरु० ४ । २७* ] कर्मान्तकारी जीवन्मुक्तः *"साप्यम्-कर्मान्तकारिणम्"* [ *ऋ० ६ । २० । ६ दयानन्दः* ] मदीये ज्ञाने मोक्षसुखभोगे प्रभवति ( गवाम्-एषे द्विता सख्या कृणुत ) वाचां स्तुतीनामेषणे-प्रेषणे सति द्वितानि-द्विविधानि सख्यानि ऐहिकानि संसारे प्रवृत्तानि मोक्षभवानि च कुरुत सम्पादयत ( अस्य ) स्तोतुर्जीवन्मुक्तस्य ( समिथेषु ) संग्रामेषु *"समिथे सङ्ग्रामनाम"* [ *निघ० २ । १७* ] कामक्रोधादिविषयकेषु ( यत्-दिद्युं मंहयम् ) यत्खलु ज्ञानप्रकाशकमहं ददामि ( आत्-इत्-एनं शंस्यम्-उक्थ्यं करम् ) अनन्तरं हि-एतं प्रशंसनीयं सर्वत्र जनैर्वचनीयं स्तुत्यं करोमि ॥ ६ ॥

**भाषान्वयार्थ—**( मे नमी साप्यः-इषे भुजे प्रभूत् ) मेरा स्तुति करने वाला जीवन्मुक्त, मेरा ज्ञान होने पर मोक्षसुखभोग में समर्थ होता है ( गवाम्-एषे द्विता सख्या कृणुत ) स्तुतियों के समर्पण करने पर दो प्रकार की मित्रताएं अर्थात् संसार में प्रवृत्त मोक्ष में होने वाली को मेरे साथ सम्पादित करो ( अस्य ) इस जीवन्मुक्त स्तुति करने वाले के ( समिथेषु ) काम क्रोध आदि के संघर्षस्थलों में ( यत्-दिद्युं मंहयम् ) जब भी ज्ञान प्रकाश मैं देता हूँ ( आत्-इत्-एनं शंस्यम्-उक्थ्यं करम् ) अनन्तर ही इस प्रशंसनीय-सर्वत्र मनुष्यों द्वारा स्तुत्य करता हूँ ॥ ९ ॥

**भावार्थ—**परमात्मा की स्तुति करने वाला मोक्षसुख प्राप्त करने में समर्थ या अधिकारी बन जाता है तथा निरन्तर स्तुतियों के द्वारा परमात्मा की मित्रता को प्राप्त करता है जिससे मोक्ष-सुख के साथ सांसारिक सच्चा सुख भी प्राप्त करता है और कामक्रोध आदि भीतरी शत्रु भी उसके नष्ट हो जाते हैं। परमात्मा द्वारा ज्ञानप्रकाश प्राप्त कर मनुष्यों में प्रसिद्धि प्राप्त करता है ॥ ९ ॥

**प्र नेमस्मिन्ददृशे सोमो अन्तर्गोपा नेममाविरस्था कृणोति ।**
**स तिग्मशृङ्गं वृषभं युयुत्सन् द्रुहस्तस्थौ बहुले बद्धो अन्तः ॥ १० ॥**

प्र । नेमस्मिन् । ददृशे । सोमः । अन्तः । गोपाः । नेमम् । आविः । अस्था । कृणोति । सः । तिग्मऽशृङ्गम । वृषभम् । युयुत्सुन् । द्रुहः । तस्थौ । बहुले । बद्धः । अन्तरिति ॥ १० ॥

**संस्कृतान्वयार्थः—**( नेमस्मिन् सोमः-ददृशे-अन्तः-गोपाः ) अर्धे स्तोतृगणे खल्वास्तिके गणे शान्तस्वरूपः परमात्मा रक्षकोन्तर्दृश्यते साक्षाद् भवति ( नेमम्-अस्था-आविः-कृणोति ) अर्धं गणं नास्तिकं गणं स्वक्षेपणबलेन ताडनेनात्मानं प्रकटयति यदस्मि दण्डदाता कर्मफलदाता ( स तिग्मशृङ्गं वृषभं युयुत्सन् ) स तीक्ष्णशृङ्गं वृषभमिव बलवन्तं तेन सह युद्धमिच्छन्निव ( द्रुहः-तस्थौ ) द्रोहकर्त्तॄन् विरोधिनो नास्तिकान् सम्मुखं तिष्ठति ( बहुले-अन्तः-बद्धः ) बहुले नास्तिके गणेऽवरुद्धः सन् तदन्तरात्मान-माविष्करोति ॥ १० ॥

**भाषान्वयार्थ—**( नेमस्मिन् सोमः-ददृशे-अन्तः-गोपाः ) आधे अर्थात् स्तोतृगण-आस्तिकगण के अन्दर शान्तस्वरूप परमात्मा रक्षक रूप में साक्षात् होता है ( नेमम्-अस्था-आविः-

कृणोति ) आधे गण को अर्थात् नास्तिकगण को अपने क्षेपणबल से ताड़न से अपने को प्रकट करता है कि कर्मफलदाता कोई है ( स तिग्मश्रृङ्गं वृषभं युयुत्सन् ) वह तीक्ष्णश्रृङ्ग वाले वृषभ जैसे के साथ युद्ध करता हुआ सा ( द्रुहः-तस्थौ ) द्रोह करते विरोधियों नास्तिकों के सम्मुख आता है ( वहुले-अन्तः-बद्धः ) बहुत सारे नास्तिकगण के अन्दर अवरुद्ध होकर बैठकर अपने को प्रकट करता है ॥ १० ॥

**भावार्थ**— परमात्मा मनुष्यों के एक वर्ग अर्थात् आस्तिक जनों में स्तुति करने वालों के अन्दर कल्याणकारी रूप में साक्षात् होता है, दूसरे वर्ग नास्तिक वर्ग के सामने दण्ड देने को दण्डदाता रूप में सामने आता है ॥ १० ॥

**आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।**
**ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हम् ॥ ११ ॥**

आदित्यानाम् । वसूनाम् । रुद्रियाणाम् । देवः । देवानाम् । न । मिनामि । धाम । ते । मा । भद्राय । शवसे । ततक्षुः । अपराऽजितम् । अस्तृतम् । अषाळ्हम् ॥ ११ ॥

**संस्कृतान्वयार्थः**—( आदित्यानां वसूनां रुद्रियाणां देवानां धाम ) सूर्यसदृशतेजस्कानामष्टाचत्वारिंशवर्षपर्यन्तकृतब्रह्मचर्याणां भूमिवद्वासस्वभावानां चतुर्विंशतिवर्षपर्यन्तकृतब्रह्मचर्याणां वा, अग्निवद् गतिकर्मवतां चतुश्चत्वारिंशवर्षपर्यन्तचरितब्रह्मचर्याणां ब्रह्मचारिणां वा तदध्यापकानां विदुषां च धाम प्रतिष्ठापदम् ( देवः-न मिनामि ) अहं तत्तद्गुणानां दाता परमात्मा न हिनस्मि ( ते ) आदित्यादयः ( भद्राय शवसे ) कल्याणाय स्वात्मबलाय च ( अपराजितम्-अस्तृतम्-अषाढं मा ततक्षुः ) पराजयरहितं हिंसावर्जितमषोढव्यं मां परमात्मानं स्वाभ्यन्तरे साक्षात्कुर्वन्तु ॥ ११ ॥

**भाषान्वयार्थ**—( आदित्यानां वसूनां रुद्रियाणां देवानां धाम ) सूर्य के समान तेजस्वी अड़तालीस वर्षपर्यन्त ब्रह्मचर्य सेवन करने वालों के, भूमिसमान बसाने के स्वभाव वाले चौबीस वर्ष पर्यन्त ब्रह्मचर्य व्रतवालों के, अग्नि के समान गतिकर्मवाले चवालीस वर्ष पर्यन्त ब्रह्मचर्य सेवन करने वालों के, उनके अध्यापक विद्वानों के पद या स्थान को ( देवः-न मिनामि ) मैं उन उनके गुणों का दाता हिंसित नहीं करता हूँ ( ते ) वे आदित्य आदि ब्रह्मचारी ( भद्राय शवसे ) कल्याण के लिए और अपने आत्मबल के लिए ( अपराजितम्-अस्तृतम्-अषाढं मा ततक्षुः ) पराजयरहित हिंसावर्जित न सहने योग्य मुझ परमात्मा को अपने अन्दर साक्षात् करें ॥ ११ ॥

**भावार्थ**—अड़तालीस वर्ष के ब्रह्मचारियों, चवालीस वर्ष के ब्रह्मचारियों और चौबीस वर्ष के ब्रह्मचारियों के पद को वह परमात्मा क्षीण नहीं करता अपितु वे अपने कल्याण और स्वात्मबल के लिए उसे अपने अन्दर साक्षात् करते हैं। वह उन्हें कल्याण और आत्मबल देने वाला है ॥ ११ ॥



# एकोनपंचाशत्तमं सूक्तम्

ऋषिः—वैकुण्ठ इन्द्रः ।

देवता—वैकुण्ठ इन्द्रः ।

छन्दः—१, आर्ची भुरिग् जगती । ३, ९, विराड् जगती । ४, जगती । ५, ६, ८, निचृज्जगती । ७, आर्ची स्वराड् जगती । १०, पादनिचृज्जगती । २, विराट् त्रिष्टुप् । ११, आर्ची स्वराट् त्रिष्टुप् ॥

विषयः—अस्मिन् सूक्ते 'इन्द्र' शब्देन परमात्मा गृह्यते । तस्योपासनेनोपासकानां कामवासनादयो दोषाः दूरीभवन्ति ते मोक्षं च प्राप्नुवन्तीत्येवमादयो विषया वर्ण्यन्ते ।

इस सूक्त में 'इन्द्र' शब्द से परमात्मा गृहीत है । उसकी उपासना से व्यसन कामवासनादि दोष दूर हो जाते हैं और उपासक मोक्ष को प्राप्त करते हैं इत्यादि विषय वर्णित हैं ।

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे ॥ १ ॥

अहम् । दाम् । गृणते । पूर्व्यम् । वसु । अहम् । ब्रह्म । कृणवम् । मह्यम् । वर्धनम् । अहम् । भुवम् । यजमानस्य । चोदिता । अयज्वनः । साक्षि । विश्वस्मिन् । भरे ॥ १ ॥

**संस्कृतान्वयार्थः**—( अहं गृणते पूर्व्यं वसु दाम् ) अहं परमात्मा स्तुतिकर्त्रे शाश्वतिकं मोक्षं वसु-वासधनं ददामि ( अहं ब्रह्म मह्यं वर्धनं कृणवम् ) अहं खलु वेदज्ञानं यद् हि मह्यं मदर्थं वर्धनकारणं गुणप्रज्ञापनं मदीयं यद् गुणजातं वर्णयति तत् करोमि ( अहं यजमानस्य चोदिता ) अहमेव परमात्मा यजमानस्य—अध्यात्मयाजिनः प्रेरयिताऽस्मि ( अयज्वनः-भरे विश्वस्मिन् साक्षि ) अध्यात्मयजनं न कुर्वतो नास्तिकान् भरणीये संसारेऽभिभवामि ॥ १ ॥

**भाषान्वयार्थ**—( अहं गृणते पूर्व्यं वसु दाम् ) मैं परमात्मा स्तुतिकर्त्ता के लिए शाश्वतिक मोक्ष–बसाने वाले धन को देता हूँ ( अहं ब्रह्म मह्यं वर्धनं कृणवम् ) मैं वेदज्ञान जो मेरे लिए वृद्धि का कारण मेरे गुण जनाने वाला है उसे मैं प्रकाशित करता हूँ ( अहं यजमानस्य चोदिता ) मैं परमात्मा अध्यात्मयाजी यजमान का प्रेरक हूँ ( अयज्वनः-भरे विश्वस्मिन् साक्षि ) अध्यात्मयज्ञ न करने वाले नास्तिक जनों को पोषणीय संसार में अभिभूत करता हूँ–दण्डित करता हूँ ॥ १ ॥

**भावार्थ**—परमात्मा की स्तुति करने वाला शाश्वतिक सुखमय मोक्ष को प्राप्त होता है। परमात्मा के गुणों का वर्णन करने वाले वेद का परमात्मा प्रकाश करता है, तदनुसार अध्यात्मयाजी को वह प्रेरणा देता है नास्तिक जनों को संसार में दण्ड देता है ॥ १ ॥

**मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः ।**
**अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे ॥ २ ॥**

माम् । धुः । इन्द्रम् । नाम । देवता । दिवः । च । ग्मः । च । अपाम् । च । जन्तवः । अहम् । हरी इति । वृषणा । विऽव्रता । रघू इति । अहम् । वज्रम् । शवसे । धृष्णु । आ । ददे ॥ २ ॥

**संस्कृतान्वयार्थः**—( दिवः-ग्मः-अपां च जन्तवः ) द्युलोकस्य पृथिव्याः-अन्तरिक्षलोकस्य ज्ञातारो जन्तवः-मनुष्याः *"मनुष्या वै जन्तवः"* [ श० ७ । ३ । १ । ३२ ] ( मां देवताम्-इन्द्रं नाम धुः ) मां परमात्मानं देवतां नाम धारयन्ति ( अहं वृषणा हरी विव्रता रघू ) अहं परमात्मा सुखवर्षकौ दयाप्रसादौ विविधकर्मसम्पादकौ शीघ्रगामिनौ धारयामि ( अहम् ) अहं परमात्मा ( शवसे धृष्णु वज्रम्-आददे ) जगच्चालनबलाय धर्षकं वज्रमोज आत्मबलमाददे–गृह्णामि ॥ २ ॥

**भाषान्वयार्थ**—( दिवः-ग्मः-अपां च जन्तवः ) द्युलोक के पृथिवीलोक के अन्तरिक्ष लोक के जानने वाले मनुष्य ( मां देवताम्-इन्द्रं नाम धुः ) मुझ परमात्मा देवता को धारण करते हैं ( अहं वृषणा हरी विव्रता रघू ) मैं परमात्मा सुखवर्षक विविध–कर्मसम्पादक शीघ्रप्रभाववाले दुःखहारक और सुखाहारक अपने दया और प्रसाद को प्रेरित करता हूँ ( अहम् ) मैं परमात्मा ( शवसे धृष्णु वज्रम्-आददे ) जगत् संचालन बल के लिए धर्षक ओज को–आत्मबल को ग्रहण कर रहा हूँ ॥ २ ॥

**भावार्थ**—द्युलोक अन्तरिक्षलोक और पृथिवीलोक को जानने वाले मनुष्य अर्थात् इन तीनों को जानकर इनके रचयिता परमात्मा को अपने अन्दर धारण करते हैं। परमात्मा इन्हें अपने दुःख नष्ट करने वाले व सुख प्राप्त कराने वाले दयाप्रसाद को प्रदान करता है जो कि अपने बल से जगत् का संचालन करता है ॥ २ ॥

**अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः ।**
**अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥ ३ ॥**

अहम् । अत्कम् । कवये । शिश्नथम् । हथैः । अहम् । कुत्सम् । आवम् । आभिः । ऊतिऽभिः । अहम् । शुष्णस्य । श्नथिता । वधः । यमम् । न । यः । ररे । आर्यम् । नाम । दस्यवे ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अहं कवये-अत्कं शिश्नथम् ) अहं परमात्मा मेधाविने स्तोत्रे स्तुतिकर्त्रे खलु तदत्तु शीलं व्यसनं शिथिलं करोमि नाशयामि *"अत्कः-अत्तुमर्हः"* [ *ऋ० २ । ३५ । १४ दयानन्दः* ] *"शिश्नथत् शिथिलीकरोति"* [ *ऋ० ४ । ३० । १० दयानन्दः* ] *"श्नथति वधकर्मा* [ *निघ० २ । १९* ] ( अहम् ) अहं परमात्मा ( आभिः-ऊतिभिः ) एताभिरेव रक्षणप्रवृत्तिभिः ( कुत्सं हथैः-आवम् ) स्तुतिकर्त्तारं घातकेभ्यो दुष्कर्मभ्यः 'हथैः हथेभ्यः, 'विभक्तिव्यत्ययेन,' अत्र हन् धातोः-क्थन् [ उणादि० २ । २ ], ये घ्नन्ति ते हथास्तेभ्यो हथेभ्यः' रक्षामि ( अहम् ) अहं परमात्मा ( शुष्णस्य श्नथिता ) शोषकस्य शोकस्य नाशकोऽस्मि ( दस्यवे वधः-यमम् ) दुष्टजनाय वधस्-वधकं शस्त्रं प्रहारं प्रयच्छामि (यः-आर्यं नाम न ररे) यो खलु-आर्याय 'विभक्तिव्यत्ययेन' मह्यं परमात्मने स्तुति वचनं न ददाति *"नाम स्तुतिसाधनं शब्दमात्रम्"* [ *ऋ० ४ । १ । १६ दयानन्दः* ] *"दा दाने"* [ *अदादिः* ] ॥ ३ ॥

**भाषान्वयार्थ**—( अहं कवये-अत्कं शिश्नथम् ) मैं परमात्मा मेधावी स्तुति करने वाले के लिए, अन्तः स्थल को खा जाने वाले व्यसन को शिथिल करता हूँ-नष्ट करता हूँ ( अहम् ) मैं परमात्मा ( आभिः-ऊतिभिः ) इन रक्षणप्रवृत्तियों द्वारा ( कुत्सं हथैः-आवम् ) स्तुतिकर्त्ता को घातक दुष्कर्मों से बचाता हूँ ( अहम् ) मैं परमात्मा ( शुष्णस्य श्नथिता ) शोषक शोक का नाशक हूँ, ( दस्यवे वधः यमम् ) दुष्टजन के लिए वधक-प्रहारक शस्त्र को देता हूँ ( यः-आर्यं नाम न ररे ) जो आर्य-मुझ श्रेष्ठ परमात्मा के लिए स्तुतिवचन नहीं देता है ॥ ३ ॥

**भावार्थ**—परमात्मा स्तुति करने वाले के व्यसन को शिथिल करता है-नष्ट करता है और अपनी रक्षणशक्तियों द्वारा दुष्कर्मों से बचाता है, शोक को नष्ट करता है। दुष्ट को दण्डप्रहार करता है जो कि उसकी स्तुति नहीं करता है ॥ ३ ॥

**अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् ।**
**अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥ ४ ॥**

अहम् । पिताऽइव । वेतसून् । अभिष्टये । तुग्रम् । कुत्साय । स्मत्ऽइभम् । च । रन्धयम् । अहम् । भुवम् । यजमानस्य । राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥ ४ ॥

**संस्कृतान्वयार्थः**—( अहम् ) अहं परमात्मा ( अभिष्टये पिता इव वेतसून् ) पितृसदृशः-अभीच्छति मां कांक्षति यस्तस्मै उपासकाय, 'वेतससून्' सकारलोपश्छान्दसः,

वेतसस्य दण्डान्-इव खलूद्दण्डान् नास्तिकान् भयप्रदान् तथा ( कुत्साय तुग्रं स्मदिभम् ) स्तुतिकर्त्रे हिंसकं भयङ्करं हस्तिनम्-इव क्रूरं पीडकं जनम् "स्मि धातोर्डतिः प्रत्यय औणादिकः, *"भीस्म्योर्हेतुभये"* *[ अष्टा० १ । २ । ६६ ]* स्मि धातुर्भयप्रदर्शने' ( रन्धयम् ) रन्धयामि नाशयामि ( अहं यजमानस्य राजनि भुवम् ) अहं परमात्माऽध्यात्मयाजिनः राजनि स्वामिपदे शासकरूपे स्थितो भवामि ( तुजये-आधृषे ) हिंसकाय-अन्यानाधर्षयितुं पीडयितुशीलाय ( प्रिया न प्रभरे ) सुखवस्तूनि न ददामि ॥ ४ ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( अभिष्टये पिता-इव वेतसून् ) पिता के समान जो मुझे चाहता है उस उपासक के लिए, वेंत के दण्डे के समान उद्दण्ड नास्तिक, भय देने वालों को तथा ( कुत्साय तुग्रं स्मदिभम् ) स्तुति करने वाले के लिए हिंसक भयङ्कर हाथी के समान क्रूर पीड़क जन को ( रन्धयम् ) नष्ट करता हूँ ( अहं यजमानस्य राजनि भुवम् ) मैं परमात्मा अध्यात्मयाजी के स्वामिपद पर शासकरूप में-रक्षक रूप में स्थित होता हूँ ( तुजये-आधृषे ) दूसरों को पीड़ित करने के स्वभाव वाले के लिए ( प्रिया न प्रभरे ) सुखवस्तु नहीं देता हूँ ॥ ४ ॥

**भावार्थ**—जो मनुष्य परत्मामा को पिता समान मानकर उसकी उपासना करता है उसके प्रतिकूल उद्दण्ड जनों को तथा हाथी के समान उन्मत्त क्रूर जन को परमात्मा दण्ड देता है। वह उपासक का रक्षक है। परमात्मा हिंसक स्वभाव वाले व्यक्ति को उसकी प्रिय वस्तु नहीं देता है ॥ ४ ॥

**अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक् ।**
**अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरन्धयम् ॥ ५ ॥**

**अहम् । रन्धयम् । मृगयम् । श्रुतर्वणे । यत् । मा । आजहीत । वयुना । चन । आनुषक् । अहम् । वेशम् । नम्रम् । आयवे । अकरम् । अहम् । सव्याय । पट्ऽगृभिम् । अरन्धयम् ॥ ५ ॥**

**संस्कृतान्वयार्थः**—( श्रुतर्वणे ) श्रुतं मद्विषयकं शिक्षणं वनति सम्भजति-आचरति स श्रुतर्वा-आस्तिकः, तस्मै 'रुट् छान्दसः' ( मृगयम् ) मृगं याति स मृगयो व्याधस्तमिव वर्तमानं कामदोषम् ( अहं रन्धयम् ) अहं परमात्मा नाशयामि ( यत्-मा-अजिहीत ) यतो मां सः प्राप्नुयात् *"ओहाङ् गतौ"* [ जुहो० ] ( वयुना चन-आनुषक् ) प्रज्ञानेन 'आकारादेशश्छान्दसः' आनुषक्तो भवेत् ( अहम् ) परमात्मा ( आयवे वेशं नम्रम्-अकरम् ) मत्समीपमागन्तुकामाय तदन्तरे प्रवेशशीलो वासनादोषस्तं शिथिलं करोमि ( सव्याय पड्गृभिम्-अरन्धयम् ) अध्यात्मैश्वर्ययोग्याय यो बाधकः पदग्रहीता संसाररागो मोहो वा तं नाशयामि ॥ ५ ॥

**भाषान्वयार्थ**—( श्रुतर्वणे ) मेरे सम्बन्ध में श्रवण, शिक्षण को सेवन करने वाले के लिए ( मृगयम् ) मृग के प्रति जाने वाले व्याध की भांति कामदोष को ( अहं रन्धयम् ) मैं परमात्मा

नष्ट करता हूँ ( यत्-मा-अजिहीत ) यतः वह मुझे प्राप्त होता है ( वयुना चन-आनुषक् ) प्रज्ञान से अनुषक्त होवे— युक्त होवे-भरपूर होवे ( अहम् ) मैं परमात्मा ( आयवे वेशं नम्रम्-अकरम् ) उस मेरे समीप आने वाले के लिए उसके अन्दर प्रविष्ट वासनादोष को मैं शिथिल करता हूँ ( सव्याय पड्गृभिम्-अरन्धयम् ) अध्यात्मैश्वर्य के जो योग्य है उसके लिए बाधक जो आत्मस्वरूप को पकड़ता है ऐसे संसार के राग या मोह को नष्ट करता हूँ ॥ ५ ॥

**भावार्थ**—परमात्मा का श्रवण करने वाले का कामदोष नष्ट हो जाता है और जो उसे प्राप्त करता है वह प्रज्ञान से युक्त हो जाता है तथा परमात्मा की ओर चलने वाले के अन्दर का वासनादोष शिथिल हो जाता है। अध्यात्मैश्वर्य को चाहने वाले का राग और मोह भी नष्ट हो जाता है ॥ ५ ॥

**अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजम् ।**
**यद्वर्धयन्तं प्रथयन्तमानुषग्दूरे पारे रजसो रोचनाकरम् ॥ ६ ॥**

**अहम् । सः । यः । नवऽवास्त्वम् । बृहत्ऽरथम् । सम् । वृत्राऽइव । दासम् । वृत्रऽहा । अरुजम् । यत् । वर्धयन्तम् । प्रथयन्तम् । आनुषक् । दूरे । पारे । रजसः । रोचना । अकरम् ॥ ६ ॥**

**संस्कृतान्वयार्थः—( अहं सः ) अहं परमात्मा सोऽस्मि ( वृत्रहा ) पापनाशकः *"पाप्मा वै वृत्रः"* [ श० ११ । १ । ५ । ७ ] ( वृत्रा-इव दासम्-अरुजम् ) वृत्राणि यथा पापानि यथा नाशयामि तथा दासमुपक्षयकर्त्तारं कामं नाशयामि, कथम्भूतं दासं नाशयामि—उच्यते—( यः-नववास्त्वं बृहद्रथं सम् ) मयि नववास्तव्यं ब्रह्मचारिणं महद्रमणकारिणं संन्यासिनं योगिनं संविशति संविश्य क्षयं करोति ( यत् ) यतः ( वर्धयन्तं प्रथयन्तम्-आनुषक् ) शरीरे वर्धयन्तं ब्रह्मचारिणं मज्ज्ञाने प्रथमानमनुषक्तोऽनुलिप्तोऽस्ति तम् (रजसः-रोचना दूरे पारे-अकरम् ) लोकात्-लोकनीय शरीरात् दूरे तथा प्रकाशमानात्—ज्ञानप्रकाशमयान्मनसः पारे करोमि ॥ ६ ॥**

**भाषान्वयार्थ**—( अहं सः ) मैं वह परमात्मा हूँ जो ( वृत्रहा ) पाप का नाशक ( वृत्रा-इव दासम्-अरुजम् ) पापों को जैसे नष्ट करता हूँ वैसे उपक्षय करने वाले कामभाव को नष्ट करता हूँ, उस ऐसे को ( यः-नववास्त्वं बृहद्रथं सम् ) जो मेरे अन्दर नव आयु वाले वसने योग्य ब्रह्मचारी के तथा महद्रमणकारी संन्यासी के योगी के अन्दर प्रवेश करके क्षीण करता है ( यत् ) जो वर्धयन्तं प्रथयन्तम्-आनुषक् ) शरीर में बढ़ते हुए ब्रह्मचारी को ज्ञान में विस्तार पाते हुए संन्यासी को लिप्त हो जाता है उसको ( रजसः-रोचना दूरे पारे-अकरम् ) रञ्जनात्मक लोक अर्थात् शरीर से दूर तथा प्रकाशमान—ज्ञानप्रकाशमय मनःसे पार करता हूँ—पृथक् करता हूँ-हटाता हूँ ॥६॥

**भावार्थ**—जो ब्रह्मचारी परमात्मा की प्राप्ति के लिए ब्रह्मचर्य सेवन करता है और जो संन्यासी परमात्मा में रमण करता है उनके अन्दर प्रविष्ट कामभाव को परमात्मा ऐसे हटाता है

कि ब्रह्मचारी के शरीर की वृद्धि होती चली जाये और संन्यासी के मन में ज्ञान की वृद्धि होती चली जाये ॥ ६ ॥

**अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा ।**
**यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः ॥ ७ ॥**

अहम् । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा । यत । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासम् । कृत्व्यम् । हथैः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( यत्-सावः-मनुषः-निर्णिजे मा-आह ) यदा खलूपासनारस-सम्पादकः उपासको मनुष्यः स्वरूपसम्पादनाय *"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"* [ छा० ८.३.४ ] *"निर्णिक्—रूप नाम"* [ निघ० ३ । ७ ] मां वदति—प्रार्थयते वा ( सूर्यस्य-आशुभिः-एतशेभिः ) सूर्यस्य शीघ्रगामिभिः किरणरूपैरश्वैरिव, यथा सूर्यः स्वकिरणैः सर्वत्र गतिमान् भवति तथा ( अहम्-ओजसा वहमानः-परियामि ) अहं परमात्मा स्वौजोबलेन सर्वं जगद्वहमानः सन् सर्वत्र प्राप्नोमि, अतः ( कृत्व्यं दासं हथैः-ऋधक्-कृषे ) कर्तनीयं छेदनीयं क्षयकर्त्तारं खलूपासकस्य स्वरूपनाशकमज्ञानं पापं वा स्वकीय हननसाधनैः-ज्ञानप्रकाशैः पृथक् करोमि ॥ ७ ॥

**भाषान्वयार्थ**—( यत्-सावः-मनुषः-निर्णिजे मा-आह ) जब उपासनारस का सम्पादन करने वाला-उपासक मनुष्य स्वरूप के सम्पादन के लिए मुझे कहता—प्रार्थना करता है ( सूर्यस्य-आशुभिः-एतशेभिः ) सूर्य की शीघ्रगामी किरणरूप अश्वों के द्वारा, जैसे सूर्य अपनी किरणों के द्वारा सर्वत्र गतिमान् होता है वैसे ( अहम्-ओजसा वहमानः परियामि ) मैं परमात्मा अपने ओजोबल से सब जगत् को वहन करता हुआ सर्वत्र प्राप्त होता हूँ, अतः ( कृत्व्यं दासं हथैः-ऋधक्-कृषे ) छेदनीय, क्षयकर्त्ता—उपासक के स्वरूप का नाशकर्त्ता अज्ञान या पाप को अपने हननसाधनों—ज्ञान—प्रकाशों से मैं पृथक् करता हूँ ॥ ७ ॥

**भावार्थ**—उपासना करने वाला आत्मा अपने स्वरूप को प्राप्त करने के लिए परमात्मा की उपासना करता है तो वह जगत् का वहनकर्त्ता—संचालक परमात्मा अपने बल से सर्वत्र प्राप्त होता हुआ उपासक के नष्ट करने वाले अज्ञान या पाप को अपने प्रकाशों से नष्ट करता है ॥ ७ ॥

**अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम् ।**
**अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयम् ॥ ८ ॥**

अहम् । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयम् । शवसा । तुर्वशम् । यदुम् । अहम् । नि । अन्यम् । सहसा । सहः । करम् । नव । व्राधतः । नवतिम् । च । वक्षयम् ॥ ८ ॥

**संस्कृतान्वयार्थः**—( अहम् ) अहं परमात्मा ( सप्तहा ) उपासकस्य सप्तदोषान् कामक्रोधलोभमोहमदभयशोकानां हन्ता ( नहुषः-नहुष्टरः ) नह् बन्धनं तस्य-उषः-दग्धा, जीवन्मुक्तस्यापि मुक्ततरो नित्यमुक्तः "णह बन्धने" [ दिवा० ] ( शवसा ) आत्मबलेन ( यदुं तुर्वशम् ) यतमानम् *"यदुं यतमानं यती प्रयत्ने बाहुलकादौणादिक उः प्रत्ययस्तकारस्य दकारः"* [ *ऋ० १ । ५४ । ६ दयानन्दः* ] निकटे वर्तमानमुपासमानम् *'तुर्वशः-अन्तिकनाम"* [ *निघ० २ । १६* ] ( प्र-अश्रवयम् ) निजोपदेशं वेदज्ञानं श्रावयामि ( अहम् ) अहं परमात्मा ( अन्यं सहसा सहः-नि करम् ) अन्यं च कञ्चिज्जनं स्तोतारं बलेन-स्वबलेन सहस्वन्तं बलवन्तम् 'मतुब्लोपश्छान्दसः' नितान्तं करोमि ( व्राधतः-नव नवतिं च वक्षयम्) महतो महात्मनो जनस्य *"व्राधत महन्नाम"* [ *निघ० ३ । ३* ] नवसंख्याकां गतिप्रवृत्तिम्-पञ्चज्ञानेन्द्रियाणां मनोबुद्धिचित्ताहङ्काराणां च गतिप्रवृत्तिम् *"नवते गतिकर्मा"* [*निघ० २ । १४*] नाशयामि *"वक्ष रोषे"* [ *भ्वादिः* ] ॥ ८ ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( सप्तहा ) उपासक के सात दोषों अर्थात् काम-क्रोध-लोभ-मोह-मद-भय-शोकों का नाशक ( नहुषः-नहुष्टरः ) नह्-बन्धन का उषः-दग्ध करने वाले जीवन्मुक्त का भी मुक्ततर-नित्यमुक्त ( शवसा ) आत्मबल से ( यदुं तुर्वशम् ) प्रयतमान को निकट में वर्तमान उपासक को ( प्र-अश्रवयम् ) निज उपदेश वेदज्ञान को सुनाता हूँ ( अहम् ) मैं परमात्मा ( अन्यं सहसा सहः-नि करम् ) अन्य किसी स्तोता को अपने बल से बलवान् करता हूँ ( व्राधतः-नव नवतिं च वक्षयम् ) महान् आत्मा के नव संख्यावाली गतिप्रवृत्ति अर्थात् पांच ज्ञानेन्द्रियां और चार-मन, बुद्धि, चित्त, अहङ्कार की गतिप्रवृत्ति को नष्ट करता हूँ ॥ ८ ॥

**भावार्थ**—परमात्मा नित्यमुक्त है वह जीवन्मुक्त उपासक के काम-क्रोध-मद-मोह-राग-भय-शोकों को नष्ट कर देता है और उसे आत्मबल प्रदान करता है तथा अपना मङ्गलमय उपदेश भी देता है अपितु उसके चारों अन्तःकरण, पांचों ज्ञानेन्द्रियों की सांसारिक गतिप्रवृत्तियों को भी हटा देता है ॥ ८ ॥

**अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि ।**
**अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥ ९ ॥**

अहम् । सप्त । स्रवतः । धारयम् । वृषा । द्रवित्न्वः । पृथिव्याम् । सीराः । अधि । अहम् । अर्णांसि । वि । तिरामि । सुऽक्रतुः । युधा । विदम् । मनवे । गातुम् । इष्टये ॥ ९ ॥

**संस्कृतान्वयार्थः**—( अहं वृषा) अहं सुखवर्षकः परमात्मा ( सप्त स्रवतः-द्रवित्न्वः सीराः पृथिव्याम्-अधि धारयम्) सप्तान् स्रवणशीलान् प्राणान् तथा द्रवन्ती-रक्तं वहन्ती-र्नाडीः *"सीराः-नाड़ीः"* ऋ० *१ । १७४ । ९ दयानन्दः*] शरीरे *"यच्छरीरं पुरुषस्य सा पृथिवी"* [*ऐ० आ० ४ । ३ । ३* ] अधिधारयामि ( अहं सुक्रतुः ) अहं सुकुशलः कर्त्ता परमात्मा ( मनवे )

मनुष्याय ( अर्णांसि वितिरामि-इष्टये ) विविधान् विषयरसान् प्रयच्छामि, इन्द्रियाणामाकांक्षायै ( युधा विदम् ) स्वकीय विभुगत्या *"युध्यति गतिकर्मा"* [ *निघ० २ । १४* ] वेदयामि प्रापयामि 'अन्तर्गतो णिजर्थः' ॥ ६ ॥

**भाषान्वयार्थ**—( अहं वृषा ) मैं सुखवर्षक परमात्मा ( सप्त स्रवतः-द्रवित्त्वः सीराः ) सात स्रवणशील प्राणों को तथा रक्त को वहन करती नाड़ियों को ( पृथिव्याम्-अधि धारयम् ) शरीर में अधिष्ठित करता हूं ( अहं सुक्रतुः ) मैं सुकुशल कर्त्ता परमात्मा ( मनवे ) मनुष्य के लिए ( अर्णांसि वितिरामि-इष्टये ) विविध विषयरसों को कामनापूर्ति के लिए देता हूँ ( युधा विदम् ) अपनी विभुगति से प्राप्त कराता हूँ ॥ ९ ॥

**भावार्थ**—परमात्मा शरीर के अन्दर प्राणों का सञ्चार करता है, रस रक्त को नाड़ियों में बहाता है, इन्द्रियों की कामना के लिये विषयरसों को भी प्रदान करता है। ऐसे उस परमात्मा की उपासना करनी चाहिए ॥ ९ ॥

**अहं तदासु धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत् ।**
**स्पार्हं गवामूधःसु वक्षणास्वा मधोर्मधु श्वात्र्यं सोममाशिरम् ॥१०॥**

अहम् । तत् । आसु । धारयम् । यत् । आसु । न । देवः । चन । त्वष्टा । अधारयत् । रुशत् । स्पार्हम् । गवाम् । ऊधःऽसु । वक्षणासु । आ । मधोः । मधु । श्वात्र्यम् । सोमम् । आऽशिरम् ॥ १० ॥

**संस्कृतान्वयार्थः**—( अहम् ) अहं परमात्मा ( आसु तत्-धारयम् ) एतासु गोषु नाडीषु वा तद् दुग्धं रसं वा धारयामि ( यत्-रुशत्-आसु देवः-चन त्वष्टा न-अधारयत् ) यत् खलूज्ज्वलमेतासु गोषु नाडीषु वा दुग्धं रसं वा कश्चन देवः शिल्पी वा धारयितुं न शक्नोति (गवाम्-ऊधः सु वक्षणासु स्पार्हम्) गवां दुग्धाधारस्थानेषु रसवहनसमर्थासु नाडीषु वा ( आ मधोः-मधु श्वात्र्यं सोमम्-आशिरम् ) यावन्मधुरान्मधुरं यद्रुचिरं शिवकरं कल्याणकरम् *"शिवा ह्यापस्तस्मादाह श्वात्राः शिवा स्थ"* [ *श० ३ । ६ । ४ । १६* ] तत्र साधु यच्छान्दसः' सोमम्—आशिरमिति सोमं सोमस्य 'विभक्ति व्यत्ययः' आश्रयीभूतं सोमे मिश्रणीयं दुग्धं सोमौषधे उत्पादकं नदीजलं चाहं धारयामि ॥ १० ॥

**भाषान्वयार्थ**—( अहम् ) मैं परमात्मा ( आसु तत्-धारयम् ) इन गौओं में या नाड़ियों में वह दूध वा रस धारण कराता हूँ ( यत्-रुशत्-आसु देवः-चन त्वष्टा न-अधारयत् ) जो उज्ज्वलरूप इन गौओं में या नाड़ियों में दुग्ध या रस कोई विद्वान् या शिल्पी नहीं धारण करा सकता ( गवाम्-ऊधःसु वक्षणासु स्पार्हम् ) गौओं के दुग्धाधार—लेवा स्थानों में या रसवहन करने में समर्थ नाड़ियों में ( आ मधोः-मधु श्वात्र्यं सोमम्-आशिरम् ) जब तक मधुर से मधुर जो रुचिकर कल्याणकर है, सोम का आश्रयीभूत-सोम में मिलाने योग्य दूध को, सोमौषधि को उत्पन्न करने वाले जल को मैं धारण करता हूँ ॥ १० ॥

**भावार्थ**—गौओं में दूध और नाड़ियों में रस मनुष्य के निर्वाह के वास्ते परमात्मा ही उत्पन्न करता है- धारण करता है। ये कार्य किसी देव अग्नि आदि का काम नहीं न किसी शिल्पी का ॥ १० ॥

**एवा देवाँ इन्द्रो विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः ।**
**विश्वेत्ता ते हरिवः शचीवोऽभि तुरासः स्वयशो गृणन्ति ॥ ११ ॥**

एव । देवान् । इन्द्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा । सत्यऽराधाः । विश्वा । इत् । ता । ते । हरिऽवः । शचीऽवः । अभि । तुरासः । स्वऽयशः । गृणन्ति ॥ ११ ॥

**संस्कृतान्वयार्थः**—( एव मघवा सत्यराधाः-इन्द्रः ) एवङ्गुणविशिष्टः सृष्टियज्ञवान् स्थिरधनवान् मोक्षरूपस्थिरधनवान् मोक्षस्य दाता खलु परमात्मा ( नॄन् देवान् ) मुमुक्षून् *"नरो ह वै देवविशः"* [ *जै० १ । ८६* ] विदुः ( च्यौत्नेन ) शरीरबन्धनच्यावनेन स्वबलेन *"च्यौत्न बलनाम"* [ *नि० २ । ६* ] ( प्र विव्ये ) प्रकर्षेण संवृणोति-आत्मीयान् करोति *"विव्ये संवृणोति"* [ *ऋ० १ । १७६ । ६ दयानन्दः* ] *व्येञ् संवरणे"* [ *भ्वादिः* ] "आत्मनेपदि लिटि प्रथमपुरुषैकवचने रूपम्' प्रत्यक्षदृष्टयोच्यते ( हरिवः शचीवः स्वयशः ) दुःखहर्तारौ दयाप्रसादौ यस्य तद्वन् दयाप्रसादवन् ! कर्मवन् ! अनपेक्षितान्याधार ! स्वापेक्षित यशं यस्य तद्वन् ! स्वाधारयशोवन् ! परमात्मन् ! ( ते ता विश्वा तुरासः-अभि गृणन्ति ) तव तानि सर्वाणि कर्माणि संयमिनः संसारसागरं तरन्तः *"तुर इति यमनाम तरतेः"* [ *निरु० १२ । १६* ] अभिष्टुवन्ति ॥ ११ ॥

**भाषान्वयार्थ**—( एव मघवा सत्यराधाः-इन्द्रः ) इस प्रकार गुणयुक्त सृष्टियज्ञ का कर्त्ता नित्यधनवान् मोक्षरूपस्थिर धनवान् मोक्ष का दाता परमात्मा ( नॄन् देवान् ) मुमुक्षु विद्वानों को ( च्यौत्नेन ) शरीरबन्धन को च्युत करने वाले बल से ( प्र विव्ये ) प्रकृष्टरूप से अपनाता है ( हरिवः शचीवः स्वयशः ) हे दुःखहरण करने वाले, दया और प्रसाद जिसके हैं ऐसे हे कर्मवाले तथा स्वाधार यश वाले परमात्मन् ! ( ते ता विश्वा तुरासः-अभि गृणन्ति ) तेरे उन सब कार्यों को संयमी संसारसागर को तरने वाले निरन्तर तेरी स्तुति करते हैं ॥ ११ ॥

**भावार्थ**—परमात्मा स्वाधार यश वाला है, मोक्षरूप धन का स्वामी है, मुमुक्षु उपासकों को अपनाता है, उन्हें मोक्ष प्रदान करता है। उसके दयाप्रसाद मानव के लिए भारी हितकर हैं। संयमीजन संसार सागर से तरने के लिए उसकी स्तुति करते हैं ॥ ११ ॥



# पञ्चाशं सूक्तम्

ऋषिः—वैकुण्ठ इन्द्रः ।

देवता—वैकुण्ठ इन्द्रः ।

छन्दः—१, निचृज्जगती । २, आर्ची स्वराड् जगती । ६, ७, पादनिचृज्जगती । ३, पादनिचृत् त्रिष्टुप् । ४, विराट् त्रिष्टुप् । ५, त्रिष्टुप् ॥

विषयः—अत्र सूक्ते 'इन्द्र' शब्देन परमात्मा वर्ण्यते, स चोपासकानां विशिष्टहितकरः, ज्ञानदाता, रक्षको मोक्षप्रदाता सर्वयोजनासु स्तुत्यः सर्वै रित्येवमादयो विषया वर्ण्यन्ते ॥

इस सूक्त में इन्द्र शब्द से परमात्मा गृहीत है वह उपासकों का विशेष हितकर, ज्ञानदाता, रक्षक, मोक्षदाता सब योजनाओं में स्तुतियोग्य है, इत्यादि विषय वर्णित है ॥

प्र वो॑ म॒हे मन्द॑मानाया॒न्धसोऽर्चा॑ वि॒श्वान॑राय विश्वा॒भुवे॑ ।
इन्द्र॑स्य॒ यस्य॒ सुम॑खं॒ सहो॒ महि॒ श्रवो॑ नृ॒म्णं च॒ रोद॑सी सप॒र्यतः॑ ॥ १ ॥

प्र । वः॒ । म॒हे । मन्द॑मानाय । अन्ध॑सः । अर्च॑ । वि॒श्वान॑राय । वि॒श्व॒ऽभुवे॑ । इन्द्र॑स्य । यस्य॑ । सुऽम॑खम् । सहः॑ । महि॑ । श्रवः॑ । नृ॒म्णम् । च॒ । रोद॑सी इति॑ । स॒प॒र्यतः॑ ॥ १ ॥

संस्कृतान्वयार्थः—( वः ) हे उपासका यूयम् ! 'विभक्तिव्यत्ययः' ( अन्धसः-मन्दमानाय ) अन्धसा 'विभक्ति व्यत्ययः' आध्यानीयेन समन्तध्यानेन–उपासनेन हृष्यते मोदमानाय ( विश्वानराय ) विश्वस्य नेत्रे ( विश्वाभुवे ) विश्वस्मिन् भवित्रे व्यापकाय ( महे-इन्द्रस्य ) महते–इन्द्राय 'विभक्ति व्यत्ययः' ऐश्वर्यवते परमात्मने ( प्र-अर्च ) प्रकृष्टं स्तुवीध्वम् ( यस्य ) यस्य परमात्मनः ( सुमखं सहः-महिश्रवः-नृम्णं च ) सुमहत् "सुमखं सुमहत्" *[ निरु० ११ । ६ ]* बलं महच्च श्रवणीयं यशः-नृम्नतं चाध्यात्मसुखम् ( रोदसी सपर्यतः ) द्यावापृथिवी–तत्रस्थौ ज्ञानकर्मशीलौ नरनार्यौ प्रशंसतः–मन्येताम् ॥ १ ॥

**भाषान्वयार्थ**—( वः ) हे उपासको तुम ( अन्धसः-मन्दमानाय ) आध्यान-समन्त रूप से ध्यान करने से प्रसन्न होने वाले—( विश्वानराय ) विश्व के नेता—( विश्वाभुवे ) विश्व के अन्दर व्यापक—( महे-इन्द्रस्य ) महान् ऐश्वर्यवान् परमात्मा के लिए ( प्र-अर्च ) प्रकृष्ट रूप से अर्चना—स्तुति करो ( यस्य ) जिस परमात्मा का ( सुमखं सहः-महिश्रवः-नृम्णं च ) सुमहान् बल और महान् श्रवणीय यश मनुष्यों में प्राप्त अध्यात्मसुख है, तथा ( रोदसी सपर्यतः ) द्यावापृथिवी—वहां रहने वाले ज्ञानकर्मशील नरनारी प्रशंसा करते हैं मानते हैं ॥ १ ॥

**भावार्थ**—परमात्मा विश्व का नायक और विश्व में व्यापक है। उसका महान् बल और महान् यश मुमुक्षु उपासकों के प्रति झुका हुआ है तथा ज्ञानशील और कर्मशील नरनारी उसकी प्रशंसा करते हैं मानते हैं। वह स्तुति करने योग्य है ॥ १ ॥

**सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इन्द्रो मावते नरे।**
**विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्वभि शूर मन्दसे ॥ २ ॥**

सः। चित्। नु। सख्या। नर्यः। इनः। स्तुतः। चर्कृत्यः। इन्द्रः। माऽवते। नरे। विश्वासु। धूःऽसु। वाजऽकृत्येषु। सत्ऽपते। वृत्रे। वा। अप्ऽसु। अभि। शूर। मन्दसे ॥ २ ॥

**संस्कृतान्वयार्थः**—( सः-इन्द्रः-चित्-नु सख्या नर्यः-इनः ) सः- 'उत्वं विसर्गस्य छान्दसः' अवश्यं परमात्मा सखित्वेन-उपासनया नराणां मुमुक्षूणां हितकरः स्वामी ( स्तुतः-चर्कृत्यः ) स्तोतव्यः पुनः पुनर्भृशं वा सत्करणीयः ( मावते नरे ) मादृशाय मुमुक्षवेऽस्ति ( विश्वासु धूः सु ) सर्वासु धारणासु धारणीयासु वृत्तिषु वा ( वाजकृत्येषु ) बलकार्येषु ( सत्पते शूर ) सतां पालक ! परमात्मन् ! शूर ज्ञानवन् ! ( वृत्रे वा अप्सु-अभिमन्दसे ) पापिजनेषु—आप्तजनेषु च—अभिस्तुतिं प्राप्नोषि ॥ २ ॥

**भाषान्वयार्थ**—( सः-इन्द्रः-चित्-नु सख्या नर्यः-इनः ) वह परमात्मा उपासना द्वारा मुमुक्षुओं का हितकर स्वामी होता है ( स्तुतः-चर्कृत्यः ) स्तोतव्य है और पुनः पुनः या भली प्रकार सत्करणीय है ( मावते नरे ) मेरे सदृश मुमुक्षु के लिए है ( विश्वासु धूः सु ) सारी धारणीय वृत्तियों में—योजनाओं में ( वाजकृत्येषु ) बलकार्यों में ( सत्पते शूर ) हे सज्जनों के पालक ! ज्ञानवन् ! परमात्मन् ! ( वृत्रे वा-अप्सु-अभि मन्दसे ) पापीजनों में तथा आप्तजनों में सम्यक् स्तुति को प्राप्त होता है ॥ २ ॥

**भावार्थ**—परमात्मा उपासकों के लिए हितकर स्वामी है। वह सारी योजनाओं तथा बलकार्यों में स्तुत्य और सत्कार करने योग्य है ॥ २ ॥

**के ते नर इन्द्र ये त इषे ये ते सुम्नं सधन्यमियक्षान्।**
**क ते वाजायासुर्याय हिन्विरे के अप्सु स्वासूर्वरासु पौंस्ये ॥ ३ ॥**

के । ते । नरः । इन्द्र । ये । ते । इषे । ये । ते । सुम्नम् । सऽधन्यम् । इयक्षान् के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । ऊर्वरासु । पौंस्ये ॥ ३ ॥

**संस्कृतान्वयार्थः**—( इन्द्र के ते नरः ) हे परमात्मन् ! के हि ते नरो मुमुक्षवः सन्ति ( ये ते-इषे ) ये तव-एषणीयमोक्षाय ( सुम्नं सधन्यम्-इयक्षान् ) आत्मानं साधुम् *"सुम्ने मा धत्तमिति साधौ मा धत्तमित्येवैतदाह"* [ *श०* १ । ८ । ३ । २७ ] तथा सधन्यं सफलं सङ्गच्छन्ते *"इयक्षति गतिकर्मा"* [ *निघ०* २ । १४ ] के (ते वाजाय-असुर्याय हिन्विरे) के तव-अमृतान्नभोगाय-प्राणपोषकाय *"अमृतोऽन्नं वै वाजः"* [ *जै०* २ । १९३ ] आत्मानं प्रेरयन्ति ( के स्वासु-उर्वरासु अप्सु पौंस्ये ) के खलु स्वासु-उच्चासु कामनासु *"आपो वै सर्वेकामाः"* [ *श०* ४ । ५ । ५ । १५ ] आत्मत्वे च-आत्मानं प्रेरयन्ति ॥ ३ ॥

**भाषान्वयार्थ**—( इन्द्र के ते नरः ) हे परमात्मन् ! वे तेरे मुमुक्षुजन कौन हैं ( ये ते इषे ) जो तेरे एषणीय मोक्ष के लिए ( सुम्नं सधन्यम्-इयक्षान् ) जो अपने को साधु और सधन्य, सफल सङ्गत करते हैं ( के ते वाजाय-असुर्याय हिन्विरे ) कौन तेरे अमृत अन्नभोग के लिए अपने को प्रेरित करते हैं ( के स्वासु-उर्वरासु-अप्सु पौंस्ये ) कौन अपनी ऊंची कामनाओं में और आत्मभाव में आत्मा को प्रेरित करते हैं ॥ ३ ॥

**भावार्थ**—मोक्ष की इच्छा करने वाले और अपने को उसके अधिकारी बनाने वाले विरले होते हैं एवं परमात्मा के अमृतभोग को चाहने वाले अपने को उन्नत किया करते हैं ॥ ३ ॥

**भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः ।**
**भुवो नॄँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ ४ ॥**

भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः । भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः । विश्वऽचर्षणे ॥ ४ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे ऐश्वर्यवन् परमात्मन् ! ( त्वम् ) ( ब्रह्मणा महान् भुवः ) ज्ञानेन वेदज्ञानेन महान् भवसि ( विश्वेषु सवनेषु यज्ञियः-भुवः ) सर्वेषु सम्पादनीयेषु ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमेषु सङ्गमनीयो भवसि ( नॄन्-च्यौत्नः-भुवः ) मुमुक्षून् प्रति रागादीन् च्योतयिता बलवान् भवसि ( विश्वचर्षणे) हे सर्वद्रष्टः परमात्मन् ! ( विश्वस्मिन् भरे ज्येष्ठः-मन्त्रः-च ) सर्वस्मिन् भरणीये धारणीये निर्वाहके त्वं ज्येष्ठः श्रेष्ठो मन्त्रयिता मन्त्रप्रदः-ज्ञानप्रदो भवसि ॥ ४ ॥

**भाषान्वयार्थ**—( इन्द्र ) हे ऐश्वर्यवन् परमात्मन् ( त्वम् ) तू ( ब्रह्मणा महान् भुवः ) वेदज्ञान से महान् है ( विश्वेषु सवनेषु यज्ञियः-भुवः ) सब सम्पादनीय ब्रह्मचर्य, गृहस्थ, संन्यास आश्रमों में सङ्गमनीय है ( नॄन्-च्यौत्नः-भुवः ) मुमुक्षुओं के प्रति रागादिओं को हटाने वाला

बलवान् है ( विश्वचर्षणे ) हे सर्वद्रष्टा परमात्मन् ! ( विश्वस्मिन् भरे ज्येष्ठः-मन्त्रः-च ) सम्पूर्ण भरणीय-धारणीय-निर्वाह करने योग्य वस्तुओं में तू ज्येष्ठ मन्त्रप्रद और ज्ञानप्रद है ॥ ४ ॥

**भावार्थ**—परमात्मा महान् ज्ञानवान् है। सब आश्रमियों के समागम योग्य है। मुमुक्षुओं के अन्दर से रागादि दोषों को हटाने वाला है। समस्त भरण करने वाले पदार्थों में ज्येष्ठ और ज्ञानप्रद है ॥ ४ ॥

**अवा नु कं ज्यायान् यज्ञवनसो मही त ओमात्रां कृष्टयो विदुः ।**
**असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे ॥ ५ ॥**

अवं । नु । कम् । ज्यायान् । यज्ञऽवनसः । महीम् । ते । ओमात्राम् । कृष्टयः । विदुः । असः । नु । कम् । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ ५ ॥

**संस्कृतान्वयार्थः**—( ज्यायान् ) हे इन्द्र–ऐश्वर्यवन् परमात्मन् ! त्वं महान्-असि ( यज्ञवनसः-नु कम्-अव ) ये–अध्यात्मयज्ञं वनन्ति सम्भजन्ति–अध्यात्मयज्ञस्यानुष्ठातारस्तान् शीघ्रं रक्ष ( ते महीम्-ओमात्रां कृष्टयः-विदुः ) तव महतीं रक्षाम् "अव रक्षणे" [ भ्वादिः ] 'मात्रन् प्रत्ययो बाहुलकादौणादिकः, ऊठ् च बाहुलादेव' मनुष्या जानन्ति ( अजरः-नु कम्-असः-च वर्धाः ) त्वं खल्वजरो जराहितो भवसि शीघ्रं वर्धय ( विश्वा–एता सवना-इत्-तूतुमा-कृषे ) सर्वाणि–एतानि सवनानि निष्पाद्यानि स्तुतिप्रार्थनोपासनानि शीघ्रं स्वीकरोषि, इत्यपि जानन्ति ॥ ५ ॥

**भाषान्वयार्थ**—( ज्यायान् ) हे इन्द्र ऐश्वर्यवन् परमात्मन् ! तू महान् है ( यज्ञवनसः-नु कम्-अव ) अध्यात्मयज्ञ को जो सेवन करते हैं उनकी शीघ्र रक्षा कर ( ते महीम्-ओमात्रां कृष्टयः-विदुः ) तेरी महती रक्षा को मनुष्य जानते हैं ( अजरः-नु कम्-असः-च वर्धाः ) तू अजर–जरारहित है शीघ्र हमें बढ़ा ( विश्वा-एता सवना-इत्-तूतुमा-कृषे ) सारी इन निष्पादन करने योग्य स्तुति–प्रार्थना–उपासनाओं को शीघ्र स्वीकार करता है, ये भी जानते हैं ॥ ५ ॥

**भावार्थ**—परमात्मा महान् है, उसकी रक्षणशक्ति भी महती है। वह अध्यात्मयाजी जनों की पूरी रक्षा करता है और उनकी स्तुति प्रार्थना उपासनाओं को अवश्य शीघ्र स्वीकार करता है ॥ ५ ॥

**एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ।**
**वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥ ६ ॥**

एता । विश्वा । सवना । तूतुमा । कृषे । स्वयम् । सूनो इति । सहसः । यानि । दधिषे । वराय । ते । पात्रम् । धर्मणे । तना । यज्ञः । मन्त्रः । ब्रह्म । उत्ऽयतम् । वचः ॥ ६ ॥

**संस्कृतान्वयार्थः**—( एता विश्वा सवना तूतुमा कृषे ) हे परमात्मन् ! इमानि विश्वानि निष्पाद्यानि स्तुतिप्रार्थनोपासनानि कर्माणि शीघ्रं स्वीकरोषि ( सहसः सूनो ) अध्यात्मबलस्य उत्पादक परमात्मन् ! ( यानि स्वयं दधिषे ) यानि खलु स्वयं विदधिषे विदधासि वेदेषूपदिशसि ( ते पात्रं धर्मणे वराय तना ) तव पात्राय पात्रभूताय 'चतुर्थी स्थाने द्वितीया' त्वां वरयित्रे धारकाय ध्यानशीलाय-अध्यात्मधनानि भवन्तु "तना धन नाम" [ निघ० २ । १० ] ( यज्ञ.-मन्त्रः-ब्रह्मोद्यतं वचः ) तस्य पात्रभूतस्य स्तोतुः-यज्ञम् श्रेष्ठकर्मयजनं मननं ज्ञानं प्रकटितं स्तुतिवचनं तुभ्यमस्तु ॥ ६ ॥

**भाषान्वयार्थ**—( एता विश्वा सवना तूतुमा कृषे ) हे परमात्मन् ! इन सब निष्पादन योग्य स्तुति-प्रार्थना-उपासना कर्मों को तू शीघ्र स्वीकार करता है ( सहसः सूनोः ) अध्यात्मबल के उत्पादक परमात्मा ( यानि स्वयं दधिषे ) जिनको स्वयं विधान करता है वेदों में उपदेश देता है ( ते पात्रं धर्मणे वराय तना ) तेरे पात्रभूत तुझको वरने वाले-ध्यान करने वाले के लिए अध्यात्मधन होवें ( यज्ञः-मन्त्रः-ब्रह्मोद्यतं वचः ) उस पात्रभूत के-स्तोता के यज्ञ-श्रेष्ठकर्म, मनन, ज्ञान, प्रकट हुए-हुए स्तुतिवचन तेरे लिए होवें ॥ ६ ॥

**भावार्थ**—वेदों में कहे स्तुति प्रार्थना उपासना आदि कर्म परमात्मा को स्वीकार होते हैं। उस पात्रभूत स्तुतिकर्त्ता के लिए परमात्मा आध्यात्मिक धन प्रदान करता है इसलिए स्तुतिकर्त्ता अपने श्रेष्ठकर्म, मनन, ज्ञान आदि परमात्मा के प्रति समर्पित करे ॥ ६ ॥

**ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने ।**
**प्र ते सुम्नस्य मनसा पथा भुवन्मदे सुतस्य सोम्यस्यान्धसः ॥ ७ ॥**

ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनाम् । च । वसुनः । च । दावने । प्र । ते । सम्नस्य । मनसा । पथा । भुवन् । मदे । सुतस्य । सोम्यस्य । अन्धसः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( विप्र ) हे विशिष्टतया प्रीणयितः परमात्मन् ! ( ते ) तव ( ब्रह्मकृतः ) ये खलु स्तोत्रकृतः-स्तुतिकर्तारः ( सुते सचा ) उपासनाप्रसङ्गे सम्मिलिताः ( वसूनां च वसुनः-च दावने ) सांसारिकधनानां वासकधनस्य मोक्षस्य च दानाय दाननिमित्तं स्तुवन्तीति शेषः, तथा ( मनसा पथा ) मनोभावेन पथा सत्पथा सदाचरणेन च ( ते मदे ) तव हर्षनिमित्तम् ( सुम्नस्य-सुतस्य सोम्यस्य प्रभुवन् ) साधुभावस्य निष्पादितस्योपासनारसस्य समर्पणे प्रभवन्ति तान् त्वमनुगृहाण ॥ ७ ॥

**भाषान्वयार्थ**—( विप्र ) हे विशेषरूप से तृप्त करने वाले परमात्मन् ( ते ) तेरे ( ये ब्रह्मकृतः ) स्तोत्र-स्तुति करने वाले ( सुते सचा ) उपासनाप्रसङ्ग में सम्मिलित ( वसूनां च वसुनः-च दावने ) सांसारिक धनों का भी जो श्रेष्ठ बसाने वाला मोक्षधन है उसके प्रदान करने के लिए

उपासकलोग स्तुति करते हैं ( मनसा पथा ) मनोभाव के सत्यपथ–सदाचरण द्वारा ( ते मदे ) तेरे हर्ष के निमित्त ( सुम्नस्य सुतस्य सोम्यस्य प्रभुवन् ) निष्पादित साधुभाव उपासनारस के समर्पण में समर्थ होते हैं उन्हें तू अनुगृहीत कर ॥ ७ ॥

**भावार्थ**—परमात्मा, स्तुति करने वालों को सब धनों से ऊंचे धन मोक्ष को प्रदान करता है जो मन से और सदाचरण से तथा साधुभाव से परमात्मा की उपासना करने में समर्थ होते हैं उन पर वह कृपा बनाये रखता है ॥ ७ ॥



# एकपञ्चाशं सूक्तम्

ऋषिः—१, ३, ५, ७, ९ देवाः। २, ४, ६, ८, सौचीकोऽग्निः।

देवता—१, ३, ५, ७, ९ सौचीकोऽग्निः। २, ४, ६, ८ देवाः।

छन्दः—१, ३, निचृत् त्रिष्टुप्। २, ५, ६, विराट् त्रिष्टुप्। ४, ७, त्रिष्टुप्। ८, ९, भुरिक् त्रिष्टुप्॥

विषयः—अत्र सूक्ते 'अग्नि' शब्देन आत्मा विद्युदग्निश्च गृह्येते। तत्रात्मनो जन्मधारणमन्नपानं च विषयग्रहणं चैव कार्यं यथा कल्याणं मोक्षं च भवेत्। विद्युतः प्रयोगश्चैवं कर्त्तव्यो यथा यन्त्रचालनं सुव्यवस्थितं भवेदेवमादयो विषयाः सन्ति।

इस सूक्त में 'अग्नि' शब्द से आत्मा और विद्युदग्नि गृहीत हैं। आत्मा का जन्मधारण, अन्नपान, कल्याण और मोक्ष को देने वाला विषयग्रहण तथा विद्युत् का ऐसा प्रयोग जिससे सुव्यवस्थित यन्त्रचालन हो, आदि विषय हैं॥

महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः॥ १॥

महत्। तत्। उल्बम्। स्थविरम्। तत्। आसीत्। येन। आऽविष्टितः। प्रऽविवेशिथ। अपः। विश्वाः। अपश्यत्। बहुधा। ते। अग्ने। जातऽवेदः। तन्वः। देवः। एकः॥ १॥

**संस्कृतान्वयार्थः**—(जातवेदः-अग्ने) जातः सन् वेद्यते जनैर्विद्युदग्ने वा-इति तद्धर्मवन् शरीरेण जातेन सह वेद्यतेऽस्तीति जनैर्वेद्यतेऽनुभूयतेऽस्त्यात्माऽग्निर्ह्यात्मा तथाभूत अग्ने-आत्मन् (तत्-उल्बं महत् स्थविरम्) गर्भे तत् खलूल्बमाच्छादकं वस्त्रमिव जलं वैद्युततरङ्गमण्डलं वाकाशे विद्यमानं महत्त्वपूर्णं बृहद्वा पुरातनं जन्मजन्मान्तरपरम्परयाप्राप्तं यद्वा पुरातनं सृष्टेरारम्भतः प्रवर्तमानम् (तत् आसीत्) तदस्ति

प्रवर्तते ( येन-आविष्टितः-अपः-प्रविवेशिथ ) येन सह-आवेष्टितः सर्वतोरक्षितः सन् "वेष्ट वेष्टने" [ भ्वादिः ] 'ह्रस्वत्वं छान्दसम्' प्राणान् "आपो वै प्राणाः" [ श० ३ । ८ । २ । ४ ] जलानि-आकाशीय मेघरूपजलानि पार्थिवनदीस्रोतः प्रभृति जलानि च प्रविष्टो भवसि ( ते विश्वा बहुधा तन्वः-एकः-देवः-अपश्यत् ) तव बहुविधानि सर्वाण्यङ्गानि बहुविधा व्याप्तयो वा "तनूः-व्याप्तिः" [ यजु० ५ । ८ दयानन्दः ] विस्तृतास्तरङ्गाः, एको यमः-नियन्ता कर्मानुसारतः प्रवेशयिता, एकः सुखदाता प्रकाशयिता परमात्मा विद्वान् वा जानाति प्रकाशयति वा ॥ १ ॥

भाषान्वयार्थ—( जातवेदः-अग्ने ) हे शरीर के उत्पन्न होने के साथ ही जाने जाने वाले आत्मन् ! तथा उत्पन्न होते ही ज्ञान में आने वाली विद्युत् रूप अग्ने ! ( तत्-उल्बं महत् स्थविरम्) गर्भ में वह उल्ब–आच्छादक वस्त्र के समान, मेघजल में वैद्युत् तरंगमण्डल आकाश में विद्यमान महत्त्वपूर्ण पुरातन जन्मजन्मान्तर परम्परा से प्राप्त अथवा सृष्टि के आरम्भ से प्रवर्तमान ( तत्-आसीत् ) वह है ( येन-आविष्टितः-अपः-प्रविवेशिथ ) जिसके साथ सर्वतोरक्षित हुआ प्राणों को या मेघरूप जलों को पार्थिव नदी स्रोतों को प्रविष्ट है ( ते विश्वा बहुधा तन्वः-एकः-देवः-अपश्यत् ) तेरे बहुत प्रकार के सारे अङ्ग या व्याप्तियां, विस्तृत तरङ्गें, एक नियन्ता कर्मानुसार प्रवेश कराने वाला, एक सुखदाता परमात्मा या विद्वान् जानता है या प्रकाशित करता है ॥ १ ॥

भावार्थ—आत्मा शरीर में उत्पन्न होते ही जाना जाने वाला, जो परम्परा से जन्म धारण करता हुआ आ रहा है वह प्राणों को धारण करता है। उसे कर्मानुसार परमात्मदेव गर्भ को प्राप्त कराता है। तथा–आकाश में पुरातन काल से मेघों में उत्पन्न होते ही ज्ञान में आने वाला विद्युत् अग्नि है। वह मेघजलों में ईश्वर की व्यवस्था से प्राप्त होता है और मेघजलों को गिराता है ॥ १ ॥

**को मा॑ ददर्श कत॒मः स दे॒वो यो मे॑ त॒न्वो॑ बहु॒धा प॒र्यप॑श्यत् ।**
**क्वाह॑ मित्रावरुणा क्षियन्त्य॒ग्नेर्विश्वा॑ः स॒मिधो॑ दे॒वयानी॑ः ॥ २ ॥**

कः । मा॒ । द॒द॒र्श॒ । क॒त॒मः । सः । दे॒वः । यः । मे॒ । त॒न्वः॑ । ब॒हु॒धा । परि॑ऽअप॑श्यत् । क्व॑ । अह॑ । मि॒त्रा॒व॒रु॒णा॒ । क्षि॒य॒न्ति॒ । अ॒ग्नेः । विश्वा॑ः । स॒म्ऽइधः॑ । दे॒व॒ऽयानीः॑ ॥ २ ॥

संस्कृतान्वयार्थः—( कः-मा ददर्श ) कः स देवो मां पश्यति–जानाति खल्वन्तर्हितं प्राणेषु जलेषु वा ( कतमः सः- देवः-यः-मे बहुधा तन्वः ) बहुषु देवेषु कतमः खलु सुखयिता ऽऽत्मा प्रकाशको विद्वान् यश्च मम बहुधा बहुप्रकाराणि-अङ्गानि बह्वस्तरङ्गा वा ( परि-अपश्यत् ) परिपश्यति सर्वतो जानाति ( मित्रा वरुणा ) हे मित्रावरुणौ प्राणापानौ–इन्द्रियदेवेषु खल्वप्रभूतौ "प्राणापानौ वै मित्रावरुणौ" [ काठ० २९ । १ ]

विद्युतः शुष्कार्द्रधारे तद्वेत्तारौ *"विद्युतो ज्योतिः परिसंजिहान मित्रावरुणा यदपश्यतां त्वा"* [ ऋ० ७ । ३३ । १० ] मनीषिशिल्पिनौ वा *"एतौ मित्रावरुणावेवषंस्ये शाते"* [ कठ० ११ । १० ] *"मित्रावरुणौ त्वा वृष्टयावताम्"* [ श० १ । ८ । १ । १२ ] *"मित्रावरुणौ ध्रुवेण धर्मेणेति"* [ मं० ३ । ८ । ६ ] ( अग्नेः क्व-अह ) मम ज्ञानिन आत्मनः—विद्युदग्नेर्वा-अरे कुत्र ( देवयानीः-विश्वाः-समिधः-क्षियन्ति ) देवं परमात्मानं प्रति गन्त्र्यः—देवयानसाधनभूताः, वैज्ञानिकं विद्वांसं ज्ञापयित्र्यः सम्यग्दीप्ताश्चेतनवृत्तयः शक्तयः, सम्यग्दीप्तिनिमित्तास्तरङ्गाः कुत्र निवसन्तीति ज्ञातव्यम् ॥ २ ॥

**भाषान्वयार्थ**—( कः-मा ददर्श ) वह कौन देव मुझे देखता है—जानता है, प्राणों में छिपे हुए या जलों के अन्तर्गत छिपे हुये को ( कतमः सः-देवः-यः-मे बहुधा तन्वः ) बहुतेरे देवों में कौन सुख देने वाला प्रकाशक या विद्वान् है जो मेरे बहुत सारे अङ्गों को या तरङ्गों को ( परि-अपश्यत् ) देखता है—जानता है ( मित्रावरुणा ) हे प्राणापानो इन्द्रियदेवों में अग्रभूत ! विद्युत् की शुष्क—आर्द्र धाराओं या उनके जानने वाले मनीषि शिल्पियो ! ( अग्नेः क्व-अह ) मुझ ज्ञानी आत्मा या विद्युदग्नि के जानने वाले अरे कहाँ ( देवयानीः-विश्वाः-समिधः-क्षियन्ति ) परमात्मा के प्रति जाने वालीं, देवयान के साधनभूत, वैज्ञानिक विद्वान् को जनाने वालीं सम्यग्दीप्त चेतन शक्तियां या सम्यग्दीप्तिनिमित्त तरंगें कहां रहती हैं, यह जानना चाहिए ॥ २ ॥

**भावार्थ**—प्राणों के अन्दर आत्मा को कौनसा देव सुख देने वाला आत्मा के अङ्गों को परमात्मा की ओर जाने वाली उसकी चेतनशक्तिओं को जानता है। उसको समझना चाहिए। एवं—मेघजलों में निहित विद्युत् अग्नि की तरङ्गों को कौन वैज्ञानिक जानता है जो परमात्मदेव को दर्शाने वाली हैं। उसे भी जानना चाहिए ॥ २ ॥

**ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।**
**तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरोचमानम् ॥ ३ ॥**

ऐच्छाम । त्वा । बहुधा । जातऽवेदः । प्रऽविष्टम् । अग्ने । अप्ऽसु । ओषधीषु । तम् । त्वा । यमः । अचिकेत् । चित्रभानो इति चित्रऽभानो । दशऽअन्तरुष्यात् । अतिऽरोचमानम् ॥ ३ ॥

**संस्कृतान्वयार्थः**—( जातवेदः-अग्ने ) हे जातेन शरीरेण सह वेद्यमान ज्ञायमान आत्मन् ! जात एव वेद्यमान ज्ञायमानो वा विद्युदग्ने ! ( बहुधा-अप्सु-ओषधीषु -प्रविष्टं त्वा-ऐच्छाम ) बहुप्रकारेण मनुष्यपशुपक्षिप्रकारेण प्राणेषु—उष्णत्वधारिकासु नाडीषु प्रविष्टं गुप्तं प्राप्तं वाञ्छामः, तथा जलेषु काष्ठादिषु पदार्थेषु प्रविष्टं त्वामन्विष्य वाञ्छामः ( चित्रभानो तं त्वा यमः-अचिकेत् ) हे चायनीयं दर्शनीयं—तेजो यस्मिन् तथाभूतः ! आत्मन् विद्युदग्ने वा तं त्वां यमनकर्त्ता परमात्मा वैज्ञानिको जानाति ( दशान्तरुष्यात् -अतिरोचमानम् ) दशानामिन्द्रियाणां प्राणानां वाऽन्तरुष्णत्वात् तथा चेष्टनात्, यद्वा दशस्थानेषु पृथिव्यन्तरिक्षद्युलोकेषु—अग्निविद्युत्सूर्येषु देवेषु—अबोषधिवनस्पतिषु प्राणिशरीरे च वासात् जानातीति शेषः ॥ ३ ॥

**भाषान्वयार्थ—**( जातवेदः-अग्ने ) हे उत्पन्न शरीर के साथ जानने योग्य आत्मा, या उत्पन्न होते ही ज्ञान में आने योग्य विद्युत् ! ( बहुधा-अप्सु-ओषधीषु-प्रविष्टं त्वा-ऐच्छाम ) बहुत प्रकार से मनुष्य पशु पक्षी रूप से प्राणों में, उष्णत्व धारण करने वाली नाडियों में प्रविष्ट हुए को चाहते हैं तथा जलों में काष्ठादि पदार्थों में प्रविष्ट हुए को खोज करके चाहते हैं ( चित्रभानो तं त्वा यमः-अचिकेत् ) हे दर्शनीय तेज वाले आत्मन् ! या विद्युत् ! तुझ को यमनकर्त्ता परमात्मा या वैज्ञानिक जानता है ( दशान्तरुष्याद्-अतिरोचमानम् ) दश इन्द्रियों, प्राणों के अन्दर उष्णता से तथा चेष्टा से–क्रिया व्यवहार से या दशस्थानों में–पृथिवी, अन्तरिक्ष, द्युलोक, अग्नि, विद्युत्, सूर्य, जल, ओषधि, वनस्पति, और प्राणिशरीर में बसने से जानते हैं ॥ ३ ॥

**भावार्थ—**आत्मा शरीर के उत्पन्न होने के साथ ही जाना जाता है वह मनुष्य पशु पक्षी प्राणियों में उष्णता धारण करने वाली नाडियों में चेष्टाओं के होने से विद्यमान है। परमात्मा आत्मा का नियामक है। भिन्न–भिन्न शरीरों में जाने का इसका निमित्त बनाता है। एवं—विद्युत् प्रकट होते ही जाना जाता है। वह जलों में काष्ठादि में विद्यमान रहता है। इसे वैज्ञानिक लोग जानते हैं ॥ ३ ॥

**होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः ।**
**तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ॥ ४ ॥**

होत्रात् । अहम । वरुण । बिभ्यत् । आयम् । न । इत् । एव । मा । युनजन् । अत्र । देवाः । तस्य । मे । तन्वः । बहुधा । निऽविष्टाः । एतम् । अर्थम् । न । चिकेत । अहम् । अग्निः ॥ ४ ॥

**संस्कृतान्वयार्थः—**( वरुण ) हे वरणीय वरयितः परमात्मन् ! ( अहं होत्रात्-बिभ्यत्-आयम् ) अहं खल्वात्मा, स्वस्मिन् सर्वं यद् जुहोति गृह्णाति तस्मान्मृत्योर्भयं कुर्वन् तव ध्यानमागतवान् ( न-इत्-एव ) नैव हि ( देवाः-मा-अत्र युनजन् ) इन्द्रियाणि मामत्र स्वस्वविषये योजयन्तु ( तस्य मे बहुधा तन्वः-निविष्टाः ) तस्य–अस्य मम–आत्मनो बहुप्रकारेण चेतयित्र्यः शक्तयोन्तर्हिता आसन् ( एतम्-अर्थम्-अहम्-अग्निः-न चिकेत ) एतमभिप्रायं लक्षयित्वा-अहमात्मा न जानामि ज्ञापयामि स्वात्मानम् *"न विजानामि यदिवेदमस्मि निण्यः सन्नद्धः"* [ ऋ० १ । १६४ । ३७ ] तथा हे ( वरुण ) वरणीय वरयित देव जलाधिपते ! *"वरुणोऽयमधिपतिः"* [ तै० सं० ३ । ४ । ५ । १ ] ( अहम् ) विद्युद्रूपाग्निः, "आलङ्कारिकदृष्टयोच्यते" ( होत्रात्-बिभ्यत् ) प्रयोक्तव्ययन्त्राद् भयं कुर्वन् ( आयन् ) जलेषु–आगतवान् ( न-इत्-एव देवाः-अत्र मा युनजन् ) नैव हि वैज्ञानिकजनाः-अत्र यन्त्रे मां योजयन्तु ( तस्य मे बहुधा तन्वः-निविष्टाः ) तस्यास्य मम विद्युदग्नेस्तरङ्गाः बहुप्रकारेणात्रऽन्तर्हिताः सन्ति ( एतम्-अर्थम्-अहम्-अग्निः-न चिकेत ) एतमभिप्रायं लक्षयित्वा–अहं विद्युदग्निर्नं ज्ञापितवानात्मानम् ॥ ४ ॥

  

**भाषान्वयार्थ**—( वरुण ) हे वरणीय तथा वरने वाले परमात्मन् ! ( अहं होत्रात्-बिभ्यत्-आयम् ) मैं आत्मा, जो अपने में सबको ग्रहण कर लेता है उस मृत्यु से भय करता हुआ तेरे ध्यान को प्राप्त हुआ हूँ—तेरी शरण में आया हूँ ( न-इत्-एव ) न ही ( देवाः-मा-अत्र युनजन् ) इन्द्रियां मुझे अपने अपने विषय में जोड़े—खीचें ( तस्य मे बहुधा तन्वः-निविष्टाः ) उस इस मुझ आत्मा की बहुतेरी शक्तियां छिपी हुई हैं ( एतम्-अर्थम्-अहम्-अग्निः-न चिकेत ) इस अभिप्राय को लक्ष्य कर मैं आत्मा नहीं अपने को जना पाता हूँ। तथा—( वरुण ) हे वरने योग्य वरने वाले जल के स्वामी ! ( अहम् ) मैं विद्युत् अग्नि "यह आलङ्कारिक ढंग से वर्णन है" (होत्रात्-बिभ्यत्) प्रयोक्तव्य यन्त्र से भय करता हुआ ( आयन् ) जलों में प्राप्त हुआ हूँ ( न-इत्-एव देवाः-मा-अत्र युनजन् ) न ही वैज्ञानिक जन यहाँ यन्त्र में मुझे जोड़ें ( तस्य मे बहुधा तन्वः-निविष्टाः ) उस इस मुझ विद्युदग्नि की बहुतेरी तरङ्गें छिपी हुई हैं ( एतम्-अर्थम्-अहम्-अग्निः-न चिकेत ) इस अभिप्राय को लक्षित कर मैं अपने को नहीं जना सकती ॥ ४ ॥

**भावार्थ**—जीवात्मा को स्वभावतः मृत्यु से भय होता है। वह भय परमात्मा की शरण और उसके ध्यान बिना दूर नहीं हो सकता। उधर इन्द्रियां अपने-अपने विषय में आत्मा को खींचती हैं आत्मा की शक्तियां और भी छिपी हुई हैं जिनका विकास परमात्मा की शरण लेने पर होता है जिनसे ब्रह्मानन्द का लाभ लेता है। एवं—विद्युत् की उत्पत्ति जलों से होती है चाहे वे मेघ—जल हों या पृथिवी के जल हों। जलों का अधिपति-शक्तिकेन्द्र वरुण नाम से कहा जाता है जो जलों के सूक्ष्म कणों को ठोस रूप देता है। वैज्ञानिक लोग जल को ताड़ित करके विद्युत् बनाकर उसका यन्त्र में प्रयोग करते हैं। विद्युत् की तरङ्गों में बहुत शक्ति है उसका सदुपयोग करना चाहिए ॥४॥

**एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने ।**
**सुगान् पथः कृणुहि देवयानान् वह हव्यानि सुमनस्यमानः ॥ ५ ॥**

आ । इहि । मनुः । देवऽयुः । यज्ञऽकामः । अरम्ऽकृत्य । तमसि । क्षेषि । अग्ने ।
सुऽगान् । पथः । कृणुहि । देवऽयानान् । वह । हव्यानि । सुऽमनस्यमानः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे ! अज्ञानां नेतरात्मन् ! ( तमसि क्षेषि ) अज्ञानान्धकारे निवससि ( मनुः-देवयुः-यज्ञकामः अरङ्कृत्य-एहि ) मननशीलः सन्निन्द्रियाणि प्रति गन्ताऽध्यात्मयज्ञं कामयमानः स्वात्मानं समर्थं कृत्वा खल्वागच्छ, मृत्योर्भयं मा कार्षीः ( देवयानान् पथः सुगान् कृणुहि ) शरीरं प्राप्य हीन्द्रियमार्गान् शिवसङ्कल्पमयान् कुरु ( सुमनस्यमानः-हव्यानि वह ) सुप्रसन्नः सन् परमात्मानं प्रति स्तुतिप्रार्थनोपासनानि प्रापय। एवम् ( अग्ने ) हे यन्त्रस्याग्रणेतो विद्युदग्ने ! ( तमसि क्षेषि ) अज्ञाते प्रसङ्गे, निवससि ( मनुः-देवयुः-यज्ञकामः-अरङ्कृत्य-एहि ) मननीयो वैज्ञानिकान् प्रति गन्ता कलायज्ञे काम्यमानो वैज्ञानिकैः कार्ये समर्थः क्रियमाणः सन् यन्त्रे प्राप्नुहि ( देवयानान् पथः सुगान् कृणुहि ) वैज्ञानिकैर्निर्णीतान् मार्गान् सुष्ठुगमनयोग्यान् कुरु ( सुमनस्यमानः-हव्यानि वह ) सुविकसितः सन् प्राप्तव्यानि वस्तूनि प्रापय ॥ ५ ॥

भाषान्वयार्थ—( अग्ने ) हे अङ्गों के नेता आत्मन् ( तमसि क्षेषि ) तू अज्ञानान्धकार में निवास करता है ( मनुः-देवयुः-यज्ञकामः-अरङ्कृत्य-एहि ) मननशील हो इन्द्रियों की ओर जाने वाला अध्यात्मयज्ञ को चाहता हुआ अपने को समर्थ करके आ, मृत्यु से मत डर ( देवयानान् पथः सुगान् कृणुहि ) शरीर को प्राप्त करके इन्द्रियमार्गों को शिवसङ्कल्प वाले बना ( सुमनस्यमानः-हव्यानि वह ) सुप्रसन्न हुआ परमात्मा के प्रति स्तुति प्रार्थना उपासनाओं को प्रेरित कर। एवम् ( अग्ने ) हे यन्त्र के अग्रणेता विद्युत् अग्नि ! ( तमसि क्षेषि ) अज्ञात प्रसङ्ग में रहती है ( मनुः-देवयुः-यज्ञकामः-अरङ्कृत्य-एहि ) तू मननीय, वैज्ञानिकों के प्रति जानेवाला कलायज्ञ में कमनीय उनके कार्य में समर्थ क्रिया यन्त्र में प्राप्त हो ( देवयानान्-पथः सुगान् कृणुहि ) वैज्ञानिकों के निर्णीत मार्गों को अच्छे गमन योग्य कर ( सुमनस्यमानः-हव्यानि वह ) सुविकसित हुआ प्राप्तव्य वस्तुओं को प्राप्त करा ॥ ५ ॥

भावार्थ—आत्मा समस्त अङ्गों का नेता है इन्द्रियों के विषयों में पड़कर मृत्यु से भय करता है परन्तु शिवसङ्कल्प बना कर आत्मबल प्राप्त कर और परमात्मा की स्तुति प्रार्थना उपासना करता हुआ मृत्यु से भय का अवसर नहीं है। एवं विद्युदग्नि यन्त्र का चालक बने बिना प्रयोग के अन्धेरे में पड़ी जैसी है वैज्ञानिकों द्वारा यन्त्र में प्रयुक्त होकर बलवान् बनती है यन्त्र द्वारा विविध लाभ पहुंचाता हुआ सफल तथा स्थिर रहता है ॥ ५ ॥

**अ॒ग्नेः पूर्वे॒ भ्रात॑रो॒ अर्थ॑मे॒तं र॒थीवाध्वा॑न॒मन्वाव॑रीवुः ।**
**तस्मा॑द्भि॒या व॑रुण दू॒रमा॑यं गौ॒रो न क्षे॒प्नोर॑विजे॒ ज्याया॑ः ॥ ६ ॥**

अ॒ग्नेः । पूर्वे॑ । भ्रात॑रः । अर्थ॑म् । ए॒तम् । र॒थीऽइव । अध्वा॑नम् । अनु॑ । आ । अ॒व॒री॒वु॒रिति॑ । तस्मा॑त् । भि॒या । व॒रु॒ण॒ । दू॒रम् । आ॒य॒म् । गौ॒रः । न । क्षे॒प्नोः । अ॒वि॒जे॒ । ज्याया॑ः ॥ ६ ॥

संस्कृतान्वयार्थः—( वरुण ) हे परमात्मन् ! ( अग्नेः पूर्वे भ्रातरः ) अङ्गानां नायकस्यात्मनो मम पूर्वे सजातयो मम सदृशा आत्मानः ( एतम् अर्थम् ) इममर्थनीयं देहम् ( रथी-इव-अध्वानम्-अनु-आवरीवुः ) रथवान् यथा मार्गमावृणोति तद्वद्-देहं भृशमावृणवन्तिस्म ते मृताः ( तस्मात्-भिया ) तस्मात्मृत्योर्भयेन ( दूरम्-आयम् ) दूरमन्तर्हितं गच्छामि ( गौरः-न क्षेप्नोः-ज्यायाः-अविजे ) यथा गौरो मृगो ज्यातो वाणप्रक्षेप्तुर्भयात् पलायते तद्वदहमात्मा भयादन्तर्हितो भवामि। एवं ( वरुण ) जलाधिपतेः ( अग्नेः पूर्वे भ्रातरः ) मम विद्युद्रूपाग्नेः सजातयो सूर्यरश्मयः ( एतम्-अर्थम् ) एतं यन्त्रविशेषम् (रथी-इव-अध्वानम्-अनु-आवरीवुः ) रथवान् यथा मार्गं भृशमावृणोति तद्वद्, यन्त्रविशेषमावृणवन्तो विनष्टाः पुनरहमपि विनष्टो भविष्यामि ( तस्मात्-भिया ) तस्माद्विनाशभयेन ( दूरम्-आयम् ) दूरं गच्छामि न यन्त्रे प्रविशामि ( गौरः-न ज्यायाः क्षेप्नोः-अविजे ) पूर्ववत् ॥ ६ ॥

अप॑ । अमी॑वाम् । अप॑ । विश्वा॑म् । अना॑हुतिम् । अप॑ । अरा॑तिम् । दुःऽवि॒दत्रा॑म् । अघऽयतः । आरे । दे॒वाः । द्वेषः॑ । अ॒स्मत् । यु॒यो॒त॒न॒ । उ॒रु । नः॒ । शर्म॑ । य॒च्छ॒त॒ । स्व॒स्तये॑ ॥ १२ ॥

**संस्कृतान्वयार्थः**—(देवाः) हे विद्वांसः ! (विश्वाम्) सर्वाम् (अमीवाम्) रोगस्थितिम् (अप०) दूरं प्रेरयत (अनाहुतिम्-अप०) अप्रार्थनां दूरं कुरुत (अरातिम्-अप०) अदानभावनां दूरं क्षिपत (दुर्विदत्राम्-अप०) दुष्टानुभूति भ्रान्ति दूरं प्रक्षिपत (अघायतः) पापमिच्छतः शत्रून् दूरं क्षिपत (द्वेषः-अस्मत्-आरे युयोतन) द्वेषभावान्-अस्मत्तो दूरे प्रेरयत (नः-उरु शर्म स्वस्तये यच्छत) अस्मभ्यं महत् सुखं कल्याणाय प्रयच्छत ॥ १२ ॥

**भाषान्वयार्थ**—(देवाः) हे विद्वानो ! (विश्वाम्) सब (अमीवाम्) रोगस्थिति को (अप) दूर करो (अनाहुतिम्-अप) अप्रार्थना-नास्तिकता को दूर करो (अरातिम्-अप) अदानभावना को दूर करो (दुर्विदत्राम्-अप) दुष्टानुभूति-भ्रान्ति को दूर करो (अघायतः) हमारे प्रति पाप चाहने वाले शत्रुओं को दूर करो (द्वेषः-अस्मत्-आरे युयोतन) द्वेषभाव को हमसे दूर करो (नः-उरु शर्म स्वस्तये यच्छत) हमारे लिए-हमें बड़ा सुख कल्याणार्थ प्रदान करो ॥ १२ ॥

**भावार्थ**—विद्वानों से आत्मिक मानसिक शारीरिक दोषों को दूर करने के लिए नम्र प्रार्थना करनी चाहिए जिससे सब प्रकार की सुख शान्ति और निरोगता प्राप्त हो सके ॥ १२ ॥

**अरि॑ष्टः॒ स मर्तो॒ विश्व॑ एधते॒ प्र प्र॒जाभि॒र्जा॑यते॒ धर्म॑ण॒स्परि॑ ।**
**यमा॑दित्यासो॒ नय॑था सु॒नीति॒भि॒रति॒ विश्वा॑नि दु॒रि॒ता स्व॒स्तये॑ ॥ १३ ॥**

अरि॑ष्टः । सः । मर्तः॑ । विश्वः॑ । ए॒ध॒ते॒ । प्र । प्र॒ऽजाभिः॑ । जा॒य॒ते॒ । धर्म॑णः । परि॑ । यम् । आ॒दि॒त्या॒सः॒ । नय॑थ । सु॒नी॒तिऽभिः॑ । अति॑ । विश्वा॑नि । दुः॒ऽइ॒ता । स्व॒स्तये॑ ॥ १३ ॥

**संस्कृतान्वयार्थः**—(आदित्यासः) हे अखण्डितज्ञान-ब्रह्मचर्यवन्तो विद्वांसः ! (यं सुनीतिभिः) यं जनं शोभन नयन क्रियाभिः-सदाचरण शिक्षाभिः (विश्वानि दुरिता-अति) सर्वाणि पापानि खल्वतिक्राम्य (स्वस्तये नयथ) कल्याणाय नयथ (सः-विश्वः-मर्तः-अरिष्टः-प्र-एधते) स सकलो जनोऽपीडितः सन् प्रवर्धते (प्रजाभिः-धर्मणः-परि जायते) पुत्रादिभिः गुणेऽधिष्ठितः "पञ्चम्याः परावध्यर्थे [ अष्टा० ८ । ३ । ५ ] सञ्जायते प्रसिद्ध्यति ॥ १३ ॥

**भाषान्वयार्थ**—(आदित्यासः) हे अखण्ड ज्ञान ब्रह्मचर्य वाले विद्वानो ! (यं सुनीतिभिः) तुम जिस मनुष्य को शोभन नयन क्रियाओं द्वारा तथा सदाचरण शिक्षाओं द्वारा (विश्वानि दुरिता अति) सब पापों को अतिक्रमण कराकर (स्वस्तये नयथ) कल्याण के लिए ले जाते हो (सः-

विश्वः-मर्तः-अरिष्टः-प्र-एधते ) वह सकल मनुष्य अपीडित होता हुआ बढ़ता है ( प्रजाभिः-धर्मणः परि जायते ) पुत्रादियों द्वारा गुण में अधिष्ठित हुआ प्रसिद्ध होता है ॥ १३ ॥

भावार्थ—अखण्ड ज्ञान ब्रह्मचर्य वाले विद्वानों के उपदेश व बताये हुए सदाचरण में जो मनुष्य रहता है वह पाप से वचकर स्वस्थ रहता है और सन्तानों का सुख प्राप्त करता है ॥ १३ ॥

**यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।**
**प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ॥ १४ ॥**

यम् । देवासः । अवथ । वाजऽसातौ । यम् । शूरऽसाता । मरुतः । हिते । धने । प्रातःऽयावानम् । रथम् । इन्द्र । सानसिम् । अरिष्यन्तम् । आ । रुहेम । स्वस्तये ॥ १४ ॥

संस्कृतान्वयार्थः—( मरुतः-देवासः ) हे जीवन्मुक्ता विद्वांसः ! "मरुतो ह वै देवविशः" [ कौ० ७ । ८ ] ( यं वाजसातौ ) यममृतभोगप्राप्तौ "अमृतोऽन्नं वै वाजः" [ जै० २ । १६३ ] ( यं शूरसाता ) यं पापहिंसनप्राप्तौ ( हिते धने ) हितकरेऽध्यात्मधन निमित्ते ( अवथ ) रक्षथ ( इन्द्र ) हे परमात्मन् ! ( प्रातर्यावाणं रथम् ) जीवनस्य प्रातर्ब्रह्मचर्येण गमनशक्तिमन्तं रमणीयम् ( सानसिम् ) शाश्वतं सुखरूपम् "सानसिं पुराणम्" [ यजु० १२ । ११० दयानन्दः ] ( अरिष्यन्तम् ) हिंसादोषरहितम् ( स्वस्तये-आरुहेम ) कल्याणाय समन्तात् प्राप्नुयाम ॥ १४ ॥

भाषान्वयार्थ—( मरुतः-देवासः ) हे जीवन्मुक्त विद्वानो ! ( यं वाजसातौ ) जिसको अमृत भोग प्राप्ति के निमित्त ( यं शूरसाता ) जिसको पापनाशनार्थं प्राप्ति के हेतु ( हिते धने ) हितकर अध्यात्म धन के निमित्त ( अवथ ) सुरक्षित रखते हो (इन्द्र) हे परमात्मन् ! ( प्रातर्यावाण रथम् ) जीवन के प्रातः अर्थात् ब्रह्मचर्य से चलने की शक्ति वाले रमणीय ( सानसिम् ) शाश्वत सुखरूप-( अरिष्यन्तम् ) हिंसित न होने वाले मोक्षधाम को ( स्वस्तये-आरुहेम ) कल्याण के लिए आरोहण करें-प्राप्त होवें ॥ १४ ॥

भावार्थ—जीवन्मुक्त विद्वानों के सङ्ग से अमृत अन्न भोग प्राप्ति और पापरहित शुद्ध वृत्ति सम्पादन के लिए उपदेश ग्रहण करना चाहिए। उससे परमात्मा पूर्ण ब्रह्मचर्य से सम्पन्न को मुक्ति सुख प्रदान करता है ॥ १४॥

**स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।**
**स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ १५ ॥**

स्वस्ति । नः । पथ्यासु । धन्वऽसु । स्वस्ति । अप्ऽसु । वृजने । स्वःऽवति । स्वस्ति । नः । पुत्रऽकृथेषु । योनिषु । स्वस्ति । राये । मरुतः । दधातन ॥ १५ ॥

**संस्कृतान्वयार्थः**—( मरुतः ) हे जीवन्मुक्ता विद्वांसः ! ( नः स्वस्ति पथ्यासु धन्वसु ) अस्मभ्यं स्वस्ति पथिभवासु मरुप्रदेशेषु भवतु ( स्वस्ति-अप्सु ) जलप्रदेशेषु जलेषु वा स्वस्ति भवतु (स्वर्वति वृजने ) सुखवति सर्वं दुःखवर्जिते मोक्षे स्वस्ति भवतु ( स्वस्ति नः पुत्रकृथेषु योनिषु ) कल्याणं सन्तानकर्मसु गृहेषु भवतु ( स्वस्ति राये दधातन ) कल्याणं धनाय धारयत ॥ १५ ॥

**भाषान्वयार्थ**—( मरुतः ) हे जीवनमुक्त विद्वानो ! ( नः स्वस्ति पथ्यासु धन्वसु ) हमारे लिए स्वस्ति-कल्याण हो मार्ग में आने वाले मरु प्रदेशों में ( स्वस्ति-अप्सु ) जलप्रदेशों में कल्याण हो ( स्वर्वति वृजने ) सुखवाले दुःखवर्जित मोक्ष में कल्याण हो ( पुत्रकृथेषु योनिषु नः स्वस्ति ) सन्तान कर्मों में और गृहों में कल्याण हो ( स्वस्ति राये दधातन ) धन प्राप्त करने में कल्याण हो ॥ १५ ॥

**भावार्थ**—जीवन्मुक्त विद्वानों के शिक्षण से अपने मार्गों में आये मरुस्थलों, जलस्थलों, सन्तानोत्पत्ति वाले गृहस्थलों, धन प्रसङ्गों, दुःखरहित मोक्षों को सुखमय बनाना चाहिए ॥ १५ ॥

**स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।**
**सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ १६ ॥**

स्वस्तिः । इत् । हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामम् । एति । सा । नः । अमा । सो इति । अरणे । नि । पातु । सुऽआवेशा । भवतु । देवऽगोपा ॥ १६ ॥

**संस्कृतान्वयार्थः**—( स्वस्तिः-इत्-हि ) स्वस्तिः कल्याणभावना खल्वेव ( प्रपथे ) पथाग्रे ( श्रेष्ठा ) श्रेष्ठरूपा ( रेक्णस्वती ) धनधान्यवती ( या वामम-अभ्येति ) या वनयितारं सम्भजयितारं प्राप्नोति ( सा नः ) साऽस्मान् ( अमा ) गृहे "अमा गृहनाम" [ निघ० ३ । ४ ] ( सा नु-अरणे ) साहि अरण्ये ( नि पातु ) निरन्तरं रक्षतु ( देवगोपा स्वावेशा भवतु ) देवैर्विद्वद्भी रक्षिता शोभनावेशयित्री भवतु ॥ १६ ॥

**भाषान्वयार्थ**—( स्वस्तिः-इत्-हि ) कल्याण भावना ही ( प्रपथे ) पथाग्र-मार्ग के प्रारम्भ में ( श्रेष्ठा ) श्रेष्ठरूप ( रेक्णस्वती ) धनधान्य वाली ( या वामम्-अभ्येति ) जो सेवन करने वालों को प्राप्त होती है ( सा नः ) वह हमें ( अमा ) घर में ( सा नु-अरणे ) वह ही जगंल में ( नि पातु ) निरन्तर रक्षा करे ( देवगोपा स्वावेशा भवतु ) विद्वानों द्वारा सुरक्षित शोभन प्रवेश वाली होवे ॥ १६ ॥

**भावार्थ**—विद्वानों द्वारा कल्याण भावना तथा रक्षा जीवन के प्रारम्भिक मार्ग पर, घर में अथवा जंगल में हमें सदा प्राप्त होती रहे, ऐसा सदा यत्न करना चाहिए ॥ १६ ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

संस्कृतान्वयार्थः—( विश्वे-आदित्याः ) हे सर्वविषयेषु प्रविष्टा अखण्डित ज्ञान-ब्रह्मचर्यकाः परमर्षयः ( अदिते ) अदितये–अखण्डसुखसम्पत्तये व्यत्ययेन सम्बुद्धि ( वः ) युष्मान् ( प्लतेः सूनुः ) संसारसागरस्य पारयितुरध्यात्मयज्ञस्य 'प्लु गतौ' [ भ्वादि० ] 'ततो डतिर्बाहुलकादौणादिकः' प्रेरयिता ( मनीषी ) प्रज्ञावान् ( अवीवृधत् ) वर्धयति प्रशंसति ( ईशानासः-नरः ) यूयं ज्ञानस्वामिनो जीवनमुक्ताः ( अमर्त्येन गयेन ) मरण-धर्मरहितेन सर्वाश्रयेण प्राणरूपेण परमात्मना ( दिव्यः-जनः ) दिव्याः-मनुष्याः-ऋषयः 'एकवचनं व्यत्ययेन बहुवचने' ( अस्तावि ) वेदज्ञानं दत्त्वा प्रशंसिताः ॥ १७ ॥

भाषान्वयार्थ—( विश्वे-आदित्याः ) हे सब विषयों में प्रविष्ट अखण्ड ज्ञान ब्रह्मचर्यसम्पन्न परम ऋषियो ! ( अदिते ) अखण्ड सुखसम्पत्ति के लिए ( वः ) तुम्हें ( प्लतेः सूनुः ) संसार सागर को पार कराने वाले अध्यात्मयज्ञ का प्रेरक ( मनीषी ) प्रज्ञा वाला ( अवीवृधत् ) बढ़ाता है, प्रशंसा करता है ( ईशानासः-नरः ) तुम ज्ञान के स्वामी जीवन्मुक्त ( अमर्त्येन गयेन ) मरण धर्म रहित सब के आश्रय प्राणरूप परमात्मा ने ( दिव्यः-जनः ) दिव्य मनुष्य-ऋषि जन (अस्तावि) वेदज्ञान देकर प्रशंसित किये हैं ॥ १७ ॥

भावार्थ—अखण्डित ज्ञान और ब्रह्मचर्य से सम्पन्न, सब विषयों में निष्णात, जीवन्मुक्त, संसार सागर से पार होने और अन्यों को विद्या सम्पन्न बनाने के लिए सर्वज्ञ परमात्मा के द्वारा या उससे प्रेरित संसार में पदार्पण करते हैं ॥ १७ ॥



# चतुःषष्टितमं सूक्तम्

ऋषिः—गयः प्लातः ।

देवता—विश्वेदेवाः ।

छन्दः—१, ४, ५, ९, १०, १३, १५ निचृज्जगती । २, ३, ७, ८, ११ विराड् जगती । ६, १४ जगती । १२ त्रिष्टुप् । १६ निचृत् त्रिष्टुप् । १७ पादनिचृत् त्रिष्टुप् ॥

विषयः—अत्र सूक्ते स्वकीय भावनानां विद्वत्सङ्गत्या विकासो रश्मि-लाभो, जीवन्मुक्तेभ्योऽध्ययनं परमात्मोपासनया मोक्ष-प्राप्तिश्चेत्येवमाद्यो विषयाः सन्ति ।

इस सूक्त में अपनी भावनाओं का विद्वानों की सङ्गति से विकास, सूर्य किरणों से लाभ, जीवन्मुक्तों से अध्ययन, परमात्मा की उपासना से मोक्षप्राप्ति आदि विषय हैं ॥

कथा देवानां कतमस्य यामनि सुमन्तु नाम शृण्वतां मनामहे ।
को मृळाति कतमो नो मयस्करत्कतम ऊती अभ्या ववर्तति ॥ १ ॥

कथा । देवानाम् । कतमस्य । यामनि । सुऽमन्तु । नाम । शृण्वताम् । मनामहे । कः । मृळाति । कतमः । नः । मयः । करत् । कतमः । ऊती । अभि । आ । ववर्तति ॥ १ ॥

**संस्कृतान्वयार्थः**—( यामनि ) संसारयात्रायां जीवनमार्गे वा ( शृण्वतां देवानाम् ) अस्माकं प्रार्थनां शृण्वतां देवानां मध्ये ( कतमस्य कथा सुमन्तु नाम मनामहे ) कतमस्य कथं सुमन्तव्यं नाम मन्यामहे स्मरामः (कः-नः-मृळाति) कः खलु-अस्मभ्यमभीष्टं ददाति "मृळाति दानकर्मा" [ निरु० १० । १६ ] ( कतमः-मयः-करत् ) कतमः सुखं करोति ( कतमः-ऊती-अभ्याववर्तति ) कतमः-रक्षायै पुनः पुनः कल्याणसाधनायै-अस्मान् प्रतिवर्तते ॥ १ ॥

**भाषान्वयार्थ**—( यामनि ) संसार यात्रा में या जीवनमार्ग में ( शृण्वतां देवानाम् ) हमारी प्रार्थना को सुनने वाले देवों के मध्य ( कतमस्य कथा सुमन्तु नाम मनामहे ) कौनसे तथा कैसे सुमन्तव्य नाम को हम मानें-स्मरण करें ( कः-नः-मृळाति ) कौन हमें सुखी करता है

( कतमः-मयः-करत् ) कौन सुख देता है ( कतमःऊती अभ्यावववर्तति ) कौन रक्षा के लिए पुनः पुनः कल्याण साधने के लिए हमारे प्रति बरतता है ॥ १ ॥

भावार्थ—मनुष्य को यह विचार करना चाहिए कि इस संसार यात्रा में या जीवनयात्रा में सच्चा साथी कौन है। कौन देव मानने और स्मरण करने योग्य है। कौन सुख पहुंचाता है। कौन हमारा सच्चा रक्षक है तथा जीवन को सहारा देता है। ऐसा विवेचन करके जो इष्टदेव परमात्मा सिद्ध होता है उसकी शरण लेनी चाहिए ॥ १ ॥

क्रतूयन्ति क्रतवो हृत्सु धीतयो वेनन्ति वेनाः पतयन्त्या दिशः ।
न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधिकामा अयंसत ॥ २ ॥

क्रतुऽयन्ति । क्रतवः । हृत्ऽसु । धीतयः । वेनन्ति । वेनाः । पतयन्ति । आ । दिशः । न । मर्डिता । विद्यते । अन्यः । एभ्यः । देवेषु । मे । अधि । कामाः । अयंसत ॥ २ ॥

संस्कृतान्वयार्थः—(हृत्सु) मनः प्रभृतिषु वर्तमानाः (क्रतवः-क्रतूयन्ति) सङ्कल्पाः सङ्कल्पयन्ति (धीतयः) प्रज्ञाः "धीतिः प्रज्ञा" [ निरु० १० । ४० ] (वेनाः-वेनन्ति) कामनाः कामयन्ते ( दिशः-आपतयन्ति ) देशनाः–उद्देशप्रवृत्तयः समन्ताद् प्रवर्तन्ते ( एभ्यः-अन्यः-मर्डिता न विद्यते ) एभ्यो देवेभ्योऽन्योन सुखयिता विद्यते ( देवेषु मे कामाः-अयंसत ) विद्वत्सु मम कामाः–आश्रिताः सन्ति ॥ २ ॥

भाषान्वयार्थ—( हृत्सु ) हृदयों में-मन आदि के अन्दर ( क्रतवः-क्रतूयन्ति ) सङ्कल्पधारायें सङ्कल्प विकल्प करती हैं ( धीतयः ) बुद्धियां ( वेनाः-वेनन्ति ) कामनाधारायें विविध कामनायें करती हैं ( दिशः-आपतयन्ति ) उद्देश्यप्रवृत्तियां समन्तरूप से प्रवृत्त होती रहती हैं ( एभ्यः-अन्यः-मर्डिता न विद्यते ) इन देवों से अन्य सुखी करने वाला कोई नहीं है ( देवेषु मे कामाः-अयंसत ) विद्वानों में मेरी कामनाएं आश्रित हैं ॥ २ ॥

भावार्थ—मनुष्यों के अन्दर कुछ भावनात्मक शक्तियां काम करती रहती हैं। जैसे मन आदि के अन्दर सङ्कल्पधारायें उठती हैं। कामनाएं जैसे प्रवृत्त होती रहती हैं, नाना प्रकार की बुद्धियां भी चलती हैं अनेक उद्देश दिशाएं भी उभरती रहती हैं। यद्यपि ये सब मनुष्य के सुख साधन के लिए होती हैं फिर भी विद्वानों की सङ्गति से उनको और अधिक उत्कृष्ट बनाना चाहिए जिससे वे अधिक सुखदायी बनें ॥ २ ॥

नरा वा शंसं पूषणमगोह्यमग्निं देवेद्धमभ्यर्चसे गिरा ।
सूर्यामासा चन्द्रमसा यमं दिवि त्रितं वातमुषसमक्तुमश्विना ॥ ३ ॥

नराशंसम् । वा । पूषणम् । अगोह्यम् । अग्निम् । देवऽइद्धम् । अभि । अर्चसे । गिरा । सूर्यामासा । चन्द्रमसा । यमम् । दिवि । त्रितम् । वातम् । उषसम् । अक्तुम् । अश्विना ॥ ३ ॥

  

**संस्कृतान्वयार्थः**—( वा ) अथ च ( नराशंसम् ) नरैर्मनुष्यैः प्रशंसनीयम् ( पूषणम् ) पोषयितारम् ( अगोह्यम्-अग्निम् ) प्रत्यक्षीकरणीयमग्निरूपं परमात्मानम् ( देवेद्धम् ) देवैर्विद्वद्भिः स्वान्तरात्मनि साक्षात्करणीयं परमात्मानम् ( गिरा-अभ्यर्चसे ) स्तुत्या खल्वभिष्टुहि ( सूर्यामासा चन्द्रमसा ) सूर्याचन्द्रमसौ-सूर्यचन्द्रौ-सूर्यचन्द्राविव ज्ञानप्रकाशस्नेहप्रसारकं तं परमात्मानम् ( यमम् ) जगन्नियन्तारम् ( दिवि त्रितम् ) मोक्ष-धाम्नि वर्तमानं त्रिषु लोकेषु ततं व्यापकम् ( वातम् ) वात इव जीवनप्रदस्तम् ( उषसम्-अक्तुम् ) जागृतिप्रदं स्नेहप्रदं परमात्मानम् ( अश्विना ) ज्योतिर्मयमानन्दरसमयं च पूजय ॥ ३ ॥

**भाषान्वयार्थ**—(वा) और (नराशंसम्) मनुष्यों द्वारा प्रशंसनीय-(पूषणम्) पोषण करने वाले-( अगोह्यम्-अग्निम् ) प्रत्यक्ष करने योग्य अग्निरूप-( देवेद्धम् ) देवों-विद्वानों द्वारा साक्षात् करने योग्यपरमात्मा को ( गिरा-अभ्यर्चसे ) स्तुति के द्वारा पूजित कर ( सूर्यमासा चन्द्रमसा ) सूर्य और चन्द्रमारूप ज्ञानप्रकाशक और स्नेहप्रसारक-( यमम् ) जगन्नियन्ता परमात्मा को ( दिवि त्रितम् ) मोक्षधाम में वर्तमान तथा तीनों लोकों में व्यापक-( वातम् ) वायु के समान जीवनप्रद उषसम्-अक्तुम् ) जागृतिप्रद और स्नेहप्रद-( अश्विना ) ज्योतिर्मय और आनन्दरसमय परमात्मा को पूजित कर ॥ ३ ॥

**भावार्थ**—परमात्मा समस्त देवों के गुणों से युक्त है वह मनुष्यों तथा ऋषियों द्वारा स्तुति करने योग्य और साक्षात् करने योग्य है ॥ ३ ॥

**कथा कविस्तुवीरवान् कया गिरा बृहस्पतिर्वावृधते सुवृक्तिभिः ।**
**अज एकपात्सुहवेभिर्ऋक्वभिरहिः शृणोतु बुध्न्यो हवीमनि ॥ ४ ॥**

कथा । कविः । तुविऽरवान् । कया । गिरा । बृहस्पतिः । ववृधते । सुवृक्तिऽभिः । अजः । एकऽपात् । सुऽहवेभिः । ऋक्वऽभिः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ॥ ४ ॥

**संस्कृतान्वयार्थः**—( तुवीरवान् कविः ) बहुज्ञानवतः स्वामी "तुवि बहुनाम" [ निघ० ३ । १ ] बहूनि ज्ञानानि विद्यन्ते यस्मिन् स वेदस्तद्वान् क्रान्तदर्शी सर्वज्ञः ( बृहस्पतिः ) परमात्मा ( कथा ) कथम् ( कया गिरा ) कया वाचा "गीर्वाङ्नाम" [ निघ० १ । ११ ] ( सुवृक्तिभिः ) सुस्तुतिभिः "सुवृक्तिभि-शोभनाभिः स्तुतिभिः" [ निरु० २ । २४ ] ( वावृधते ) स्तोतुरात्मनि भृशंवर्धते साक्षाद् भवति ( अजः-एकपात् ) स खलु जगत्येक एव स्वगुणैः प्राप्तो भवति ( अहिः-बुध्न्यः ) अहन्तव्यनियमः बोधव्यः ( सुहवेभिः-ऋक्वभिः ) शोभनह्वानैः-ऋक्स्तोत्रैः ( हवीमनि ) ह्वानप्रसङ्गे ( शृणोतु ) शृणुयात् ॥ ४ ॥

**भाषान्वयार्थ**—( तुवीरवान् कविः ) बहुत ज्ञानाधिकरण वेदवाला सर्वज्ञ क्रान्तदर्शी ( बृहस्पतिः ) परमात्मा ( कथा ) कैसे (कयागिरा) किस वाणी से ( सुवृक्तिभिः ) शोभन स्तुतियों

के द्वारा ( वावृधते ) स्तोता के आत्मा में भलीभांति बढता है-साक्षात् होता है ( अजः-एकपात् ) वह जगत् में एक अकेला ही अपने गुणों से प्राप्त होने वाला है ( अहिः-बुध्न्यः ) अहिंसित नियमों वाला बोधन करने योग्य है ( सुहवेभिः-ऋक्वभिः ) सुन्दर हाव-भावों से, ऋचारूप स्तोत्रों से ( हवीमनि ) ह्वान-प्रार्थना प्रसङ्ग में ( शृणोतु ) वह सुने ॥ ४ ॥

भावार्थ—वेदज्ञान का स्वामी परमात्मा स्तुति प्रार्थनाओं द्वारा जब स्तुत किया जाता है तो वह किसी न किसी प्रकार स्तोता के अन्तरात्मा में साक्षात् होता है और वेदोक्त स्तुति प्रार्थनाओं को अवश्य स्वीकार करता है ॥ ४ ॥

**दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।**
**अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥ ५ ॥**

दक्षस्य । वा । अदिते । जन्मनि । व्रते । राजाना । मित्रावरुणा । आ । विवाससि । अतूर्तऽपन्थाः । पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥ ५ ॥

**संस्कृतान्वयार्थः**—( अदिते ) हे अनश्वर परमात्मन् ! ( दक्षस्य ) दक्ष्यन्ते समृद्ध्यन्ते यस्मै पदार्थाः स आत्मा तस्य "अथ यदस्मै तत्समृद्ध्यते स दक्षः" [ श० ४ । १ । ४ । १ ] ( जन्मनि व्रते ) जन्मनि कर्मणि ( राजाना मित्रावरुणा ) शरीरे वर्तमानौ प्राणापानौ "प्राणापानौ वै मित्रावरुणौ" [ काठ० २६ । १ ] ( विवाससि ) विशिष्टतया वासयसि प्रकटयसि ( अतूर्तपन्थाः ) य आत्मा अत्वरणपन्थाः-गम्भीरमार्गकः ( पुरुरथः ) बहुरमणसाधनः ( अर्यमा ) शरीरस्य स्वामी ( सप्तहोता ) सप्ताः सृप्ताः सर्पणशीलाः प्राणा यस्य तथाभूतः ( विषुरूपेषु जन्मसु ) भिन्न भिन्नरूपेषु जन्मसु प्रवर्तमानोऽस्तीत्याध्यात्मम् ।

अथ दैवतम्—( अदिते ) हे प्रातस्तनि-उषो देवते ! ( दक्षस्य जन्मनि ) स्वजन्मनि सूर्यस्य जन्मनि वा ( व्रते ) कर्मणि ( राजाना मित्रावरुणा ) राजमानौ-अहोरात्रौ "अहोरात्रौ मित्रावरुणौ" [ तां २५ । १० । १० ] ( विवाससि ) परिचरसि सेवसे ( अतूर्तपन्थाः ) अत्वरमाणपन्थाः-एकरसमार्गकोऽतिचालित मार्गक ( पुरुरथः ) बहूनां रमणस्थानः ( अर्यमा ) आदित्यः "अर्यमाऽऽदित्यः" [ निरु० ११ । २३ ] ( सप्तहोता ) सप्तवर्णका रश्मयो यस्य रसाहरणशीलाः सः ( विषुरूपेषु जन्मसु ) विषुरूपेषु खलु कर्मसूदयेषु "विषमरूपेषु जन्मसु कर्मसूदयेषु" [ निरु० ११ । २३ ] दृश्यते ॥ ५ ॥

**भाषान्वयार्थ**—( अदिते ) हे अनश्वर परमात्मन् ! ( दक्षस्य ) संसार के भोगपदार्थ जिसके लिए समृद्ध-सम्पन्न किये जाते हैं उस आत्मा के ( जन्मनि व्रते ) जन्मरूप कर्म में-जन्म होने पर ( राजाना मित्रावरुणा ) शरीर में वर्तमान प्राण और अपानों को ( विवाससि ) विशिष्टतया प्रकट करता है- अपनाता है ( अतूर्तपन्थाः ) जो आत्मा तुरन्त शरीर में चेतना मार्ग फैलाने वाला है ( पुरुरथः ) बहुत रमण साधन मन वाला (अर्यमा ) शरीर का स्वामी ( सप्तहोता ) सर्पणशील

प्राणों वाला ( विपुरूपेषु जन्मसु ) भिन्न-भिन्न रूपों वाले जन्मों में-योनियों में प्रवर्तमान होता है यह आध्यात्मिक अर्थ है।

**आधिदैविक दृष्टि से—**

( अदिते ) हे प्रातः प्रकट होने वाली उषा देवता ! ( दक्षस्य जन्मनि ) अपने जन्म-उदय के अवसर पर या सूर्य के जन्म-उदय के अवसर पर ( व्रते ) कर्म में ( राजाना मित्रावरुणा ) राज-मान-प्रकट हुए दोनों दिन-रातों को ( विवाससि ) साथ सेवन करती है ( अतूर्तपन्थाः ) एकरस मार्गवाला अविचलित ( पुरुरथः ) बहुत रमणस्थान वाला-प्रायः सर्वत्र आकाश में रमण करने वाला ( सप्तहोता ) सात रंग की किरणों वाला ( अर्यमा ) सूर्य ( विपुरूपेषु जन्मसु ) विषमरूप उदयप्रसङ्गों में वर्तमान रहता है ॥ ५ ॥

**भावार्थ**—परमात्मा के नियमानुसार कर्मफल भोगने के लिए सृष्टि के भोग्य पदार्थ चेतन तत्व जीवात्मा के लिए हैं उनके भोगार्थ वह देहधारण करता है। देह में प्रथम श्वास प्रश्वास का प्रचालन करता है जिससे उसकी प्रतीति होती है। वह भिन्न-भिन्न विषयों में रमण साधन मन से युक्त होता है तथा समस्त शरीर में अपनी चेतना का प्रसार प्राणों द्वारा करता है। वह शरीर का स्वामी भिन्न-भिन्न योनियों में जन्म पाता है।

आकाश में जब उषा-पीतिमा रात्रि के पश्चात् प्रकट होती है और सूर्य उदय होने को होता है तो दिनरात युगलरूप में उनसे सङ्गत हुए प्रतीत होते हैं। सूर्य अपनी सात रंग की किरणों से आकाशमण्डल में प्रकाश फैलाता है और प्रतिदिन भिन्न-भिन्न स्थितियों में उदय होता रहता है ॥ ५ ॥

**ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।**
**सहस्रसा मेधसाताविव त्मना महो ये धनं समिथेषु जभ्रिरे ॥ ६ ॥**

ते । नः । अर्वन्तः । हवनऽश्रुतः हवम् । विश्वे । शृण्वन्तु । वाजिनः । मितऽद्रवः ।
सहस्रऽसाः । मेधसातौऽइव । त्मना । महः । ये । धनम् । समऽइथेषु । जभ्रिरे ॥६॥

**संस्कृतान्वयार्थः**—( ते-अर्वन्तः ) ते खलु विद्वांसः-उच्चविज्ञानवन्तः "अर्वन्तः प्रशस्तविज्ञानवन्तः" [ यजु० १५ । ४२ दयानन्दः ] "ऋ गतौ" [ भ्वादिः ] 'ततो विच् छान्दसः', अर् विद्या तद्वन्तः ( हवनश्रुतः ) ये ह्वानं प्रार्थनावचनं शृण्वन्ति स्वीकुर्वन्ति ( ते वाजिनः-मितद्रवः ) ते-आत्मबलवन्तः शास्त्रप्रमिताचरणवन्तः "मितद्रः-यो मितं शास्त्र-सम्मितं द्रवति सः" [ ऋ० ७ । ७ । १ दयानन्दः ] ( विश्वे शृण्वन्तु ) ते सर्वे प्रार्थना-वचनं शृण्वन्तु स्वीकुर्वन्तु ( सहस्रसा मेधसातौ-इव ) बहुविज्ञान सम्भक्तौ-ज्ञानसम्भजनं भवति यत्र तत्र ज्ञानगोष्ठौ 'इवानर्थकः' "इवोऽपि दृश्यते" [ निरु० १ । १० ] ( त्मना ) आत्मना शिष्यभावेनात्मसमर्पणं कृतवता ( ये समिथेषु ) ये-अज्ञानादिभिः सह संग्रामेषु प्रवृत्ताः ( धनं जभ्रिरे ) ज्ञानं धनं ग्राहयन्ति 'अन्तर्गतो णिजर्थः ॥ ६ ॥

भाषान्वयार्थ—( ते-अर्वन्तः ) वे विद्वान्-उच्चविज्ञान वाले ( हवनश्रुतः ) जो ह्वान-प्रार्थना वचन को सुनते हैं-स्वीकार करते हैं ( ते वाजिनः-मितद्रवः ) वे आत्मबलसम्पन्न शास्त्रप्रमाणित आचरण करने वाले ( विश्वे शृण्वन्तु ) वे सब प्रार्थना वचन को सुनें-स्वीकार करें ( सहस्रसा मेधसातौ-इव ) बहुत विज्ञान सम्भक्ति में अर्थात् बहुत ज्ञान वाली गोष्ठी में ( त्मना) आत्मा से अर्थात् शिष्यभाव से आत्मा को समर्पण करने वाले के द्वारा ( ये समिथेषु ) जो अज्ञानादि संग्रामों में प्रवृत्त हुए-हुए हैं ( धनं जभ्रिरे ) ज्ञान धन को ग्रहण कराते हैं ॥ ६ ॥

भावार्थ—ऊंचे विद्वान् शास्त्र अनुसार आचरण करते हैं। वे ज्ञानप्राप्त कराने की प्रार्थना को अवश्य स्वीकार करते हैं। जब कोई उनकी गोष्ठी में शिष्यभाव से आता है या आवे और जो अज्ञान आदि के साथ संग्राम करने के इच्छुक होता है उसे वे ज्ञान प्रदान करते हैं ॥ ६ ॥

**प्र वो वायुं रथयुजं पुरंधिं स्तोमैः कृणुध्वं सख्याय पूषणम् ।**
**ते हि देवस्य सवितुः सवीमनि क्रतुं सचन्ते सचितः सचेतसः ॥ ७ ॥**

प्र । वः । वायुम् । रथऽयुजम् । पुरम्ऽधिम् । स्तोमैः । कृणुध्वम् । सख्याय । पूषणम् । ते । हि । देवस्य । सवितुः । सवीमनि । क्रतुम् । सचन्ते । सऽचितः । सऽचेतसः ॥ ७ ॥

संस्कृतान्वयार्थः—( वः ) हे जीवन्मुक्ता विद्वांसः ! यूयम् 'विभक्ति व्यत्ययः' ( रथयुजं वायुम् ) रमणीयमोक्षे योजयति-प्रापयति यस्तं सर्वत्र विभुगतिकम् ( पुरन्धिम् ) पुरुं बहुविधं संसारं धारयति यस्तम् [ पूषणम् ) पोषयितारं परमात्मानम् (स्तोमैः-सख्याय प्रकृणुध्वम् ) स्तुतिसमूहैः सख्याय सखित्वाय सत्कृतं कुरुत ( ते हि ) युष्मादृशास्ते खलु ( सवितुः-देवस्य सवीमनि ) उत्पादकस्य परमात्मदेवस्य-उत्पादिते जगति ( सचितः-सचेतसः ) समानज्ञानाः सावधानाः सन्तः ( क्रतुं सचन्ते ) श्रेष्ठकर्म सेवन्ते ॥ ७ ॥

भाषान्वयार्थ—( वः ) हे जीवनमुक्त विद्वानो ! तुम ( रथयुजं वायुम् ) रमणीय मोक्ष को योजित करने-प्राप्त कराने वाले सर्वत्र विभुगतिमान्-( पुरन्धिम् ) बहुविध संसार को धारण करने-वाले (पूषणम्) पुष्टिकर्ता परमात्मा को ( स्तोमैः सख्याय प्रकृणुध्वम् ) स्तुतिसमूहों द्वारा मित्रता के लिए सत्कृत करो ( ते हि ) जो तुम्हारे जैसे विद्वान् होते हैं वे ( सवितुः-देवस्य सवीमनि ) उत्पादक परमात्मदेव के उत्पन्न किये संसार में (सचितः-सचेतसः) समान ज्ञान सावधान हुए-हुए ( क्रतुं सचन्ते ) श्रेष्ठकर्म को सेवन करते हैं ॥ ७ ॥

भावार्थ—जीवन्मुक्त विद्वान् परमात्मा की मित्रता करने के लिए उसका स्तुतियों द्वारा सत्कार करते हैं जो कि मोक्ष का प्रदान करने वाला है। उस ऐसे परमात्मा को अपना इष्टदेव मान कर ही उसकी प्राप्ति के लिए सदाचरण किया करते हैं ॥ ७ ॥

  

त्रिः सप्त सस्रा नद्यो महीरपो वनस्पतीन् पर्वताँ अग्निमूतये ।
कृशानुमस्तॄन् तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥ ८ ॥

त्रिः । सप्त । सस्राः । नद्यः । महीः । अपः । वनस्पतीन् । पर्वतान् । अग्निम् । ऊतये । कृशानुम् । अस्तॄन् । तिष्यम् । सधऽस्थे । आ । रुद्रम् । रुद्रेषु । रुद्रियम् । हवामहे ॥ ८ ॥

**संस्कृतान्वयार्थः**—(त्रिः सप्त) त्रिः–त्रिषु लोकेषु ये सप्त रश्मीन् (सस्राः-नद्यः) सरन्तीः–नदीः (महीः-अपः) बह्वीः-अपो बहूनि जलानि (वनस्पतीन्) ओषधिवनस्पतीन् (पर्वतान्) गिरीन् (अग्निम्) अग्निं पदार्थम् (ऊतये) रक्षायै (कृशानुम्) विद्युतम् "कृशानोः-विद्युतः" [ १ । १५५ । २ दयानन्दः ] (अस्तॄन्) मेघक्षेप्तॄन् मेघस्थ जल प्रक्षेप्तॄन् वायून् (तिष्यम्) सूर्यम् "तिष्यः-आदित्यः" [ ऋ० ५ । ५४ । १३ दयानन्दः ] (रुद्रेषु रुद्रियं रुद्रम्) अग्निषु "अग्निरपि रुद्र उच्यते" [ निरु० १० । ७ ] होम्यमग्निम् (सधस्थे-आ हवामहे) स्वकीय समानस्थाने सम्मेलने होमयज्ञे वा समन्तात् प्रयुञ्ज्महे ॥ ८ ॥

**भाषान्वयार्थ**—(त्रिः सप्त) तीनों लोकों में सात रश्मियों-(सस्राः-नद्यः) बहती हुई नदियों-(महीः-अपः) बहुतेरी जलधाराओं-(वनस्पतीन्) ओषधि वनस्पतियों-पर्वतान्) पर्वतों-(अग्निम्) अग्नि को (ऊतये) रक्षा के लिए (कृशानुम्) विद्युत् को (अस्तॄन्) मेघों को फेंकने वाली हवाओं को (तिष्यम्) सूर्य को (रुद्रेषु रुद्रियं रुद्रम्) अग्नियों में होमवाली अग्नि को (सधस्थं-आ हवामहे) अपने समानस्थान में सम्मेलन में होमयज्ञ में भलीप्रकार प्रयोग करते हैं ॥ ८ ॥

**भावार्थ**—तीनों लोकों में फैली हुई सूर्य की रश्मियों तथा नदी और जलधाराओं, पर्वतों, विद्युत्, अग्नि, सूर्य मेघक्षेपक हवाओं का उपयोग विशेष विज्ञान तथा होम के द्वारा लेना चाहिए ॥ ८ ॥

सरस्वती सरयुः सिन्धुरूर्मिभिर्महो महीरवसा यन्तु वक्षणीः ।
देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत ॥ ९ ॥

सरस्वती । सरयुः । सिन्धुः । ऊर्मिऽभिः । महः । महीः । अवसा । आ । यन्तु । वक्षणीः । देवीः । आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः । अर्चत ॥ ९ ॥

**संस्कृतान्वयार्थः**—(सरस्वती) सुन्दरजलवती मेघधारा (सरयुः) नीचैः सरणशीला वृष्टिधारा (सिन्धुः) पृथिव्यां स्पन्दमाना नदी (ऊर्मिभिः) तरङ्गैः (महीः)

सर्वा महत्यः ( वक्षणीः ) वहनशीलाः ( अवसा यन्तु ) रक्षण हेतुना प्राप्नुवन्तु ( देवीः-आपः-मातरः) ता दिव्याः सर्वाः-अन्नादिनिर्मात्र्यः (घृतवत् मधुमत् पयः-सूदयित्वः-अर्चत) तेजोवत्–तेजस्वि मधुरं जलं क्षरन्त्यः तृप्यन्तु ॥ ६ ॥

भाषान्वयार्थ—( सरस्वती ) सुन्दर जलवाली मेघधारा ( सरयुः ) नीचे सरणशीला वर्षाधारा ( सिन्धुः ) पृथिवी में स्पन्दनशील-बहती हुई नदी ( ऊर्मिभिः ) अपनी-अपनी तरङ्गों से ( महीः ) सारी बड़ी ( वक्षणीः ) बहने वाली ( अवसा यन्तु ) रक्षण के हेतु प्राप्त होवें ( देवीः-आपः-मातरः ) वे सब दिव्य जल अन्नादि निर्माण करने वाली जलधाराओं ! ( घृतवत्-मधुमत् पयः) तेजयुक्त तथा मधुर स्वाद वाले जल को ( सूदयित्वः-अर्चत ) रिसाती हुई हमें तृप्त करो ॥ ९ ॥

भावार्थ—आकाश में मेघधारायें अन्तरिक्ष में वर्षा और पृथिवी पर बहती हुई नदियां हमारी रक्षा के निमित्त हैं। पृथिवी पर वर्तमान सारे जल अन्न को निर्माण करने वाले तेजस्वी एवं मधुर होते हुए हमें तृप्त करते हैं। इनका हम उपयोग करें और इनके रचयिता परमात्मा का धन्यवाद करें॥ ९ ॥

**उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः ।**
**ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शंसः शशमानस्य पातु नः ॥१०॥**

उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः । जनिऽभिः । पिता । वचः । ऋभुक्षाः । वाजः । रथः पतिः । भगः । रण्वः । शंसः । शशमानस्य । पातु । नः ॥ १० ॥

संस्कृतान्वयार्थः—( उत ) अपि च ( बृहद्दिवा ) महद्दीप्तिका ( माता ) जगन्माता–जगन्निर्माता ( त्वष्टा पिता ) कर्मानुरूपं शरीररचयिता पिता परमात्मा ( जनिभिः ) स्वोत्पादन–शक्तिभिः ( नः-वचः शृणोतु ) अस्माकं प्रार्थनावचनं शृणोतु–स्वीकरोतु ( ऋभुक्षाः ) ऋभून् मेधाविनः क्षाययति निवासयति [ ऋ० १ । १११ । ४ दयानन्दः ] ( वाजः ) बलवान् 'मतुब्लोपश्छान्दसः' ( रथस्पति ) रमणीयमोक्षस्य स्वामी मोक्षदाता ( भगः ) भजनीयः ( रण्वः ) रमणीयः ( शशमानस्य शंसः ) प्रशंसमानस्य स्तोतुः शंसनीयः स्तोतव्यः ( नः-पातु ) अस्मान् रक्षतु ॥ १० ॥

भाषान्वयार्थ—( उत ) और ( बृहद्दिवा ) महती दीप्ति वाला ( जनिभिः ) अपनी उत्पादन शक्तियों द्वारा ( माता ) जगत् का निर्माण कर्त्ता ( त्वष्टा पिता ) कर्मानुरूप शरीररचयिता पिता परमात्मा ( नः-वचः शृणोतु ) हमारे प्रार्थनावचन को सुने-स्वीकार करे ( ऋभुक्षाः ) ऋभुओं-मेधावी जनों को बसाने वाला ( वाजः ) बलवान् ( रथस्पति ) रमणीय मोक्ष का स्वामी-मोक्षदाता ( भगः ) भजनीय ( रण्वः ) रमणीय ( शशमानस्य शंसः ) प्रशंसमान-स्तुति करने वाले का स्तुति करने योग्य ( नः पातु ) हमारी रक्षा करे ॥ १० ॥

भावार्थ—परमात्मा अपनी उत्पादन शक्तियों द्वारा जगत् की माता और पिता है। वह कर्मानुसार शरीर का निर्माण करता है। मेधावी जनों को वसाने वाला, स्तुति करने वालों का स्तुतियोग्य मोक्षदाता है ॥ १० ॥

रण्वः संदृष्टौ पितुमाँ इव क्षयो भद्रा रुद्राणां मरुतामुपस्तुतिः ।
गोभिः ष्याम यशसो जनेष्वा सदा देवास इळया सचेमहि ॥ ११ ॥

रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः । भद्रा । रुद्राणाम् । मरुताम् । उपऽस्तुतिः ।
गोभिः । स्याम । यशसः । जनेषु । आ । सदा । देवासः । इळया । सचेमहि ॥११॥

संस्कृतान्वयार्थः—( रण्वः ) रमणीयः स परमात्मा ( सन्दृष्टौ ) साक्षाद्दर्शने ( पितुमान्-इव क्षयः ) अन्नभोगवानिव निवासोऽस्ति "पितुः-अन्नम्" [ निघ० २ । ७ ] ( रुद्राणां मरुताम् ) विदुषाम् "रुद्राः-विद्वांसः" [ यजु० ११ । ४८ दयानन्दः ] उपदेष्टॄणां जीवन्मुक्तानाम् "मरुतो ह वै देवविशः" [ कौ० ७ । ८ ] ( उपस्तुतिः ) उपप्रशस्तिरनुमोदनाशीः ( भद्रा ) कल्याणकारिणी भवति ( जनेषु-गोभिः-यशसः-आ स्याम ) मनुष्येषु वयं वाग्भिर्विद्याभिर्यशस्विनः समन्तात् प्रसिद्धा भवेम ( देवासः ) हे विद्वांसः ! ( सदा-इळया सचेमहि ) सर्वदा वाचा "इळा वाङ्नाम" [ निघ० १ । ११ ] सङ्गच्छेम ॥ ११ ॥

भाषान्वयार्थ—( रण्वः ) वह रमणीय परमात्मा ( सन्दृष्टौ ) साक्षात् दर्शन में ( पितुमान्-इव क्षयः ) अन्न भोगवान् निवास के समान है-आनन्द भण्डार है ( रुद्राणां मरुताम् ) उपदेष्टा जीवन्मुक्त विद्वानों का ( उपस्तुतिः ) अनुमोदनरूप आशीर्वाद ( भद्रा ) कल्याणकारी है ( जनेषु-गोभिः-यशस,-आ स्याम ) मनुष्यों में हम वाणी द्वारा यशस्वी प्रसिद्ध होवें ( देवासः ) हे विद्वानों ! ( सदा-इळया सचेमहि ) सदा स्तुतिवाणी से सङ्गत होवें ॥ ११ ॥

भावार्थ—परमात्मा रमणीय आनन्द भण्डार है। वह जीवन्मुक्त विद्वानों की अनुमोदनीय कल्याणकारी आशा है। उसकी स्तुति द्वारा मनुष्यों में यश और प्रसिद्धि के पात्र बन जाते हैं ॥ ११ ॥

यां मे धियं मरुत इन्द्र देवा अददात वरुण मित्र यूयम् ।
तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥ १२ ॥

याम् । मे । धियम् । मरुतः । इन्द्र । देवाः । अददात । वरुण । मित्र । यूयम् ।
ताम् । पीपयत । पयसाऽइव । धेनुम् । कुवित् । गिरः । अधि । रथे । वहाथ ॥१२॥

संस्कृतान्वयार्थः—( मरुतः ) हे जीवन्मुक्ताः ! ( इन्द्र ) हे ज्ञानप्रकाशकाचार्य ! ( वरुण ) हे वरयिता उपदेशक ! ( मित्र ) हे प्रेरक ! अध्यापक ! ( देवाः-यूयम् )

विद्वांसो यूयम् ( यां धियम्-अददात ) यां मेधां ज्ञानबुद्धिं कर्मबुद्धिं दद्ध्वे ( तां पीपयत ) तां तत्फलेन वर्धयत ( पयसा-इव धेनुम् ) यथा दुग्धेन गां गोपालः प्रपूर्णां करोति तद्वत् ( गिरः-अधि रथे कुवित्-वहाथ ) वाचो विद्याः-ज्ञानानि रमणीये मोक्षेऽधि बहुप्रकारेण प्रेरयत मोक्षं प्रापयितुं भावयत ॥ १२ ॥

भाषान्वयार्थ—( मरुतः ) हे जीवन्मुक्त विद्वानो ! ( इन्द्र ) हे ज्ञानप्रकाशक आचार्य ! ( वरुण ) हे वरयिता उपदेशक ( मित्र ) हे प्रेरक अध्यापक ! ( देवाः-यूयम् ) विद्वानो तुम ( यां-धियम्-अददात् ) जिस मेधा-ज्ञानबुद्धि को या कर्मबुद्धि को देते हो ( तां पीपयत ) उसे उसके फल से बढाओ ( पयसा-इव-धेनुम् ) जैसे दूध से गोपाल गौ को प्रपूर्ण करता है वैसे ही ( गिरः-अधि रथे ) विद्याओं-ज्ञानों को रमणीय मोक्ष में ( कुवित्-वहाथ ) बहुत प्रकार से प्रेरित करो, मोक्ष प्राप्त करने को भावित करो ॥ १२ ॥

भावार्थ—जिज्ञासु को जीवन्मुक्तों अध्यापकों उपदेशकों एवं प्रमुख आचार्यों से शिक्षण पाकर अपनी ज्ञान-शक्ति और कर्मशक्ति को बढ़ाना चाहिए । अन्त में मोक्ष का अधिकारी बने ॥ १२ ॥

**कुविदङ्ग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ ।**
**नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥ १३ ॥**

कुवित् । अङ्ग । प्रति । यथा । चित् । अस्य । नः । सऽजात्यस्य । मरुतः । बुबोधथ । नाभा । यत्र । प्रथमम् । सम्ऽनसामहे । तत्र । जामिऽत्वम् । अदितिः । दधातु । नः ॥ १३ ॥

**संस्कृतान्वयार्थः**—( अङ्ग मरुत ) हे जीवन्मुक्ताः ! ( अस्य सजात्यस्य नः ) अस्य परमात्मनोऽस्माकं बहुः समान-सम्बन्धभावः प्रथमार्थे षष्ठी व्यत्ययेन स्यात्-मोक्षे (यथा चित्) येनापि साधनेन (प्रति बुबोधथ) प्रति ज्ञापयथ (यत्र नाभा) यस्मिन् नहने बन्धने संबंधे योगे ( प्रथमं संनसामहे ) प्रमुखं प्रतमं सुखं प्राप्नुमः "नसतिराप्नोति कर्मा" [निरु० ७ । १७] "नसते गतिकर्मा" [ निघ० २ । १४ ] ( तत्र-अदितिः ) तस्मिनखण्डित एकरसोऽविनश्वरः परमात्मा ( नः-जामित्वं दधातु ) अस्मभ्यं सुखभोगसम्बन्धं धारयतु ॥ १३ ॥

भाषान्वयार्थ—( अङ्ग मरुत ) हे जीवन्मुक्तो ! ( अस्य सजात्यस्य नः ) इस परमात्मा का हमारे साथ बहुत प्रकार से सम्बन्धभाव हो-मोक्ष में ( यथा चित् ) जिस साधन से वह ( प्रति बुबोधथ ) हमें बतलाओ ( यत्र नाभा ) जिस बन्धन में या सम्बन्ध के होने पर ( प्रथमं संनसामहे ) प्रमुख सुख को प्राप्त करें ( तत्र-अदितिः ) उस मोक्ष में अखण्डित एकरस अविनश्वर परमात्मा ( नः-जामित्वं दधातु ) हमारे लिए सुखभोग सम्बन्ध को धारण कराये ॥ १३ ॥

भावार्थ—जीवन्मुक्त विद्वानों के पास जाकर वह ज्ञानग्रहण करना चाहिए जिससे परमात्मा के साथ स्थायी सम्बन्ध बन जावे । वह अपना सम्बन्धी बनाकर मोक्ष का प्रमुख सुख दे सके और सदा विद्वानों का सहयोग मिलता रहे ॥ १३ ॥

  

ते हि द्यावापृथिवी मातरा मही देवी देवाञ्जन्मना यज्ञियेइतः ।
उभे बिभृत उभयं भरीमभिः पुरू रेतांसि पितृभिश्च सिञ्चतः ॥ १४ ॥

ते । इति । हि । द्यावापृथिवी इति । मातरा । मही इति । देवी इति । देवान् । जन्मना । यज्ञिये इति । इतः । उभे इति । बिभृतः । उभयम् । भरीमऽभिः । पुरु । रेतांसि । पितृऽभिः । च । सिञ्चतः ॥ १४ ॥

संस्कृतान्वयार्थः—( ते द्यावापृथिवी मही देवी मातरा हि ) ते द्यावापृथिव्यौ महत्यौ दिव्यगुणवत्यौ सर्वस्य जगतो निर्मात्र्यौ हि स्तः ( यज्ञिये जन्मना देवान्-इत् ) ते यजनीये सङ्गमनीये परस्परं सङ्गमप्राप्ते जन्मदानेन-उत्पादनेन सर्वान् दिव्यपदार्थान् प्राप्नुतः ( उभे-उभयं बिभ्रतः ) ते उभे-उभयं स्थावरजङ्गमं भरणपदार्थैर्जलान्नादिभिश्च धारयतः पोषयतः ( पितृभिः-पुरुरेतांसि सिञ्चतः ) पितृधर्मैं रजवीर्यात्मकैर्धर्मैर्बहुविधानि रजवीर्याणि सिञ्चतः ॥ १४ ॥

भाषान्वयार्थ—( ते द्यावापृथिवी ) वे द्युलोक और पृथिवीलोक ( मही देवी मातरा हि ) महान् दिव्यगुण वाले सबके निर्माण करने वाले हैं ( यज्ञिये जन्मना देवान्-इत् ) वे यजनीय-सङ्गमनीय परस्पर सङ्गम की अपेक्षा करने वाले जन्म देने-उत्पादन करने के कारण सब दिव्यपदार्थों को प्राप्त होते हैं ( उभे उभयं बिभ्रतः ) वे दोनों स्थावर जङ्गम को भरणपदार्थों से जल अन्न आदियों से धारण करते हैं ( पितृभिः-पुरुरेतांसि सिञ्चतः ) पितृ धर्मों रजवीर्यरूप धर्मों के द्वारा बहुविध रजवीर्यों को सींचते हैं ॥ १४ ॥

भावार्थ—द्युलोक और पृथिवीलोक स्त्री पुरुष के समान एक दूसरे को अपेक्षित करते हैं। वे दोनों रजवीर्य शक्तियों के द्वारा प्राणिवनस्पतियों को उत्पन्न करते हैं तथा उन्हें धारण करते हैं और पोषण करते हैं ॥ १४ ॥

वि षा होत्रा विश्वमश्नोति वार्यं बृहस्पतिररमतिः पनीयसी ।
ग्रावा यत्र मधुषुदुच्यते बृहदवीवशन्त मतिभिर्मनीषिणः ॥ १५ ॥

वि । सा । होत्रा । विश्वम् । अश्नोति । वार्यम् । बृहस्पतिः । अरमतिः । पनीयसी । ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । अवीवशन्त । मतिऽभिः । मनीषिणः ॥ १५ ॥

संस्कृतान्वयार्थः—( सा होत्रा ) सा वेदवाक् "होत्रा वाङ्नाम" [ निघ० १ । ११ ] ( विश्वं वार्यं वि-अश्नोति ) समस्तं वरणीयं वस्तु व्याप्नोति ( बृहस्पतिः-अरमतिः-पनीयसी ) बृहस्पतेः परमात्मनः 'व्यत्यये प्रथमा' या वाक् सा-अरमतिः-अप्रतिहता यस्यासौ सा वेदवाक् प्रशंसनीया ( यत्र ) यस्यां वेदवाचि ( ग्रावा ) विद्वान् "विद्वांसो हि ग्रावाः" [ श० ३ । ६ । ३ । २४ ] ( मधुसुत्-उच्यते ) ज्ञानमधुनो

निष्पादक उच्यते भवति ( मनीषिणः-मतिभिः बृहत् अवीवशन्त ) यां मननशीला मननैः बहुकामयन्ते ॥ १५ ॥

भाषान्वयार्थ—( सा होत्रा ) वह वेदवाणी ( विश्वं वार्यं वि-अश्नोति ) समस्त वरणीय वस्तुओं को व्याप्त होती है (बृहस्पतिः-अरमतिः पनीयसी) परमात्मा की जो वेदवाणी वह अप्रतिहत है, प्रशंसनीय है ( यत्र ) जिस वेदवाणी में ( ग्रावा ) विद्वान् ( मधुसुत्-उच्यते ) ज्ञानमधु का निष्पादक कहा जाता है-होता है ( मनीषिणः-मतिभिः-बृहत्-अवीवशन्त ) जिसे मननशील विचारों के द्वारा बहुत चाहते हैं ॥ १५ ॥

भावार्थ—वेदवाणी समस्त पदार्थों में व्याप्त है अर्थात् उनके गुण और स्वरूपों का वर्णन करती है वह मनुष्य वाणी के समान प्रतिहत नहीं होती, वह यथार्थ वाणी है। उसमें निष्णात विद्वान् ज्ञानमधु का सेवन करता है और बढाता चला जाता है ॥ १५ ॥

**एवा कविस्तुवीरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः ।**
**उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म ॥ १६ ॥**

एव । कविः । तुविऽरवान् । ऋतऽज्ञाः । द्रविणस्युः । द्रविणसः । चकानः । उक्थेभिः । अत्र । मतिऽभिः । च । विप्रः । अपीपयत् । गयः । दिव्यानि । जन्म ॥ १६ ॥

संस्कृतान्वयार्थः—( एव ) एवम् ( कविः ) मेधावी "कविः-मेधाविनाम" [ निघ० ३ । १५ ] ( तुवीरवान् ) बहुज्ञानैश्वर्यवान् (ऋतज्ञाः) सत्यतत्त्वज्ञः ( द्रविणस्युः ) मोक्षधनस्येच्छुकः ( द्रविणसः-चकानः) विविधधनस्य कामयमानः "चकानः कामयमानः" [ ऋ० ३ । ५ । २ दयानन्दः ] ( अत्र उक्थेभिः-च मतिभिः ) अस्मिन् जन्मनि स्तुतिभिर्मन्त्रवचनैश्च ( विप्रः ) आत्मानं विशिष्टतया तर्पयिता ( गयः-दिव्यानि जन्म-अपीपयत् ) प्राणवान् सन् "प्राणा वै गयाः" [ श० १४ । ८ । १५ । ७ ] 'मतुब्लोपश्छान्दसः' दिविभवानि मोक्षविषयकाणि सुखमयानि स्थानानि वर्धयति ॥ १६ ॥

भाषान्वयार्थ—( एव ) इस प्रकार ( कविः ) मेधावी ( तुवीरवान् ) बहुत ज्ञान ऐश्वर्य वाला ( ऋतज्ञाः ) सत्य तत्त्व का जानने वाला ( द्रविणस्युः ) मोक्ष धन का इच्छुक ( द्रविणसः-चकानः ) विविध धन की कामना करने वाला ( अत्र-उक्थेभिः-च मतिभिः ) इस जन्म में स्तुतियों तथा मन्त्रवचनों के द्वारा ( विप्रः ) अपने को विशेषरूप से तृप्त करने वाला ( गयः-दिव्यानि-जन्म-अपीपयत् ) प्राणवान् होता हुआ मोक्षविषयक सुखमय स्थानों को बढाता है ॥ १६ ॥

भावार्थ—मेधावी विद्वान् ज्ञान ऐश्वर्य से सम्पन्न होकर संसार में विविध सम्पत्ति को चाहता हुआ उपार्जित तथा प्राप्त करता है। उससे अपने को तृप्त करता हुआ योग्य आचरण वाला होकर मोक्ष सुखों का अधिकारी बनता है ॥ १६ ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी । ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

पूर्वसूक्तस्यान्तिममन्त्रस्येवार्थो विज्ञेयः ॥

पूर्वसूक्त के अन्तिम मन्त्र की भांति अर्थ है ॥ १७ ॥



# पञ्चषष्टितमं सूक्तम्

ऋषिः—वासुक्रो वसुकर्णः ।

देवता—विश्वे देवाः ।

छन्दः—१, ४, ६, १०, १२, १३, निचृज्जगती । २, ३, ७, ९ विराड् जगती । ५, ८, ११ जगती । १४ त्रिष्टुप् । १५ विराट् त्रिष्टुप् ॥

विषयः—अत्र सूक्ते पृथिवीत आरभ्याकाशपर्यन्तपदार्थानां ज्ञानं कार्यं कलानिर्माणं कृषिकर्म विद्याध्ययनमित्यादयो विषयाः सन्ति ।

इस सूक्त में पृथिवी से आकाश तक का ज्ञान, कला-निर्माण, कृषिकर्म, विद्याध्ययन आदि विषय हैं ॥

अग्निरिन्द्रो वरुणो मित्रो अर्यमा वायुः पूषा सरस्वती सजोषसः ।
आदित्या विष्णुर्मरुतः स्वर्बृहत्सोमो रुद्रो अदितिर्ब्रह्मणस्पतिः ॥ १ ॥

अग्निः । इन्द्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा । सरस्वती । सऽजोषसः । आदित्याः । विष्णुः । मरुतः । स्वः । बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥ १ ॥

**संस्कृतान्वयार्थः**—( अग्निः ) पार्थिवोऽग्निः ( इन्द्रः ) विद्युत् ( वरुणः ) सूर्यस्याकर्षणधर्मः ( मित्रः ) सूर्यस्य प्रेरणधर्मः (अर्यमा) सूर्यः (वायुः) वायुः (पूषा) पृथिवी "पूषा पृथिवी नाम" [निघ० १ । १] (सरस्वती) नदी (आदित्याः) सूर्यरश्मयः (सजोषसः) समानसेवनधर्माः ( विष्णुः ) व्यापक आकाशः ( मरुतः ) वातस्तराः ( बृहत्-स्वः ) महान् द्युलोकः ( सोमः ) सोमाद्योषधिवर्गः ( रुद्रः ) गर्जनशीलो मेघः ( अदितिः ) अखण्डसुखसम्पत्तिर्मुक्तिः ब्रह्मणः-पतिः ) ब्रह्माण्डस्य पतिः परमात्मा 'अग्रिम मन्त्रे वर्तमाने-"अन्तरिक्षमापपुः" वाचमापूरयन्तु-वाचि स्व स्व ज्ञानेन स्थिरा भवन्तु ॥ १ ॥

**भाषान्वयार्थ**—( अग्निः ) अग्नि ( इन्द्रः ) विद्युत् ( वरुणः ) सूर्य का आकर्षणधर्म या बल ( मित्रः ) सूर्य का प्रेरणधर्म-प्रक्षेपण धर्म या बल ( अर्यमा ) सूर्य ( वायुः ) पवन—हवा ( पूषा ) पृथिवी—पोषण करने वाली पृथिवी (सरस्वती) नदी ( आदित्याः ) किरणें ( सजोषसः )

समान सेवन करने योग्य ( विष्णुः ) व्यापक आकाश ( मरुतः ) वातस्तर ( बृहत्-स्वः ) महान् द्युलोक ( सोमः ) सोमादि ओषधि वर्ग ( रुद्रः ) गर्जनशील मेघ ( अदितिः ) अखण्डसुखसम्पत्ति मुक्ति ( ब्रह्मणः-पतिः ) ब्रह्माण्ड का स्वामी परमात्मा, वाणी में ये सब अपने-अपने ज्ञान से स्थिर होवें ॥ १ ॥

भावार्थ—पृथिवी से लेकर आकाश पर्यन्त पदार्थों को तथा परमात्मा और मुक्ति का स्वरूप मनुष्य को जानना चाहिए। जानकर यथायोग्य लाभ लेना, परमात्मा की स्तुति प्रार्थना उपासना करना, अन्त में मुक्ति को पाना मानव का लक्ष्य है ॥ १ ॥

इन्द्राग्नी वृत्रहत्येषु सत्पती मिथो हिन्वाना तन्वा३समोकसा ।
अन्तरिक्षं मह्या पप्रुरोजसा सोमो घृतश्रीर्महिमानमीरयन् ॥ २ ॥

इन्द्राग्नी इति । वृत्रऽहत्येषु । सत्पती इति सत्ऽपती । मिथः । हिन्वाना । तन्वा । समऽओकसा । अन्तरिक्षम् । महि । आ । पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानम् । ईरयन् ॥ २ ॥

संस्कृतान्वयार्थः—( वृत्रहत्येषु ) अज्ञाननाशनव्यवहारेषु ( सत्पती इन्द्राग्नी मिथः-हिन्वाना ) सद्वस्तुपालकौ-अग्निवायू परस्परं प्रेरयन्तौ ( तन्वा समोकसा ) स्वशक्त्या समस्थानौ सन्तौ यन्त्रप्रयुक्तौ ( घृतश्रीः सोमः ) रसाश्रयः-रसोत्पादकश्चन्द्रमाः ( महिमानम्-ईरयन् ) महत्त्वं प्रेरयन् ( महि-ओजसा ) महता तेजसा ( अन्तरिक्षम्-आपप्रुः ) एते सर्वे मम वाचमापूरयन्तु "वागित्यन्तरिक्षम्" [ जै० उ० ४ । ११ । १ । ११ ] ॥ २ ॥

भाषान्वयार्थ—वृत्रहत्येषु ) अज्ञान नाश करने के व्यवहारों में ( सत्पती-इन्द्राग्नी मिथः-हिन्वाना ) सत् वस्तु के पालक अग्नि और वायु परस्पर प्रेरित करते हुए-एक दूसरे को बल देते हुए ( तन्वा समोकसा ) अपनी शक्ति से समस्थान वाले होते हुए-यन्त्र में प्रयुक्त हुए ( घृतश्रीः सोमः ) रस का आश्रयरस का उत्पादक चन्द्रमा ( महिमानम्-ईरयन् ) महत्त्व को प्रेरित करता हुआ ( महि-ओजसा ) महान् तेज से ( अन्तरिक्षम्-आपप्रुः ) ये सब मेरी वाणी को पूर्ण करें-सफल करें ॥ २ ॥

भावार्थ—अज्ञान नाश करने के लिए अग्नि और वायु ये दो महान् शक्तिशाली पदार्थ हैं। समस्त वस्तुओं के यथार्थ स्वरूप को दर्शाते हैं। किसी यन्त्र में प्रयुक्त होकर बड़ा कार्य करते हैं। इसी प्रकार चन्द्रमा भी ओषधियों में रस प्रेरित करता है। इन सबका ज्ञान वर्णन करने में समर्थ होना चाहिए ॥ २ ॥

तेषां हि मह्ना महतामनर्वणां स्तोमाँ इयर्म्यृतज्ञा ऋतावृधाम् ।
ये अप्सवमर्णवं चित्रराधसस्ते नो रासन्तां महये सुमित्र्याः ॥ ३ ॥

तेषाम् । हि । मह्ना । महुताम् । अनर्वणाम् । स्तोमान् । इयर्मि । ऋतऽज्ञाः । ऋतऽवृधाम् । ये । अप्सवम् । अर्णवम् । चित्रऽराधसः । ते । नः । रासन्ताम् । महये । सुऽमित्र्याः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( तेषां महताम्-अनर्वणाम्-ऋतावृधाम् ) तेषां पूर्वोक्तानां स्वस्वमहत्त्वेन महतां महत्त्ववतां स्वाश्रितानां स्वलाभप्रदाने समर्थानां यथार्थज्ञानेन-वर्धकानाम् ( ऋतज्ञाः ) अहं यथार्थज्ञाता ( हि ) अवश्यम् ( स्तोमान्-इयर्मि ) प्रशंसनीय-कलाकौशलान् "स्तोमं प्रशंसनीयकलाकौशलम्" [ ऋ० १ । १२ । १२ दयानन्दः ] प्राप्नोमि ( ये ) ये खलु ( सुमित्र्याः ) शोभनमित्रेषु साधवः ( ते ) ते (अप्सवम्-अर्णवं चित्रराधः) रूपवन्तं शोभनम् "अप्सो रूपनाम" [निघ० ३ । ७] प्राणम् "प्राणो वा-अर्णवः" [ श० ७ । ५ । २ । २१ ] चायनीयं धनम् ( नः-महये रासन्ताम् ) अस्माकं वृद्धये ददतु ॥ ३ ॥

**भाषान्वयार्थ**—( तेषां महताम्-अनर्वणाम् ) उन पूर्वोक्त अपने-अपने महत्त्व से महत्त्व वाले, स्वाश्रित, स्वलाभ प्रदान करने में समर्थ तथा ( ऋतावृधाम् ) यथार्थ ज्ञान से बढ़ाने वाले पदार्थों का ( ऋतज्ञाः ) मैं यथार्थ ज्ञाता ( हि ) अवश्य ( स्तोमान्-इयर्मि ) प्रशंसनीय कलाकौशलों को प्राप्त करता हूँ, जो ( सुमित्र्याः ) शोभन मित्रों में साधु हैं ( ते ) वे ( अप्सवम्-अर्णवम्-चित्रराधः ) रूपवाले सुन्दर प्राण, चायनीय धन को ( नः-महये रासन्ताम् ) हमारी वृद्धि के लिए देवें ॥ ३ ॥

**भावार्थ**—मन्त्रोक्त विविध पदार्थों के विज्ञान द्वारा अनेक कलाकौशलों का आविष्कार करना चाहिए और अनेक मित्र सहयोगियों के सहयोग से इस कार्य को प्रगति देनी चाहिए ॥३॥

**स्वर्णरमन्तरिक्षाणि रोचना द्यावाभूमी पृथिवीं स्कम्भुरोजसा ।**
**पृक्षाइव महयन्त सुरातयो देवाः स्तवन्ते मनुषाय सूरयः ॥ ४ ॥**

स्वःऽनरम् । अन्तरिक्षाणि । रोचना । द्यावाभूमी इति । पृथिवीम् । स्कम्भुः । ओजसा । पृक्षाःऽइव । महयन्तः । सुऽरातयः । देवाः । स्तवन्ते । मनुषाय । सूरयः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( स्वर्णरम् ) तेजस्विनामकं सूर्यम् ( अन्तरिक्षाणि रोचना ) अन्तरिक्षे भवानि रोचमानानि नक्षत्राणि ( द्यावाभूमी ) द्यावापृथिव्यौ ( पृथिवीम् ) प्रथितां सृष्टिम् ( ओजसा ) ज्ञानबलेन ( स्कम्भुः ) स्वाभ्यन्तरे धारयन्ति ( पृक्षाः-इव ) सम्पृक्ताः सुबन्धव इव ( महयन्तः ) महत्त्वमिच्छन्तः ( सुरातयः ) शोभनज्ञानदातारः ( सूरयः-देवाः ) स्तोतारो विद्वांसः "सूरिः स्तोतृनाम" [ निघ० ३ । १६ ] ( मनुषाय ) मनुष्याय ( स्तवन्ते ) वर्णयन्ति ॥ ४ ॥

भाषान्वयार्थ—( स्वर्णरम् ) तेजस्वी सूर्य को ( अन्तरिक्षाणि रोचना ) अन्तरिक्ष में होने वाले नक्षत्रों को ( द्यावाभूमी ) द्युलोक पृथिवी लोक को ( पृथिवीम् ) फैली हुई सृष्टि को ( ओजसा ) ज्ञान बल से ( स्कम्भुः ) अपने अन्दर धारण करते हैं—सम्भालते हैं ( पृक्षाः इव ) सम्पृक्त सुबन्धु के समान ( महयन्तः ) महत्त्व को चाहते हुए ( सुरातयः ) शोभन ज्ञानदाता ( सूरयः-देवाः ) स्तोता विद्वान् ( मनुषाय ) मनुष्य के लिए ( स्तवन्ते ) वर्णन करते हैं ॥ ४ ॥

भावार्थ—सृष्टि के महत्त्व वाले पदार्थों का स्वयं क्रियात्मक ज्ञान करके जो दूसरों को भी ज्ञान देते हैं वे महानुभाव धन्य हैं ॥ ४ ॥

मित्राय शिक्ष वरुणाय दाशुषे या सम्राजा मनसा न प्रयुच्छतः ।
ययोर्धाम धर्मणा रोचते बृहद्ययोरुभे रोदसी नाधसी वृतौ ॥ ५ ॥

मित्राय । शिक्ष । वरुणाय । दाशुषे । या । सम्ऽराजा । मनसा । न । प्रऽयुच्छतः । ययोः । धाम । धर्मणा । रोचते । बृहत् । ययोः । उभे इति । रोदसी इति । नाधसी इति । वृतौ ॥ ५ ॥

संस्कृतान्वयार्थः—( मित्राय वरुणाय दाशुषे शिक्ष ) हे मानव ! त्वं मित्ररूपाय परमात्मने संसारे कर्मकरणार्थं प्रेरकाय वरुणाय-मोक्षे वरयित्रे परमात्मने सांसारिकमोक्ष-गतसुखानन्ददात्रे स्वात्मानं समर्पय ( या) यौ मित्रवरुणरूपौ-सः परमात्मा ( सम्राजा ) सम्यग्राजमानौ-सम्यग्राजमानः ( मनसा न प्रयुच्छतः ) ज्ञानेन न प्रमाद्यतः-न प्रमाद्यति ( ययोः-बृहत्-धाम ) ययोर्यस्य महद् धाम मोक्षाख्यम् "त्रिपादस्यामृतं दिवि" [ ऋ० १० । ९० । ३ ] ( धर्मणा रोचते ) तेजो धर्मणा प्रकाशते ( उभे रोदसी नाधसी वृतौ ) द्यावापृथिव्यौ समृद्धे वृतौ-मार्गे वर्तेते ॥ ५ ॥

भाषान्वयार्थ—( मित्राय वरुणाय दाशुषे शिक्ष ) हे मनुष्य ! तू संसार में कर्मकरणार्थ प्रेरित करने वाले मित्ररूप परमात्मा के लिए, मोक्ष में वरने वाले तथा सांसारिक सुख एवं मोक्षानन्द देने वाले के लिए अपने को समर्पित कर ( या ) जो दोनों मित्र और वरुण धर्म वाला परमात्मा ( सम्राजा ) सम्यक् राजमान ( मनसा न प्रयुच्छतः ) ज्ञान से प्रमाद नहीं करता है ( ययोः-बृहत्-धाम ) जिसका महान् मोक्षधाम है ( धर्मणा रोचते ) जो तेजोधर्म से प्रकाशमान होता है ( उभे रोदसी नाधसी वृतौ ) दोनों द्यावापृथिवी समृद्ध मार्ग में रहते हैं-वर्तते हैं ॥ ५ ॥

भावार्थ—परमात्मा मनुष्य को संसार में कर्म करने के लिए प्रेरित करता है और मोक्ष में सुख देने के लिए ग्रहण करता है । ऐसे उस दाता के प्रति अपना समर्पण करना चाहिए । वह परमात्मा कभी भी कर्मफल देने में प्रमाद नहीं करता है और द्यावापृथिवी उसके शासन में चलते हैं ॥ ५ ॥

या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः ।
सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते ॥ ६ ॥

या । गौः । वर्तनिम् । परिऽएति । निःऽकृतम् । पयः । दुहाना । व्रतऽनीः । अवारतः । सा । प्रऽब्रुवाणा । वरुणाय । दाशुषे । देवेभ्यः । दाशत् । हविषा । विवस्वते ॥ ६ ॥

संस्कृतान्वयार्थः—( या गौः ) या वाक् "गौर्वाङ्नाम" [ निघ० १ । ११ ] ( वर्तनिं पर्येति ) सत्यमार्गं पर्याप्नोति ( अवारतः ) बिनाऽवरोधेन ( व्रतनीः ) कर्मनेत्री व्यवहारनायिका ( निष्कृतं पयः-दुहाना ) संस्कृतं ज्ञानं दुग्धं दोग्धी सती ( सा ) सा वाक् ( दाशुषे वरुणाय विवस्वते ) कर्मफलदात्रे, आनन्ददात्रे वरणीयाय स्वस्मिन् विशिष्टवास-दत्तवते परमात्मने ( देवेभ्यः ) अग्न्यादिभ्यश्च ( हविषा प्रब्रुवाणा ) तेषांज्ञानाय प्रार्थनया प्रवचनं कुर्वाणा भवतु ॥ ६ ॥

भाषान्वयार्थ—( या गौः ) जोवाणी ( वर्तनिंपर्येति ) सत्यमार्ग को परिप्राप्त होती है ( अवारतः ) विना अवरोध के ( व्रतनीः ) कर्म की नेत्री व्यवहार चलाने वाली ( निष्कृतं पयः-दुहाना ) संस्कृत ज्ञानरूप दूध को दुहती हुई ( सा ) वह वाणी ( दाशुषे वरुणाय विवस्वते ) कर्मफलदाता, आनन्ददाता, वरणीय, अपने में विशिष्ट वास देने वाले परमात्मा के लिए ( देवेभ्यः ) और अग्नि आदि देवों के लिए ( हविषा प्रब्रुवाणा ) उनके ज्ञान के लिए प्रार्थना से प्रवचन करती हुई होवे ॥ ६ ॥

भावार्थ—वाणी सत्यतत्त्व को प्राप्त करती है । बिना रुकावट के ज्ञान रूप दूध को दुहती हुई व्यवहार चलाने वाली है इस वाणी से परमात्मा की स्तुति आदि की जाती है और अग्नि आदि देवों का गुण वर्णन किया जाता है इसका उचित प्रयोग करना चाहिए ॥ ६ ॥

दिवक्षसो अग्निजिह्वा ऋतावृधं ऋतस्य योनिं विमृशन्त आसते ।
द्यां स्कभित्व्यप आ चक्रुरोजसा यज्ञं जनित्वी तन्वी३ निमामृजुः ॥ ७ ॥

दिवक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । ऋतस्य । योनिम् । विऽमृशन्तः । आसते । द्याम् । स्कभित्वी । अपः । आ । चक्रुः । ओजसा । यज्ञम् । जनित्वी । तन्वि । नि । ममृजुः ॥ ७ ॥

संस्कृतान्वयार्थः—( दिवक्षसः ) ज्ञानप्रकाशं प्राप्नुवन्तः "दिवक्षाः-ये दिवं विज्ञानप्रकाशादिकंमक्षन्ति प्राप्नुवन्ति" [ ऋ० ३ । ३० । ३१ दयानन्दः ] ( अग्निजिह्वाः ) अग्निवद्विद्याप्रकाशिका वाग्येषां ते "जिह्वा वाङ्नाम" [ निघ० १ । ११ ] ( ऋतावृधः ) सत्यवर्धकाः ( ऋतस्य योनिं विमृशन्तः-आसते ) सत्यमूलं परमात्मानं विचारयन्तस्तिष्ठन्ति ( द्यां स्कभित्वी ) ज्ञानप्रकाशं स्कम्भयित्वा धारयित्वा ( अपः-चक्रुः ) कर्म "अपः कर्मनाम" [ निघ० २ । ११ ] कुर्वन्ति ( ओजसा यज्ञं जनित्वा ) स्वात्मबलेनाध्यात्मयज्ञं प्रादुर्भाव्य ( तन्वि निममृजुः ) स्वात्मानम् "आत्मा वै तनूः" [ श० ६ । ७ । २ । ६ ] 'द्वितीया स्थाने सप्तमी व्यत्ययेन' 'शोधयन्तिअलङ्कुर्वन्ति ॥ ७ ॥

**भाषान्वयार्थ**—( दिवक्षसः ) ज्ञान प्रकाश को प्राप्त हुए ( अग्निजिह्वाः ) अग्नि की भांति विद्या का प्रकाश करने वाली वाणी जिनकी है ऐसे वक्ताजन ( ऋतावृधः ) सत्य के वर्धक ( ऋतस्य योनिं विमृशन्तः-आसते ) सत्य के मूल परमात्मा को विचार करते हुए जो विद्यमान हैं ( द्यां स्कभित्वी ) ज्ञान प्रकाश को सम्भालकर-धारण करके ( अपः-चक्रुः ) कर्म करते हैं ( ओजसा यज्ञं जनित्वा ) स्वात्मबल से अध्यात्मयज्ञ को प्रसिद्ध करके ( तन्वि निममृजुः ) अपने आत्मा को शुद्ध करते हैं-अलङ्कृत करते हैं ॥ ७ ॥

**भावार्थ**—जो ज्ञान में परिपक्व और वक्ताजन होते हैं वे परमात्मा का मनन करते हैं, उसे सारे ज्ञानों का मूल मानते हैं। ऐसे महानुभाव ज्ञान के वर्धक और सत्य के प्रचारक होते हुए अपने आत्मा को अध्यात्म यज्ञ के द्वारा पवित्र एवं अलंकृत करते हैं ॥ ७ ॥

**परिक्षिता पितरा पूर्वजावरी ऋतस्य योना क्षयतः समोकसा ।**
**द्यावापृथिवी वरुणाय सव्रते घृतवत्पयो महिषाय पिन्वतः ॥ ८ ॥**

परिऽक्षिता । पितरा । पूर्वजावरी इति पूर्वऽजावरी । ऋतस्य । योना । क्षयतः । समऽओकसा । द्यावापृथिवी इति । वरुणाय । सव्रते इति सऽव्रते । घृतऽवत् । पयः । महिषाय । पिन्वतः ॥ ८ ॥

**संस्कृतान्वयार्थः**—( परिक्षिता ) परितः सीमातो निवसन्तौ ( पितरा ) पालकौ ( पूर्वजावरी ) पूर्वजायमानौ ( समोकसा ) समानस्थानकौ ( ऋतस्य योना ) प्राप्तस्य जगतो योनौ-परमात्मनि वर्तमानौ (द्यावापृथिवी) द्युलोकपृथिवीलोकौ (सव्रते) समानकर्माणौ ( वरुणाय महिषाय ) वरणीयाय प्राणवते जीवाय "वरुणः-वरो जीवः" [ ऋ० २ । २८ । ८ दयानन्दः ] 'मतुब्लोपश्छान्दसः' "प्राणा वै महिषाः" [ काठ० २७ । १६ ] ( घृतवत्-पयः पिन्वतः ) तेजस्विरसं सिञ्चतः ॥ ८ ॥

**भाषान्वयार्थ**—( परिक्षिता ) सीमा पर रहने वाले जगत् के ऊपर नीचे वर्तमान (पितरा) पालक-रक्षक ( पूर्वजावरी ) पूर्व उत्पन्न हुए-हुए ( समोकसा ) समान स्थान वाले ( ऋतस्य योना ) प्राप्त जगत् के परमात्मा में वर्तमान ( द्यावापृथिवी ) द्युलोक और पृथिवी लोक ( सव्रते ) समान कर्म वाले ( वरुणाय महिषाय ) वरणीय प्राणवान् जीव के लिए ( घृतवत्-पयः पिन्वतः ) तेजस्वी रस सींचते हैं ॥ ८ ॥

**भावार्थ**—जगत् की सीमा पर ऊपर नीचे द्युलोक और पृथिवी लोक परमात्मा के आश्रय से वर्तमान हैं। समस्त प्राणिमात्र के लिए वे तेजस्वी जीवनधारक रस को सींचते हैं ॥ ८ ॥

**पर्जन्यावाता वृषभा पुरीषिणेन्द्रवायू वरुणो मित्रो अर्यमा ।**
**देवाँ आदित्याँ अदितिं हवामहे ये पार्थिवासो दिव्यासो अप्सु ये ॥ ९ ॥**

  

पर्जन्यावाता । वृषभा । पुरीषिणा । इन्द्रवायू इति । वरुणः । मित्रः । अर्यमा । देवान् । आदित्यान् । अदितिम् । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽसु । ये ॥ ९ ॥

**संस्कृतान्वयार्थः**—( पर्जन्यावाता ) पर्जन्यवातौ मेघवातौ ( वृषभा ) सुखवर्षकौ ( पुरीषिणा ) उदकवन्तौ–उदकप्रदौ "पुरीषमुदकनाम" [ निघ० १ । १२ ] ( इन्द्रवायू ) ( विद्युद्वायू ( वरुणः-मित्रः-अर्यमा ) सूर्यस्य प्रक्षेपणधर्मो वरणकर्तृधर्मः सूर्यश्च ( ये ) ये के च ( पार्थिवासः ) पृथिवीस्थाः ( ये-अप्सु ) ये ऽन्तरिक्षे सन्ति "आपोऽन्तरिक्ष नाम" [ निघ० १ । ३ ] ( दिव्यासः ) दिविभवाः सन्ति ते सर्वे देवाः–दिव्यगुणपदार्थास्तान् ( देवान् ) देवान् ( आदित्यान्-अदितिम् ) रश्मीन्–उषसं च ( हवामहे ) ज्ञानसिद्ध्यर्थं शृणुमो गृह्णीमः "हवामहे विद्यासिद्ध्यर्थमुपदिशामः शृणुमश्च" [ ऋ० १ । २१ । ४ दयानन्दः ] ॥ ६ ॥

**भाषान्वयार्थ**—( पर्जन्यवाता ) मेघ और वायु ( वृषभा ) सुखवर्षक ( पुरीषिणा ) जलवाले-जलप्रद ( इन्द्रवायू ) विद्युत् और वायु ( वरुणः-मित्रः-अर्यमा ) सूर्य का प्रक्षेपण धर्म आकर्षण धर्म और सूर्य ( ये ) जो भी ( पार्थिवासः ) पृथिविस्थ ( ये-अप्सु ) जो अन्तरिक्षस्थ अन्तरिक्ष में ( दिव्यासः ) द्युलोकस्थ-द्युलोक के सब देव अर्थात् दिव्यगुण पदार्थ हैं उन ( देवान् ) देवों को ( आदित्यान्-अदितिम् ) रश्मियों को और उषा को ( हवामहे ) ज्ञान की सिद्धि के लिए सुनें-ग्रहण करें ।। ९ ॥

**भावार्थ**—सुखवर्षक मेघ और वायु तथा जलमय विद्युत् और वायु, सूर्य का प्रक्षेपण धर्म और आकर्षण धर्म तथा सूर्य एवं पृथिवी के वनस्पति आदि पदार्थ, अन्तरिक्ष के स्तर दिशायें और द्युलोक के ग्रह तारे आदि हमारे उपयोग एवं ज्ञान वृद्धि के लिए सिद्ध हों ॥ ९ ॥

त्वष्टारं वायुमृभवो य ओहते दैव्या होतारा उषसं स्वस्तये ।
बृहस्पतिं वृत्रखादं सुमेधसमिन्द्रियं सोमं धनसा उ ईमहे ॥ १० ॥

त्वष्टारम् । वायुम् । ऋभवः । यः । ओहते । दैव्या । होतारा । उषसम् । स्वस्तये । बृहस्पतिम् । वृत्रऽखादम् । सुऽमेधसम् । इन्द्रियम् । सोमम् । धनऽसाः । ऊँ इति । ईमहे ॥ १० ॥

**संस्कृतान्वयार्थः**—( ऋभवः ) हे मेधाविनः ! "ऋभुः-मेधाविनाम" [ निघ० ३ । १५ ] ( यः ) यः खलु ( त्वष्टारम् ) सूर्यम् ( वायुम् ) वायुम् ( दैव्या होतारौ ) एतौ–अमानुषौ होतारौ ( उषसम् ) उषो नाम्नीम् ( स्वस्तये-ओहते ) कल्याणाय–आवहति सेवते ( वृत्रखादं सुमेधसं बृहस्पतिम् ) पापभक्षकं पापनाशकं शोभन मेधसं शोभन-

**वि प्रथतां देवजुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूत्वस्मे ।**
**अहेळता मनसा देव बर्हिरिन्द्रज्येष्ठाँ उशतो यक्षि देवान् ॥ ४ ॥**

वि । प्रथताम् । देवऽजुष्टम् । तिरश्चा । दीर्घम् । द्राघ्मा । सुरभि । भूतु । अस्मे इति । अहेळता । मनसा । देव । बर्हिः । इन्द्रऽज्येष्ठान् । उशतः । यक्षि । देवान् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( देवजुष्टं बर्हिः ) जीवन्मुक्तैः सेवितव्यं प्रवृद्धं विज्ञानम् "भूमा वै बर्हिः" [श० १ । ५ । ४ । ४] "बर्हिः-विज्ञानम्" [ऋ० १ । ८३ । ६ दयानन्दः] ( विप्रथताम् ) विस्तृतं भवतु ( अस्मे ) अस्मभ्यम् ( तिरश्चा दीर्घं द्राघ्मा सुरभिभूतु ) तिरश्चीनमन्तर्गतम् "तिरोन्तर्धौ" [ अष्टा० १ । ४ । ७० ] महत्-चिरस्थायि सुगन्धरूपं भवतु ( देव ) हे परमात्मदेव ! ( अहेळता मनसा ) क्रोधरहितेन दयापूर्णेन मनसेव स्वज्ञानेन ( इन्द्रज्येष्ठान्-उशतः-देवान् ) इन्द्रं त्वां परमात्मानं ज्येष्ठं स्वोपरि वर्तमानं ये मन्यन्ते तान्, त्वां ये कामयन्ते तान् "वश कान्तौ" [ अदादिः ] विदुषः ( यक्षि ] सङ्गमयसि ॥ ४ ॥

**भाषान्वयार्थ**—( देवजुष्टं बर्हिः ) जीवन्मुक्तों के द्वारा सेवित करने योग्य प्रवृद्ध विज्ञान ( विप्रथताम् ) विस्तृत होवे-होता है ( अस्मे ) हमारे लिए ( तिरश्चा दीर्घं द्राघ्मा सुरभि भूतु ) अन्दर रखा हुआ बड़ा और चिरस्थायी सुगन्धरूप होवेहोता है ( देव ) हे परमात्मदेव ! ( अहेळता मनसा ) क्रोधरहित दयापूर्ण मन से-अपने ज्ञान से ( इन्द्रज्येष्ठान्-उशतः-देवान् ) इन्द्र अर्थात् तुझ परमात्मा को ज्येष्ठ अर्थात् अपने से ऊपर जो स्वीकार करते हैं, उनको और तुझे चाहने वाले विद्वानों को ( यक्षि ) सङ्गति का अवसर दे-अपने साथ मिला ॥ ४ ॥

**भावार्थ**—परमात्मा का ज्ञान जीवन्मुक्तों के अन्दर वृद्धि को प्राप्त होता है वे लोग अपने ऊपर परमात्मा को ही उपास्य समझते हैं परमात्मा उन्हें अपनी संगति का लाभ देता है उनके द्वारा अन्य जन परमात्मा के ज्ञान का लाभ लेते हैं ॥ ४ ॥

**दिवो वा सानु स्पृशता वरीयः पृथिव्या वा मात्रया वि श्रयध्वम् ।**
**उशतीर्द्वारो महिना महद्भिर्देवं रथं रथयुर्धारयध्वम् ॥ ५ ॥**

दिवः । वा । सानु । स्पृशत । वरीयः । पृथिव्या । वा । मात्रया । वि । श्रयध्वम् । उशतीः । द्वारः । महिना । महत्ऽभिः । देवम् । रथम् । रथऽयुः । धारयध्वम् ॥५॥

**संस्कृतान्वयार्थः**—( द्वारः ) हे द्वार इव सुशोभिता देव्यः ! "द्वारः द्वार इव सुशोभिताः" [ ऋ० १ । ४२ । ६ दयानन्दः ] इन्द्रियद्वारतो निः सृताः शुभो वृत्तयो वा ( दिवः-वा सानु स्पृशत ) मोक्षधाम्नः स्वर्गस्य भजनीयं सुखं प्राप्नुत ( पृथिव्याः-वा वरीयः ) प्रथितायाः सृष्टेश्च महत्तरं सुखम् ( मात्रया विश्रयध्वम् ) आंशिकरूपेण

विश्रयत ( उशतीः ) कामयमानाः सत्यः ( महिना महद्भिः-देवं रथं रथयुः-धारयध्वम् ) गुणमहत्त्वेन महद्भिर्विद्वद्भिः स्वीकृतमनुमोदितं वा दिव्यं रमणीयं मोक्षं गार्हस्थ्यं वारमणं कामयमानाः-धारयत ॥ ५ ॥

भाषान्वयार्थ—( द्वारः ) हे द्वार के समान सुशोभित गृह देवियो-गृह महिलाओं ! अथवा इन्द्रियद्वारों से निकली हुई शुभवृत्तियो ! ( दिवः-वा सानु स्पृशत ) मोक्ष-धाम के-स्वर्ग के भजनीय सुख को प्राप्त करो ( पृथिव्याः-वा वरीयः ) प्रथित सृष्टि के महत्तर सुख को ( मात्रया विश्रयध्वम् ) आंशिकरूप से सेवन करो ( उशतीः ) कामना करती हुई ( महिना महद्भिः ) गुणमहत्त्व से महान् विद्वानों से स्वीकृत तथा अनुमोदित ( देवं रथं रथयुः-धारयध्वम् ) रमणीय मोक्ष या गृहस्थ के रमण को चाहते हुए धारण करो ॥ ५ ॥

भावार्थ—घर की महिलायें अथवा प्रत्येक मनुष्य की इन्द्रियवृत्तियां सृष्टि के भोगों को आंशिकरूप में भोगें। इसी में कल्याण है अधिक सेवन में नहीं। तथा-महान् विद्वानों द्वारा सेवित तथा अनुमोदित विशेषरूप से मोक्षधाम का सुख, साधारणरूप से गृहस्थ का सुख भोगने योग्य हैं ॥ ५ ॥

देवी दिवो दुहितरा सुशिल्पे उषासानक्ता सदतां नि योनौ ।
आ वां देवास उशती उशन्त उरौ सीदन्तु सुभगे उपस्थे ॥ ६ ॥

देवी इति । दिवः । दुहितरा । सुशिल्पे इति सुऽशिल्पे । उषासानक्ता । सदताम् । नि । योनौ । आ । वाम् । देवासः । उशती इति । उशन्तः । उरौ । सीदन्तु । सुभगे इति सुऽभगे । उपऽस्थे ॥ ६ ॥

संस्कृतान्वयार्थः—( दिवः-दुहितरा सुशिल्पे देवी-उषासानक्ता ) सूर्यस्येव प्रकाशमानस्य ज्ञानसूर्यस्य विदुषो दुहितराविव दोग्ध्र्यौ सुकर्मसाधिके "शिल्पं कर्मनाम" [ निघ० २ । १ ] दिव्यसुखदत्र्यौ-उषोरात्रे इव विद्यायोषे ( योनौ निसदताम् ) सुबुद्धौ प्रशस्तबुद्धिमति मयि जने "सुधीन् योनीन्" [ काठ० १ । १२ ] नितिष्ठताम् ( सुभगे-उशती ) हे सुभाग्यनिमित्तभूते ! कमनीये (उशन्तः-देवासः ) कामयमाना विद्वांसः ( वाम्-उरौ-उपस्थे-आसीदन्तु ) युवयोः-विस्तृते उपयुक्त स्थानेऽध्ययश्रवणस्थाने समन्तात् प्राप्नुवन्ति 'लडर्थे लोट् छान्दसः' ॥ ६ ॥

भाषान्वयार्थ—( दिवः-दुहितरा ) सूर्य के समान प्रकाशमान ज्ञानसूर्य विद्वान् की दुहिताओं के समान दोहने वाली ( सुशिल्पे देवी ) सुकर्म की साधिकायें दिव्य सुख देने वालीं ( उषासानक्ता ) उषा और रात्रि के समान विद्या और स्त्री ( योनौ नि सदताम् ) सुबुद्धि में-उत्तम बुद्धि में प्रशस्त बुद्धि वाले मुझ मनुष्य में निविष्ट हों ( सुभगे उशती ) हे सुभाग्य के निमित्तभूत ! कमनीय ! ( उशन्तः-देवासः ) कामना करते हुए विद्वान् ( वाम्-उरौ ) तुम्हारे - विस्तृत-( उपस्थे-आसीदन्तु ) उपयुक्त स्थान-अध्ययनश्रवण स्थान में भलीभांति प्राप्त होते हैं ॥ ६ ॥

भावार्थ—विद्यासूर्य विद्वान् की दोहने योग्य विद्या और योग्य पत्नी अच्छे कर्म की साधिकायें बनती हैं जबकि अच्छे और श्रवण स्थान में उनका उपयोग हो ॥ ६ ॥

ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे ।
पुरोहितावृत्विजा यज्ञे अस्मिन् विदुष्टरा द्रविणमा यजेथाम् ॥ ७ ॥

ऊर्ध्वः । ग्रावा । बृहत् । अग्निः । सम्ऽइद्धः । प्रिया । धामानि । अदितेः । उपऽस्थे । पुरःऽहितौ । ऋत्विजा । यज्ञे । अस्मिन् । विदुःतरा । द्रविणम् । आ । यजेथाम् ॥ ७ ॥

**संस्कृतान्वयार्थः**—( ऊर्ध्वः-ग्रावा ) उत्कृष्टो विद्वान्-उपदेष्टा "विद्वांसो हि ग्रावाणः" [ श० ३ । ६ । ३ । १४ ] ( बृहत्-समिद्धः-अग्निः ) बृहत् महान् ज्ञानदीप्तोऽध्यापकः ( अदितेः-उपस्थे प्रिया धामानि ) अखण्डितविद्यावतो विदुषः "अदितिः सर्वे विद्वांसः" [ ऋ० १ । ६८ । ३ दयानन्दः ] उपतिष्ठन्ते विद्या यस्मिन् तस्मिन् मस्तिष्के हृदये वा प्रियाणि ज्ञानानि ( अस्मिन् यज्ञे ) अस्मिन् ज्ञानयज्ञे ( पुरोहितौ-ऋत्विजौ ) पुरःस्थितौ :समये ज्ञानदातारौ–अध्यापकोपदेशकौ ( विदुष्टरा ) अत्यन्तविद्वांसौ ( द्रविणम्-आयजेथाम् ) ज्ञानधनं समन्ताद् दत्तम् ॥ ७ ॥

**भाषान्वयार्थ**—( ऊर्ध्वः-ग्रावा ) उत्कृष्ट विद्वान् उपदेष्टा ( बृहत्-समिद्धः-अग्निः ) महान् ज्ञान से दीप्त अध्यापक ( अदितेः-उपस्थे प्रिया धामानि ) अखण्डित विद्यावाले विद्वान् के मस्तिष्क या हृदय में प्रिय ज्ञान ( अस्मिन् यज्ञे ) इस ज्ञानयज्ञ में ( पुरोहितौ-ऋत्विजौ ) सामने स्थित समय में ज्ञानदाता अध्यापक और उपदेशक ( विदुष्टरा ) अत्यन्त विद्वान् ( द्रविणम्-आयजेथाम् ) ज्ञानधन को भलीभांति प्रदान करें ॥ ७ ॥

भावार्थ—उत्तम विद्यावाले अध्यापक और उपदेशक निरन्तर अपने मस्तिष्क या हृदय में विद्या को उत्तरोत्तर बढाते रहते हैं। वे दूसरों को भी निरंतर विद्यादान देते रहते हैं ॥ ७ ॥

तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनम् ।
मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्त ॥ ८ ॥

तिस्रः । देवीः । बर्हिः । इदम् । वरीयः । आ । सीदत । चकृम । वः । स्योनम् । मनुष्वत् । यज्ञम् । सुऽधिता । हवींषि । इळा । देवी । घृतऽपदी । जुषन्त ॥ ८ ॥

**संस्कृतान्वयार्थः**—( तिस्रः-देवीः ) हे तिस्रो देव्यः ! ( इदं वरीयः-बर्हिः-आसीदत ) अध्यात्मयज्ञस्यासने विराजध्वम् ( वः-स्योनं चकृम ) युष्मभ्यं सुखं कुर्मः ( इळा देवी घृतपदी ) स्तुतिः "ईड स्तुतौ" [ अदादि० ] कामना-प्रार्थना "दिवु क्रीडाविजिगीषा व्यवहार द्युति स्तुति मोदमदस्वप्न कान्तिगतिषु" [ दिवादिः ] 'कान्तिः

कामना प्रार्थनाऽत्र गृह्यते' तेजः स्वरूपा खलूपासना "तेजोऽसि तेजो मयि धेहि" [ यजु० १६ । ६ ] ( मनुष्वद् यज्ञं सुधिता हवींषि जुषन्त ) मनुष्यवति यज्ञे 'विभक्तेलुक्, विभक्तिव्यत्ययश्च' मनुष्यस्यान्तरे वर्तमानेऽध्यात्मयज्ञे सुधितानि-सुहितानि मनांसि मनोबुद्धिचित्ताहङ्कारान् सेवध्वम्-तदनुसरन्त्यो भवत ॥ ८ ॥

भाषान्वयार्थ—( तिस्रः-देवीः ) हे तीन देवियो ! ( इदं वरीयः-बर्हिः-आसीदत ) अध्यात्म-यज्ञ के आसन पर विराजमान होओ ( वः स्योनं चक्रम ) तुम्हारे लिए हम सुखसम्पादन करते हैं ( इळा देवी घृतपदी ) स्तुति, कामना-प्रार्थना, तेजः स्वरूप उपासना ( मनुष्वत्-यज्ञम् ) मनुष्य-वाले यज्ञ में ( सुधिता हवींषि जुषन्त ) अच्छे हित करने वाले मन बुद्धि चित्त अहङ्कारों को सेवन करो ॥ ८ ॥

भावार्थ—अध्यात्मयज्ञ के साधने वाली तीन भावनायें या धारणायें जो कि स्तुति प्रार्थना और उपासना हैं। ये सफल तब हो सकती हैं जब इनके अनुसार मन बुद्धि चित्त और अहङ्कार हों ॥ ८ ॥

देव॑ त्वष्ट॒र्यद्ध॑ चारु॒त्वमान॒ड्यदङ्गि॑रसा॒मभ॑वः सचा॒भूः ।
स दे॒वाना॒ं पाथ॒ उप॒ प्र वि॒द्वानु॒शन् य॑क्षि द्रविणोदः सुरत्नः ॥ ९ ॥

देव॑ । त्व॒ष्ट॒रिति॑ । यत् । ह॒ । चा॒रु॒ऽत्वम् । आन॑ट् । यत् । अङ्गि॑रसाम् । अभ॑वः । स॒चा॒ऽभूः । सः । दे॒वाना॑म् । पाथः॑ । उप॑ । प्र । वि॒द्वान् । उ॒शन् । य॒क्षि । द्र॒वि॒णः॒ऽदः॒ । सु॒ऽरत्नः॑ ॥ ९ ॥

संस्कृतान्वयार्थः—( त्वष्टः-देव ) हे जगद्रचयित देव परमात्मन् ! ( यत्-ह चारुत्वम्-आनट् ) यत् खलु कल्याणरूपत्वं श्रेष्ठत्वं प्राप्नोषि ( यत्-अङ्गिरसां सचाभूः-अभवः ) यच्च अङ्गिनं त्वां परमात्मानं स्वस्मिन् रसयन्ति तेषां विदुषाम् "अङ्गिरसो विद्वांसः" [ ऋ० ३ । ३१ । १६ ] सहयोगी भवसि ( सः ) स त्वम् ( द्रविणोदः ) हे धनदः ! ( सुरत्नः ) सुरमणीय भोगवान् सन् ( देवानां पाथः ) तेषां विदुषां पथ्यं भोगम् ( विद्वान्-उशन् ) जानन् तथा च दातुं कामयमाना सन् ( उप प्र यक्षि ) उपप्रयच्छसि ॥ ९ ॥

भाषान्वयार्थ—( त्वष्टः-देव ) हे जगत् के रचने वाले परमात्मदेव ! ( यत्-ह चारुत्वम्-आनट् ) जो तू कल्याणरूपता या श्रेष्ठता प्राप्त किये हुए है ( यत्-अङ्गिरसां सचाभूः-अभवः ) और जो तुझ परमात्मा को अपना अङ्गी बना कर रस लेते हैं उन विद्वानों का सहयोगी होता है—हो ( सः ) वह तू ( द्रविणोदः ) हे धन प्रदान करने वाले ( सुरत्नः ) सुरमणीय भोग वाला होता हुआ ( देवानां पाथः ) उन विद्वानों के पथ्य भोग को ( विद्वान्-उशन् ) जानता हुआ, देने की कामना करता हुआ ( उप प्रयक्षि ) देता है ॥ ९ ॥

भावार्थ—परमात्मा जगत् का रचयिता जीवों के ऊपर अपनी दयारूप श्रेष्ठता को प्रकट करता है जो उपासक तुझे अपना अङ्गी बनाकर आनन्द रस लेते हैं उन्हें तू निश्चय अपना उपहार देता है॥ ९॥

वन॑स्पते रश॒नया॑ नि॒यूया॑ दे॒वानां॒ पाथ॒ उप॑ वक्षि वि॒द्वान् ।
स्वदा॑ति दे॒वः कृ॒णव॑द्ध॒वींष्यव॑तां॒ द्यावा॑पृथि॒वी हवं॑ मे ॥ १० ॥

वन॑स्पते । र॒श॒नया॑ । नि॒ऽयूय॑ । दे॒वाना॑म् । पाथः॑ । उप॑ । व॒क्षि । वि॒द्वान् । स्वदा॑ति । दे॒वः । कृ॒णव॑त् । ह॒वींषि॑ । अव॑ताम् । द्यावा॑पृ॒थि॒वी इति॑ । हव॑म् । मे॒ ॥ १० ॥

**संस्कृतान्वयार्थः**—( वनस्पते ) हे वननीय सुखविशेषस्य पालक ! परमात्मन् त्वम् ( रशनया ) व्यापनशक्त्या ( नियूय ) तन्नियन्त्रय तत्र ( देवानां पाथः-विद्वान्-उपवक्षि ) विदुषां भोगं जानन्-उपवहसि प्रापयसि ( देवः-हवींषि कृणवत् ) सः परमात्म-देवः, अन्नादीनि-उत्पादयत् ( स्वदाति ) जीवान् स्वादयति भोजयति ( द्यावापृथिवी मे हवम्-अवताम् ) द्यावापृथिवीमयं जगत् खलु मे तद् भोज्यं रक्षतु ॥ १० ॥

**भाषान्वयार्थ**—( वनस्पते ) हे वननीय सुखविशेष के रक्षक परमात्मन् ! तू ( रशनया ) व्यापनशक्ति से ( नियूय ) उसे नियन्त्रित कर ( देवानां पाथः ) विद्वानों के भोग को ( विद्वान्-उपवक्षि) जानता हुआ प्राप्त कराता है (देवः-हवींषि कृणवत्) वह परमात्मदेव अन्न आदि को उत्पन्न करता है ( स्वदाति ) और जीवों को स्वाद से खिलाता है ( द्यावापृथिवी मे हवम्-अवताम् ) द्यावापृथिवीमय जगत् मेरे भोज्य की रक्षा करे ॥ १० ॥

**भावार्थ**—परमात्मा प्राणियों के भोग की रक्षा करता है। अपनी व्यापनशक्ति से उसे नियन्त्रित करके विद्वानों तक पहुंचाता है और प्राणियों को भोग्यपदार्थ प्रदान करता है। अन्नादि उत्पन्न करके खिलाता है ॥ १० ॥

आग्ने॑ वह॒ वरु॑णमि॒ष्टये॑ न॒ इन्द्रं॑ दि॒वो म॒रुतो॑ अ॒न्तरि॑क्षात् ।
सीद॑न्तु ब॒र्हिर्विश्व॒ आ यज॑त्राः॒ स्वाहा॑ दे॒वा अ॒मृता॑ मादयन्ताम् ॥ ११ ॥

आ । अग्ने॒ । व॒ह॒ । वरु॑णम् । इ॒ष्टये॑ । नः॒ । इन्द्र॑म् । दि॒वः । म॒रुतः॑ । अ॒न्तरि॑क्षात् । सीद॑न्तु । ब॒र्हिः । विश्वे॑ । आ । यज॑त्राः । स्वाहा॑ । दे॒वाः । अ॒मृताः॑ । मा॒द॒य॒न्ता॒म् ॥ ११ ॥

**संस्कृतान्वयार्थः**—( अग्ने ) हे अग्रणायक परमात्मन् ! त्वम् ( नः-इष्टये ) अस्माकमिष्टसुखप्राप्तये "इष्टये सुखसिद्ध्यै" [ ऋ० १ । ३० । १२ दयानन्दः ] ( दिवः-वरुणम्-इन्द्रम्-अन्तरिक्षात्-मरुतः-आवह ) मेघ मण्डलाज्जलं विद्युतं प्रापय तथाऽन्तरिक्षात्-मरुतः-वायून् वृष्टिहेतून् प्रापय-प्रेरय ( विश्वेयजत्राः स्वाहा-बर्हिः-आसीदन्तु ) सर्वे

याजका यजनीयाः पूज्या विद्वांसो होमकरणाय यज्ञस्थानं विराजन्ताम् ( अमृताः-देवाः-मादयन्ताम् ) जीवन्मुक्ताश्च विद्वांसो हर्षयन्तु ॥ ११ ॥

भाषान्वयार्थ—( अग्ने ) हे अग्रणायक परमात्मन् ! तू ( नः-इष्टये ) हमारे इष्टसुख की प्राप्ति के लिए ( दिवः-वरुणम्-इन्द्रम् ) मेघमण्डल से जल को, विद्युत को प्राप्त करा ( अन्तरिक्षात्-मरुतः-आ वह ) तथा अन्तरिक्ष से वृष्टि के हेतुरूप वायुओं को प्रेरित कर ( विश्वे यजत्राः स्वाहा ) सारे याजक यजनीय पूज्य विद्वान् अच्छे होम करने के लिए ( बर्हिः-आसीदन्तु ) यज्ञ स्थान में विराजमान हों ( अमृताः-देवाः-मादयन्ताम् ) जीवन्मुक्त विद्वान् हर्षित करें ॥ ११ ॥

भावार्थ—परमात्मा हमारी इष्टसिद्धि के लिए मेघमण्डल से जल को बरसाता है और अन्तरिक्ष से वर्षा कराने वाली हवाओं को प्रेरित करता है। एतदर्थं याजकलोग यजन करते हैं और जीवन्मुक्त विद्वान् हर्षित करते हैं ॥ ११ ॥



# एकसप्ततितमं सूक्तम्

ऋषिः—बृहस्पतिः

देवता—ज्ञानम्

छन्दः—१ त्रिष्टुप् । २ भुरिक् त्रिष्टुप् ३, ७ निचृत् त्रिष्टुप् । ५ पादनिचृत् त्रिष्टुप् ५, ६, ८, १०, ११ विराट् त्रिष्टुप् ९ विराट् जगती ।

विषयः—अत्र सूक्ते वेदानां प्रकाशस्तत्प्रचारश्च, तदर्थज्ञानेन लौकिकेष्टसिद्धिरध्यात्मलाभश्च प्राप्यते तस्य सर्वज्ञानेभ्यो महत्त्वञ्चेत्येवमादयो विषयाः सन्ति ।

इस सूक्त में वेदो का प्रकाश तथा प्रचार करना उसके अर्थज्ञान से लौकिक इष्टसिद्धि अध्यात्म सुखलाभ, सब ज्ञानो से महत्ता, आदि विषय है ।

बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥

बृहस्पते । प्रथमम् । वाचः । अग्रम् । यत् । प्र । ऐरत । नामऽधेयम् । दधानाः । यत् । एषाम् । श्रेष्ठम् । यत् । अरिप्रम् । आसीत् । प्रेणा । तत् । एषाम् । निऽहितम् । गुहा । आविः ॥ १ ॥

**संस्कृतान्वयार्थः**—( बृहस्पते ) वेदवाचः स्वामिन् ! परमात्मन् ! ( वाचः-अग्रं प्रथमं नामधेयं यत्-दधानाः-ऐरत ) वाण्याः-श्रेष्ठरूपं प्रथमं सृष्टेरारम्भे पदार्थजातस्य नामव्यवहार प्रदर्शकं वेदं धारयन्तः परमर्षयः प्रेरयन्ति प्रज्ञापयन्ति ( यत् ) यतः ( एषाम् ) परमर्षीणाम् ( श्रेष्ठम् ) श्रेष्ठं कार्यम् ( अरिप्रम्-आसीत् ) पापरहितं निष्पापम् "रपोरिप्रमिति पापनामनी भवतः" [ निरु० ४ । २१ ] आसीत् ( प्रेणा-एषां गुहानिहितम् ) तव-प्रेरणया, एषां परमर्षीणां गुहायां हृदये स्थितम् ( आविः ) तदाविर्भवति प्रकटी भवति ॥ १ ॥

**भाषान्वयार्थ**—( बृहस्पते ) हे वेदवाणी के स्वामी परमात्मन् ( वाचः-अग्रं प्रथमम् ) वाणी के श्रेष्ठरूप सृष्टि के प्रारम्भ में होने वाले ( नामधेयं यत्-दधानाः प्रैरत ) पदार्थमात्र के

नाम व्यवहार के प्रदर्शक वेद को धारण करते हुए परमर्षि प्रेरित करते हैं जनाते हैं ( यत् ) यतः ( एषाम् ) इन परम ऋषियों का ( श्रेष्ठम् ) श्रेष्ठ कार्य ( अरिप्रम्-आसीत् ) पापरहित-निष्पाप है ( प्रेणा-एषां गुहा निहितम् ) तेरी प्रेरणा से इन परमर्षियों के हृदय में प्रकट होता है ॥ १ ॥

भावार्थ—वेद का स्वामी परमात्मा सृष्टि के आरम्भ में आदि ऋषियों के पवित्र अन्तःकरण में वेद का प्रकाश करता है जो पदार्थमात्र के गुण स्वरूप को बताता है उसे वे ऋषि दूसरों को जनाते हैं ॥ १ ॥

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ २ ॥**

सक्तुम्ऽइव । तितउना । पुनन्तः । यत्र । धीराः । मनसा । वाचम् । अक्रत । अत्र । सखायः । सख्यानि । जानते । भद्रा । एषाम् । लक्ष्मीः । निऽहिता । अधि । वाचि ॥ २ ॥

संस्कृतान्वयार्थः—( सक्तुमिव तितउना पुनन्तः ) सक्तु यथा परिपवनेन शोधयन्ति तद्वच्छोधयन्तः ( धीरा मनसा यत्र वाचम्-अक्रत ) "धीः-प्रज्ञानम्" धीः प्रज्ञानाम [ निघ० ३ । ६ ] तद्वन्तः, यद्वा धी ध्यानं तद्वन्तो ध्यानावस्थां गतवन्तः परमर्षयः मनसाऽन्तः करणेन प्रकटी कुर्वन्ति ( अत्र ) तत्र ( वाचि ) वाग्विषये ( सखायः ) समानख्यानाः-वाग्विज्ञानेन सह सख्यमानुभविकं ज्ञानं प्राप्ताः ( सख्यानि ) यथार्थं तादूभाव्यं सञ्जानते ( एषाम्-अधि वाचि भद्रा लक्ष्मीः-निहिता ) एषां परमर्षीणां वाण्यां कल्याणकरी खल्वन्यैर्लक्षणीया वाञ्छनीया ज्ञानसम्पत्तिर्निहिता भवति । अर्थोऽयं निरुक्तानुसारी ॥ २ ॥

भाषान्वयार्थ—( सक्तुम्-इव ) सक्तु को ( तितउना पुनन्तः ) छालनी से शोधते हुए के समान ( धीराः-मनसा ) बुद्धिमान् या ध्यानशील मनसे ( यत्रवाचम्-अक्रत) जहां वाणी को प्रकट करते हैं ( अत्र ) वहाँ वाग्विषय में ( सखायः ) वाग्विज्ञान के साथ समान ख्यान-आनुभविक ज्ञान को प्राप्त होते हैं ( सख्यानि ) यथार्थं तादूभाव्य को अनुभव करते हैं ( एषाम्-अधिवाचि ) इन परम ऋषियों की वाणी में ( भद्रा लक्ष्मीः-निहिता ) कल्याणकरी अन्यों से लक्षणीय ज्ञान-सम्पत्ति निहित होती है ॥ २ ॥

भावार्थ—परम ऋषि महानुभाव वाग्विषय को भली भांति शोधकर अपने अन्दर धारण करते हैं । वाणी के यथार्थ ज्ञान के साथ उनकी तन्मयता हो जाती है । ज्ञानसम्पत्ति की वे रक्षा करते हैं ॥ २ ॥

**यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ।**
**तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ ३ ॥**

  

यज्ञेन । वाचः । पदऽवीयम् । आयन् । ताम् । अनु । अविन्दन् । ऋषिषु । प्रऽविष्टाम् । ताम् । आऽभृत्य । वि । अदधुः । पुरुऽत्रा । ताम् । सप्त । रेभाः । अभि । सम् । नवन्ते ॥ ३ ॥

**संस्कृतान्वयार्थः**—( वाचः-यज्ञेन पदवीयम्-आयन् ) मन्त्रवाचो अध्यात्मयज्ञेन ध्यानेन पदशो ज्ञानक्रमम् "पदवी पदं वेत्ति" [ निरु॰ १३ ( १४ ) ७२ ( १४ ) ] पदपूर्वकाद् वी धातोर्यति गुणाभावश्छान्दसः ( ताम्-ऋषिषुप्रविष्टाम्-अन्वविन्दन् ) तां वाचं मन्त्रेषु प्रविष्टां लब्धवन्तः-प्राप्तवन्तः ( ताम्-आभृत्य पुरुत्रा व्यदधुः ) तां वाचं समन्ताद् धारयित्वा बहुषुदेशेषु विदधति प्रचारयन्ति ( तां सप्त रेभाः-अभि सं नवन्ते ) तां वाचं सप्त छन्दांसिविषयान् लक्ष्यीकृत्य स्तुवन्ति वर्णयन्ति ॥ ३ ॥

**भाषान्वयार्थ**—( वाचः ) मन्त्र वाणियां ( यज्ञेन ) अध्यात्मयज्ञ के द्वारा-ध्यान से ( पदवीयम् ) पदों द्वारा ज्ञानक्रम को ( आयन् ) प्राप्त होती हैं ( ताम्-ऋषिषु ) उस वाणी को मन्त्रों में ( प्रविष्टाम्-अन्वविन्दन् ) प्रविष्ट हुई को प्राप्त करते हैं ( ताम्-आभृत्य ) उस वाणी को भली प्रकार धारण करके ( पुरुत्रा व्यदधुः ) बहुत देशों में प्रचारित करते हैं ( तां सप्तरेभाः ) उस वाणी को सात छन्द विषयों को लक्ष्य करके ( अभि सं नवन्ते ) स्तुति करते हैं, वर्णित करते हैं ॥ ३ ॥

**भावार्थ**—वेदवाणी एक एक पद के साथ अर्थ को रखती हुई सात छन्दों में-मन्त्रों में ज्ञान यज्ञ तथा अध्यात्म यज्ञ से प्रकाशित होती है। जिसका भिन्न-भिन्न देशों में ऋषियों द्वारा प्रचार हो जाता है ॥ ३ ॥

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं१वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४ ॥**

उत । त्वः । पश्यन् । न । ददर्श । वाचम् । उत । त्वः । शृण्वन् । न । शृणोति । एनाम् । उतो इति । त्वस्मै । तन्वम् । वि । सस्रे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( उत त्वः-वाचं पश्यन्-न ददर्श ) अपि चैको वाचं लिपिरूपां दृष्ट्या पश्यन् न पश्यति लिपेर्ज्ञानाभावात् "त्वः-एकः" [ निरु॰ १ । २० ] ( उत त्वः-एनां शृण्वन् न शृणोति ) अपि चैकः शब्दरूपामेनां वाचं श्रोत्रेण शृण्वन् न शृणोति शब्दानां बोधाभावात् ( उतो त्वस्मै तन्वंविसस्रे ) अप्येकस्मै स्वात्मानम् "आत्मा वै तनुः" [ श॰ ६ । ७ । २ । ६ ] विवृणुते-उद्घाटयति ज्ञान कारणात् ( पत्ये जाया-इव-उशती सुवासाः ) पत्ये या जाया कल्याणवस्त्रा कामयमाना-गार्हस्थ्य-धर्मस्यावसरे स्वशरीरं विवृणुते-उद्घाटयति । तद्वदित्यर्थः ॥ ४ ॥

भाषान्वयार्थ—( उत त्वः ) तथा कोई एक ( वाचं पश्यन् ) लिपिरूप वाणी को आंख से देखता हुआ ( न पश्यति ) नहीं देखता है लिपि का ज्ञान न होने से ( उत-त्वः ) तथा कोई एक ( एनां शृण्वन् ) इस शब्दरूप वाणी को सुनाता हुआ ( न शृणोति ) नहीं सुनता है, अर्थ ज्ञान न होने से ( उत-उ-त्वस्मै ) और किसी एक के लिए ( तन्वं विसस्रे ) अपने आत्मा को खोल देती है—प्रकट करती है, ज्ञान के कारण से ( पत्ये जाया-इव ) पति के लिये पत्नी जैसे ( उशती सुवासाः ) अच्छे वस्त्र धारण किये हुए गृहस्थ धर्म की कामना करती हुई अपने शरीर को खोल देती है प्रकट करती है ॥ ४ ॥

भावार्थ—वाणी को लिपिरूप में देखता हुआ भी लिपि ज्ञान रहित नहीं देखता है और कोई अर्थज्ञान शून्य कानों से वाणी को सुनता हुआ नहीं सुनपाता किन्तु ज्ञानवान् मनुष्य के लिए वाणी अपने सार्थ स्वरूप को ऐसे खोल कर रखती है, जैसे कोई सुभूषित स्त्री अपने को खोलकर रख देती है गृहस्थ सुख के लिए ॥ ४ ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥

उत । त्वम् । सख्ये । स्थिरऽपीतम् । आहुः । न । एनम् । हिन्वन्ति । अपि । वाजिनेषु । अधेन्वा । चरति । मायया । एषः । वाचम् । शुश्रुऽवान् । अफलाम् । अपुष्पाम् ॥ ५ ॥

संस्कृतान्वयार्थः—( उत त्वं सख्ये ) अप्येकमर्थज्ञं वाक्सख्ये-वाचासह ज्ञानेन-तादृभाव्यं प्राप्ते देवसख्ये वा ( स्थिरपीतम्-आहुः ) स्थिरं स्वात्मनि धारितं कथयन्ति ( वाजिनेषु-एनं न-अपि हिन्वन्ति ) वाज्-इनेषु मन्त्र वाचो ये इनाः स्वामिनो देवास्तेषु यद्वा वाग्ज्ञेयेषु प्रसङ्गेषु केऽपि न प्राप्नुवन्ति (अधेन्वा मायया-एष चरति) वाक्प्रतिरूपया धेनुरूपयेव चरति विचरति पठति ( वाचम्-अफलाम्-अपुष्पां शुश्रुवान् ) यो वाचं पुष्पफलरहितामर्थशून्यां श्रुतवान् ॥ ५ ॥

भाषान्वयार्थ—( उत त्वं सख्ये ) किसी एक अर्थ जानने वाले—वाणी के साथ ज्ञान से समानता को प्राप्त कर लेने पर या विद्वानों के साथ मित्रता प्राप्त कर लेने पर ( स्थिर पीतम्-आहुः ) स्वात्मा में धारण किया हुआ कहते हैं ( वाजिनेषु ) वाणी के स्वामी विद्वानों में या वाणी के ज्ञान प्रसङ्गों में ( एनं-न-अपि हिन्वन्ति ) इसे कोई भी नहीं प्राप्त करते ( अधेन्वा मायया-एष चरति ) वाणी के प्रतिरूप वाणी जैसी के साथ विचरता है उसे ऐसे ( वाचम्-अफलाम्-अपुष्पां शुश्रुवान् ) जो वाणी को पुष्प फलरहित अर्थात् अर्थशून्य सुनता है ॥ ५ ॥

भावार्थ—जो वाणी के साथ अर्थ ज्ञान से मित्रता बनाता है अथवा विद्वानों से वाणी के अर्थों को जानता है उसे वाणी के लाभ को प्राप्त हुआ कहते हैं और जो वाणी के अर्थ को नहीं जानता वह केवल शब्द रूप बोलता है । वह वाणी के प्रतिरूपक काष्ठ की गौ के समान व्यवहार करता है ॥ ५ ॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥

यः । तित्याज । सचिऽविदम् । सखायम् । न । तस्य । वाचि । अपि । भागः । अस्ति । यत् । ईम् । शृणोति । अलकम् । शृणोति । नहि । प्रऽवेद । सुऽकृतस्य । पन्थाम् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( यः सचिविदं सखायं तित्याज ) यो जनः सहायतां प्रापयितारं "षच समवाये" [ भ्वादि० ] ततः इन् औणादिकः सखि भूतं वेदं त्यजति ( तस्य वाचि-अपि भागः-न-अस्ति ) तस्य कथनेऽपि कथनलाभो न भवति ( यत्-ईम् शृणोति-अलकं शृणोति ) यत्खलु शृणोति पठति सो अलीकं तुच्छं शृणोति "ईकारस्थाने ऽकारश्छान्दसः ( सुकृतस्यपन्थां नहि प्रवेद ) वास्तविकस्य लाभस्य पन्थानं न प्रवेत्ति ॥ ६ ॥

**भाषान्वयार्थ**—( यः ) जो जन ( सचिविदं सखायम् ) सहायता देने वाले साथी मित्र रूप वेद को ( तित्याज ) त्यागता है ( तस्य ) उसका ( वाचि-अपि ) वाणी में—कथन में भी ( भागः-नअस्ति ) लाभ नहीं होता है ( यत्-ईम्-शृणोति ) जो वह सुनता है, पढ़ता है ( अलकं शृणोति ) अलीक—तुच्छ सुनता है, पढ़ता है ( सुकृतस्य पन्थाम् ) वास्तविक ज्ञान के मार्ग को ( नहि प्रवेद ) नहीं जानता है ॥ ६ ॥

**भावार्थ**—वेद मानव का सच्चा साथी है वह विपत्ति और सम्पत्ति दोनों को सुझाता है जो इसे त्याग देता है उसके कथन में और सुनने में कुछ सार नहीं है। वह मानव जीवन के मार्ग से विचलित रहता है ॥ ६ ॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदाइव स्नात्वा उ त्वे ददृश्रे ॥ ७ ॥

अक्षण्ऽवन्तः । कर्णऽवन्तः । सखायः । मनःऽजवेषु । असमाः । बभूवुः । आदघ्नासः । उपऽकक्षासः । ऊँ इति । त्वे । ह्रदाःऽइव । स्नात्वाः । ऊँ इति । त्वे । ददृश्रे ॥ ७ ॥

**संस्कृतान्वयार्थः**—( अक्षण्वन्तः कर्णवन्तः सखायः ) अक्षिमन्तः कर्णवन्तः समानख्यानाः समानरूपाः सन्तः ( मनो जवेषु-असमाः- बभूवुः ) मनसो वेगेषु व्यापारेषु खल्वसमानाः-भिन्न भिन्न प्रवृत्तयो भवन्ति, तत्र ( आदघ्नासः ) आस्यदघ्नाः-मुखप्रमाणाः ( उपकक्षासः ) कक्षापर्यन्तप्रमाणाः ( उ त्वे ) एके खलु ( ह्रदा-इवस्नात्वाः-ददृश्रे ). जलाशये यथा स्नातुं योग्या एके दृश्यन्ते। इति ज्ञानवतां गतयः ॥ ७ ॥

**भाषान्वयार्थ**—( अक्षण्वन्तः कर्णवन्तः सखायः ) आंखवाले कानवाले समानरूप वाले होते हुए ( मनोजवेषु ) मन के वेगों–व्यापारों में ( असमाः बभूवुः ) असमान अर्थात् भिन्न भिन्न प्रवृत्ति वाले होते हैं, उनमें ( आदघ्नासः ) मुख प्रमाण वाले ( उपकक्षासः ) कक्षाप्रमाण वाले ( उ त्वे ) कुछ एक ( ह्रदा-इव स्नात्वाः दद्दश्रे ) जलाशय में जैसे स्नान करने योग्य दिखलायी पड़ते हैं, ये ज्ञानवाले मनुष्यों की गतियां हैं ॥ ७ ॥

**भावार्थ**—आंख वाले कानवाले बाहरी आकृति में समान दीखते हुए भी मन के वेगों अर्थात् मानसिक विचारों प्रवृत्तियों में भिन्न भिन्न होते हैं भिन्न भिन्न ज्ञान के कारण जैसे किसी एक जलाशय में किसी मनुष्य के कक्षा तक पानी आता है किसी के मुख तक कोई पूरा डूब जाता है भिन्न भिन्न शरीरों के कारण । इसी प्रकार ज्ञान की भिन्न भिन्न गतियां हैं ॥ ७ ॥

ह्रदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो विचरन्त्यु त्वे ॥ ८ ॥

ह्रदा । तष्टेषु । मनसः । जवेषु । यत् । ब्राह्मणाः । सम्ऽयजन्ते । सखायः । अत्र । अह । त्वम् । वि । जहुः । वेद्याभिः । ओहऽब्रह्माणः । वि । चरन्ति । ऊँ इति । त्वे ॥ ८ ॥

**संस्कृतान्वयार्थः**—( मनसः-जवेषु ) मनसां प्रजवेषु मनांसि प्रजवन्ति मननं कुर्वन्ति येषां तेषु वेदार्थेषु, तदा ( ह्रदा तष्टेषु ) हृदयस्थबुद्ध्या निष्पादितेषु निदिध्यासितेषु वेदार्थेषु ( सखायः-ब्राह्मणाः ) समानख्यानाः समानज्ञानवन्तो ब्राह्मणाः ( संयजन्ते ) वेदार्थेषु सङ्गच्छन्ते वेदार्थेषु साङ्गत्यं भजन्ते ( अत्र-अह-त्वं विजहुः ) अत्र वेदार्थ ज्ञानप्रसङ्गेऽसखायमब्राह्मणमज्ञातारं खलु ते विद्वांसः सङ्गताः सर्वथा त्यजन्ति तं नाद्रियन्ते, यतः ( वेद्याभिः-त्वे-ओहब्रह्माणः-विचरन्ति-उ ) वेदितव्याभिः प्रवृत्तिभिरेके येषामूहमूहनीयं ब्रह्म वेदज्ञानं ते वेदार्थज्ञानेषु नितान्तं विचरन्ति-प्रविशन्ति । अर्थोऽयं निरुक्तानुसारी [ निरु० १३ । १३ ] ॥ ८ ॥

**भाषान्वयार्थ**—( मनसः-जवेषु ) मन के वेगों में ( ह्रदा तष्टेषु ) हृदयस्थबुद्धि से निष्पादितनिश्चित किये हुये वेदार्थों में ( सखायः-ब्राह्मणाः ) समान ज्ञान वाले विद्वान् ( संयजन्ते ) सङ्गति को प्राप्त होते हैं ( अत्र-अह-त्वं विजहुः ) इस ज्ञान प्रसङ्ग में उस असखा–अब्राह्मण–अज्ञानी को विद्वान् लोग सर्वथा त्याग देते हैं उसे आदर नहीं देते हैं क्योंकि ( वेद्याभिः ) वेदितव्य-प्रवृत्तियों द्वारा ( त्वे-ओहब्रह्माणः ) कुछ एक ऊहनीय तर्कनीय वेदज्ञान जिनका है वे ऐसे ( विचरन्ति-उ ) वेदार्थ ज्ञान में विचरते है–प्रवेश करते हैं ॥ ८ ॥

**भावार्थ**—वेद का ज्ञान पवित्र मन और तीक्ष्ण बुद्धि द्वारा साक्षात् होता है, जो ऊहा करने वाले विद्वान् हैं वे उसमें प्रवेश करते हैं अन्य अज्ञानी नहीं ॥ ८ ॥

इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९ ॥

इमे । ये । न । अर्वाक् । न । परः । चरन्ति । न । ब्राह्मणासः । न । सुतेऽकरासः । ते । एते । वाचम् । अभिपद्य । पापया । सिरीः । तन्त्रम् । तन्वते । अप्रऽजज्ञयः ॥ ९ ॥

**संस्कृतान्वयार्थः**—( इमे ये ) एते ये ( अर्वाङ् न परः-न चरन्ति ) अवरलोक शास्त्रं न तथा परलोकशास्त्रमध्यात्मशास्त्रं न चरन्ति-आचरन्ति-जानन्ति ( ब्राह्मणासः-न ) ते ब्राह्मणा न ( सुतेकरासः-न ) उपासनारसनिष्पादका न भवन्ति ( ते-एते पापया वाचम्-अभिपद्य ) ते खल्वेतेऽज्ञानरूपपापभावनया वाचं प्राप्यापि न सम्यक्फलं प्राप्नुवन्ति किन्तु ( अप्रजज्ञयः ) असम्यग्ज्ञानिनः-यथार्थ ज्ञानरहिताः "प्र पूर्वकात्-ज्ञा धातोः किः प्रत्ययः" "आदृगमहनजनः किकिनौ लिट् च" [ अष्टा० ३ । २ । १७१ ] सन्त ( सिरीः-तन्त्रं तन्वते ) बन्धनरूपनाडीमन्तः सन्तः "सिरासु बन्धनरूपासु नाडीषु" [ ऋ० १ । १२६ । ११ दयानन्दः ] "छन्दसीवनिपौ मत्वर्थे वाः" कुटुम्बं सन्तानवंशम्" तन्त्रं कुटुम्बधारणम्" [ यजु० १६ । ८७ दयानन्दः ] विस्तारयन्ति यद्वा शरीरमेव वर्धयन्ति ॥ ९ ॥

**भाषान्वयार्थ**—( इमे ये ) ये जो ( अर्वाङ्-न परः-न चरन्ति ) इस लोक के शास्त्र को नहीं वैसे परलोकशास्त्र–अध्यात्मशास्त्र को नहीं जानते हैं ( ब्राह्मणासः-न ) वे ब्राह्मण नहीं हैं ( सुतेकरासः-न ) उपासनारसनिष्पादक भी नहीं है ( ते-एते प्रापया वाचम्-अभिपद्य ) वे ये अज्ञानरूप पापभावना से वेदवाणी को प्राप्त करके भी अच्छा फल नहीं प्राप्त करते हैं, किन्तु ( अप्र-जज्ञयः ) अयथार्थ ज्ञानी–यथार्थज्ञान रहित होते हुए ( सिरीः-तन्त्रं-तन्वते ) बन्धन रूप नाडी वाले कुटुम्ब–सन्तान वंश का विस्तार करते हैं या अपने शरीर को बढ़ाते हैं ॥ ९ ॥

**भावार्थ**—जो मनुष्य इस लोक के शास्त्र को नहीं जानते तथा न परलोकशास्त्र अर्थात् अध्यात्मशास्त्र को जानते हैं वे नं ब्राह्मण हैं न उपासक हैं किन्तु अज्ञानरूप पाप से युक्त हुए केवल सन्तान वंश का या अपने शरीर का ही विस्तार करते हैं ॥ ९ ॥

सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ।
किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥ १० ॥

सर्वे । नन्दन्ति । यशसा । आऽगतेन । सभाऽसहेन । सख्या । सखायः । किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषाम् । अरम् । हितः । भवति । वाजिनाय ॥ १० ॥

संस्कृतान्वयार्थः—( सर्वे सखायः ) सर्वे समानख्यानाः-वेद ज्ञानेनसमानाः-विद्वांसः ( सभासहेन ) सभां विद्वत्सभां यः सहते तत्र ज्ञान प्रावल्येन प्रभावयति तेन ( यशसा ) यशस्विना "मतुब्लोपश्छान्दसः" ( आगतेन ) प्राप्तेन ( सख्या ) समानख्यानवता वेदज्ञानहस्तगतेन महाविदुषा ( नन्दन्ति ) आनन्दमनुभवन्ति ( किल्बिषस्पृत्-पितुषणिः ) एतेषां मध्ये पापकारिणा सह स्पर्द्धते स किल्विषस्पृत्-ज्ञानान्नं सम्भाजकः "पितुः-अन्ननाम" [ निघ० २ । ७ ] ( वाजिनाय-अरं भवति ) वाग्ज्ञेयाय "वाजिनेषु वाग्ज्ञेयेषु" [ निरु० १ । २० ] समर्थो भवति ॥ १० ॥

भाषान्वयार्थ—( सर्वे सखायः ) ज्ञान से समानयोग्यता वाले विद्वानों ( सभासहेन ) विद्वत्सभा को प्रभावित करने वाले ज्ञान से ( यशसा ) यशस्वी ( आगतेन ) प्राप्त—सख्या समानख्यान वाले-वेदज्ञान हस्तगत जिसके है ऐसे महान् विद्वान् के द्वारा ( नन्दन्ति ) आनन्द को अनुभव करते हैं इनके मध्य में ( किल्बिषस्पृत् पितुषणिः ) पापकारी के साथ स्पर्धा करता है ज्ञानान्नसम्भाजक ( वाजिनाय-अरं भवति ) वाग्ज्ञेय के लिये समर्थ होता है ॥ १० ॥

भावार्थ—जो मनुष्य वेदज्ञान के द्वारा विद्वानों की सभा को प्रभावित करता है, अन्य विद्वानों की योग्यता से लाभ उठाता है, अज्ञानरूप पाप से संघर्ष करता है वह वेदवाणी के ज्ञान में समर्थ होता है ॥ १० ॥

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥ ११ ॥

ऋचाम् । त्वः । पोषम् । आस्ते । पुपुष्वान् । गायत्रम् । त्वः । गायति । शक्वरीषु । ब्रह्मा । त्वः । वदति । जातऽविद्याम् । यज्ञस्य । मात्राम् । वि । मिमीते । ऊँ इति । त्वः ॥ ११ ॥

संस्कृतान्वयार्थः—( त्वः ) एकोविद्वान् ( ऋचां पोषं पुपुष्वान्-आस्ते ) ऋङ्मन्त्राणां पोषं ज्ञानं प्रवर्धनमनूपतिष्ठते ( त्वः ) एकः ( शक्वरीषु गायत्रं गायति ) शक्तिमतीषु गीतिष्वृक्षु "शक्वर्यः शक्तिमत्यः" [ यजु० १० । ४ दयानन्दः ] गातव्यं स्तोतव्यं परमात्मानं गायति स्तौति ( त्वः-उ यज्ञस्य मात्रां विमिमीते ) एकः खलु विद्वान् यजनीयस्य देवपूजासङ्गतिकरण दानस्य भागमवयवं सरणिं वा विशिष्टतया धारयति ( त्वः ) एकः ( ब्रह्मा जातविद्यां वदति ) ब्रह्मा चतुर्वेदवेत्ता "ब्रह्मा चतुर्वेदविज्जनः" [ ऋ० १ । १६४ । ३५ दयानन्दः ] वेदेषु प्रसिद्धां विद्यां प्रवदति ॥ ११ ॥

भाषान्वयार्थ—( त्वः ) एक विद्वान् ( ऋचां पोषं पुपुष्वान्-आस्ते ) ऋग्मन्त्रों के पोष—ज्ञान को लेकर विराजता है ( त्वः ) कोई एक ( शक्वरीषु गायत्रं गायति ) शक्तिवाली ऋचाओं में गातव्य स्तोतव्य परमात्मा को गाता है स्तुति में लाता है ( त्वः-उ ) कोई एक विद्वान् ( यज्ञस्य

  

मात्रां विभिमीते ) यजनीय के भाग-अवयव सरणि को विशेषरूप से निर्धारित करता है ( त्वः ) एक विद्वान् (ब्रह्मा जातविद्यां वदति) चतुर्वेदवेत्ता वेदों में प्रसिद्ध विद्या का प्रवचन करता है ॥११॥

**भावार्थ**—वेदों में निष्णात विद्वान् कोई ऋग्मन्त्रों के ज्ञान का प्रवचन करता है कोई गाने योग्य मन्त्रों से परमात्मा का गुण गान करता है कोई मन्त्रों से यज्ञ की सरणि का विधान करता है और कोई चारों वेदों का वेत्ता वेदों की प्रसिद्धविद्या का व्याख्यान करता है ॥ ११ ॥



# द्वासप्ततितमं सूक्तम्

ऋषिः—आङ्गिरसो लौक्यो वा बृहस्पतिः, द्राक्षापर्णी अदितिर्वा ।

देवता—देवाः ।

छन्दः—१, ४, ६, अनुष्टुप् २ पादनिचृत् त्रिष्टुप् ३, ५, ७ निचृदनुष्टुप् ८, ९ विराडनुष्टुप् ।

विषयः— अस्मिन् सूक्ते परमात्मना क्रमशः सृष्टिरचनं कृतमित्युपदिश्यते सृष्टिपदार्थानां लाभः कथं ग्राह्य इत्यपि चोपदिश्यते ।

इस सूक्त में परमात्मा द्वारा क्रमशः सृष्टिरचन तथा सृष्टि के पदार्थों का लाभ कैसे ग्रहण करना चाहिए इत्यादि उपदेश है ।

देवानां नु वयं जाना प्र वोचाम विपन्यया ।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥ १ ॥

देवानाम् । नु । वयम् । जाना । प्र । वोचाम । विपन्यया । उक्थेषु । शस्यमानेषु । यः । पश्यात् । उत्ऽतरे । युगे ॥ १ ॥

**संस्कृतान्वयार्थः**—(वयम्) अहं खलु (देवानां जाना) दिव्यपदार्थानां प्रादुर्भावान् "जनी प्रादुर्भावे" [दिवा०] ततो घञ्प्रत्ययः शसः स्थाने "सुपांसुलुक्पूर्वसवर्णा०" [अष्टा० ७ । १ । ३९] आकारादेशः (विपन्यया) विशेषेण पण्यया प्रज्ञया क्रियया वा "विपन्यया विशेषेण स्तुत्या प्रशंसितया प्रज्ञया क्रिया वा" [ऋ० ३ । २८ । ५ दयानन्दः] (नु प्रवोचाम) प्रवच्मि प्रकाशयामि 'उभयत्र बहुवचनमेकस्मिन्' 'अस्मदो द्वयोश्च' [अष्टा० १ । २ । ५९] (शस्यमानेषु-उक्थेषु) वर्ण्यमानेषु वेदवचनेषु मन्त्रेषु ये वर्णिताः सन्ति (यः पश्यात्-उत्तरे युगे) यो बृहस्पतिः-वेदविद्यास्वामीपरमात्मा पश्यति दर्शयति 'अन्तर्गतोणिजर्थः'-उत्तरे युगे क्रमशः पश्चात् काले च प्रादुर्भावाद्ये भवन्ति तानपि दर्शयति ॥ १ ॥

**भाषान्वयार्थ**—(वयम्) मैं (देवानां जाना) दिव्य पदार्थों के प्रादुर्भावों–उत्पत्तिक्रमों को (विपन्यया) विशेष स्तुति बुद्धि या क्रिया से (नु प्रवोचाम) अवश्य प्रवचन करता हूँ

( शस्यमानेषु-उक्थेषु ) उच्चारणयोग्य वेदवचनों में जो वर्णित हैं ( यः पश्यात् ) जो बृहस्पति परमात्मा दर्शाता है ( उत्तरे युगे ) अगले समय में ॥ १ ॥

भावार्थ—परमात्मा दिव्य पदार्थों के उत्पत्ति क्रमों को वेदों में उत्तरोत्तर क्रम से जो वर्णन करता है उनका विद्वान् उपदेश करें ॥ १ ॥

ब्रह्मणस्पतिरेता सं कुर्मारइवाधमत् ।
देवानां पूर्व्ये युगेऽसतः सदजायत ॥ २ ॥

ब्रह्मणः । पतिः । एता । सम् । कुर्मारःऽइव । अधमत् । देवानाम् । पूर्व्ये । युगे । असतः । सत् । अजायत ॥ २ ॥

संस्कृतान्वयार्थः—( ब्रह्मणः-पतिः ) ब्रह्माण्डस्यपालकः पतिश्च ( कर्मारः-इव-एता समधमत् ) शिल्पी लोहकार इव एतान् 'आकारादेशः' प्रादुर्भावरूपानङ्कुरान् सन्तापयति ( देवानां पूर्व्ये युगे ) दिव्यगुणानामादित्यादीनां पूर्वभवेकाले ततः ( असतः-सत्-अजायत ) अव्यक्तादुपादानाद् व्यक्तं सदात्मकं विकृतरूपं जायते ॥ २ ॥

भाषान्वयार्थ—( ब्रह्मणः-पतिः ) ब्रह्माण्ड का पालक तथा स्वामी परमात्मा ( कर्मारः-इव ) लोहकार शिल्पी के समान ( एता समधमत् ) इन प्रादुर्भावरूप अंकुरों को सन्तापितकरता है ( देवानां पूर्व्ये युगे ) दिव्यगुणवाले सूर्यादि के पूर्व होने वाले काल में ( असतः-सत्-अजायत ) अव्यक्त उपादान से व्यक्त विकृतरूप जगत् उत्पन्न होता है ॥ २ ॥

भावार्थ—ब्रह्माण्ड का स्वामी परमात्मा अव्यक्त प्रकृति से व्यक्त जगत् को उत्पन्न करता है। प्रथम प्रादुर्भूत होने वाले परमाणु रूप अङ्कुरों को तपाता है पुनः दिव्यगुण वाले सूर्यादि पदार्थों को उत्पन्न करता है ॥ २ ॥

देवानां युगे प्रथमेऽसतः सदजायत ।
तदाशा अन्वजायन्त तदुत्तानपदस्परि ॥ ३ ॥

देवानाम् । युगे । प्रथमे । असतः । सत् । अजायत । तत् । आशाः । अनु । अजायन्त । तत् । उत्तानऽपदः । परि ॥ ३ ॥

भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त ।
अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥ ४ ॥

भूः । जज्ञे । उत्तानऽपदः । भुवः । आशाः । अजायन्त । अदितेः । दक्षः । अजायत । दक्षात् । ऊँ इति । अदितिः । परि ॥ ४ ॥

अनयोर्मन्त्रयोरेकवाक्यताऽस्त्यतः सहैव व्याख्यायेते—

**संस्कृतान्वयार्थः**—( देवानां प्रथमे युगे-असतः सत्-अजायत ) दिव्यगुणानां सूर्यादीनां प्रथमेकाले-अव्यक्तात्-सदात्मकं व्यक्तरूपं जायते ( तत् परि-उत्तानपदः ) तत्पश्चात् खलु व्यक्तात्मकाद्विकृतेः-उत्तानपदः-संसारवृक्षो जायते (ततः-आशाः-अजायन्त) उत्तानपदः-संसारवृक्षात् खल्वाशा-दिशो जायन्ते "आशा दिङ्नाम" [ निघ० १ । ६ ] ( उत्तानपदः-भूः-जज्ञे ) संसारवृक्षादनुभूमिः-पृथिवीलोकोजायते ( भुवः-आशाः-अजायन्त) पृथिवीलोकात्-आशावन्तो जनाः जायमानाः प्राणिनो जायन्ते, एवम् ( अदितेः-दक्षः-दक्षाद्-उ-अदितिः परि ) अखण्डितेरग्नेः सूर्योऽग्निः खण्डो जायते, सूर्यादनन्तर-मदितिरुषा प्राक्तनी जायते ॥ ३, ४ ॥

**भाषान्वयार्थ**—( देवानां प्रथमे युगे ) दिव्यगुण वाले सूर्यादि के प्रथम सृष्टि काल में ( असतः सत्-अजायत ) अव्यक्त उपादान प्रकृति से सत्-व्यक्तरूप जगत् उत्पन्न होता है ( तत्परि-उत्तानपदः ) उसके पश्चात् व्यक्त विकृति से उत्तानपद-संसारवृक्ष उत्पन्न होता है ( ततः-आशा-अजायन्त ) फिर संसार वृक्ष से दिशायें उत्पन्न हुई हैं ( उत्तानपदः-भूः-जज्ञे ) संसार वृक्ष से पृथिवी लोक उत्पन्न होता है ( भुवः-आशाः-अजायन्त ) पृथिवीलोक से आशा वाले-कामना वाले प्राणी उत्पन्न हुए इस प्रकार ( अदितेः-दक्षः ) अखण्ड अग्नि से खण्डरूप सूर्य उत्पन्न हुआ ( दक्षात्-उ-अदितिः-परि ) सूर्य से उषा उत्पन्न होती है ॥ ३, ४ ॥

**भावार्थ**—अव्यक्त उपादान प्रकृति से व्यक्त विकृति रूप उत्पन्न होता है फिर संसार उत्पन्न होता है पुनः दिशायें प्रकट होती हैं पश्चात् पृथिवी लोक, पृथिवी लोक से कामना वाले प्राणी उत्पन्न होते हैं। इसी प्रकार आरम्भसृष्टि में अखण्ड अग्नि से सूर्य और सूर्य से उषा का प्रकाश होता है ॥ ३, ४ ॥

**अदि॑ति॒र्ह्यज॑निष्ट॒ दक्ष॒ या दु॑हि॒ता तव॑ ।**
**तां दे॒वा अन्व॑जायन्त भ॒द्रा अ॒मृत॑बन्धवः ॥ ५ ॥**

**अदि॑तिः । हि । अज॑निष्ट । दक्ष॑ । या । दु॒हि॒ता । तव॑ । ताम् । दे॒वाः । अनु॑ । अ॒जा॒य॒न्त॒ । भ॒द्राः । अ॒मृत॑ऽबन्धवः ॥ ५ ॥**

**संस्कृतान्वयार्थः**—( दक्ष या-अदितिः-तव दुहिता-अजनिष्ट ) हे दक्ष-सूर्य ! या तव दुहितापुत्री खल्वदितिः-प्रभा-उषोरूपा जायते ( ताम्-अनु भद्राः-अमृतबन्धवः-देवाः-अजायन्त ) तामनुलक्ष्य कल्याणकारिणः-अमृतबन्धनास्तवामृतरूपस्य सम्बन्धिनः प्रकाशमाना रश्मयो जायन्ते ॥ ५ ॥

**भाषान्वयार्थ**—( दक्ष ) हे सूर्य ! ( या-अदितिः ) जो उषारूप प्रभा ( तव दुहिता ) तेरी पुत्री ( अजनिष्ट ) उत्पन्न होती है ( ताम्-अनु ) उसे लक्ष्य करके ( भद्राः-अमृतबन्धवः ) कल्याणकारी अमृत सम्बन्धी ( देवाः-अजायन्त ) प्रकाशमान रश्मियाँ उत्पन्न होती हैं ॥ ५ ॥

**भावार्थ**—सूर्योदय होने के पश्चात् आकाश में उषा-पीलिमा प्रथम प्रातःकाल प्रकाशित होती है पश्चात् प्रकाश करती हुई सूर्य की रश्मियाँ आतीं हैं यह प्रातःकाल का स्वरूप है ॥ ५ ॥

यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत ।
अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ॥ ६ ॥

यत् । देवाः । अदः । सलिले । सुऽसंरब्धाः । अतिष्ठत । अत्र । वः । नृत्यताम्ऽइव । तीव्रः । रेणुः । अप । आयत ॥ ६ ॥

**संस्कृतान्वयार्थः**—( देवाः-यत्-अदः सलिले ) हे प्रकाशमाना रश्मयः ! यदा अमुष्मिन् 'अदस् शब्दात्-'ङि' विभक्तेलुक्' "सुपां सुलुक्" [ अष्टा० ७ । १ । ३६ ] अन्तरिक्षे "सलिलस्य-अन्तरिक्षस्य" [ ऋ० ७ । ४६ । १ दयानन्दः ] ( सुसंरब्धाः-अतिष्ठत ) दृढत्वेन सम्यक् कार्ययुक्ताः स्थिता आसन् ( अत्र ) अस्मिन्नवसरे ( नृत्यताम्-इव वः ) नृत्यताम्-इव सर्वत्रविचरतां युष्माकम् ( तीव्रः-रेणुः-अपायत ) तीव्रः प्रभावशाली तापः-अपगच्छति लोकेष्वपसरति ॥ ६ ॥

भाषान्वयार्थ—( देवाः ) हे प्रकाशमान रश्मियो ! किरणो ! ( यत् ) जब ( अदः सलिले ) उस अन्तरिक्ष में ( सुसंरब्धाः-अतिष्ठत ) दृढ़ता से सम्यक् कार्य युक्त स्थिर हो जाते हैं । ( अत्र ) इस अवसर पर ( नृत्यताम्-इव वः ) नाचते हुए जैसे सर्वत्र विचरते हुए तुम्हारा ( तीव्रः-रेणुः-अपायत ) प्रभावशाली ताप पृथिवी आदि लोकों पर पड़ता है ॥ ६ ॥

भावार्थ—सूर्य की किरणें जब अन्तरिक्ष में दृढ़ हो जाती हैं तो सर्वत्र नाचती हुई सी सर्वत्र विचरती है तो इनका प्रभावशाली ताप पृथिवी आदि लोकों पर पड़ता है ॥ ६ ॥

यद्देवा यतयो यथा भुवनान्यपिन्वत ।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥ ७ ॥

यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत । अत्र । समुद्रे । आ । गूळ्हम् । आ । सूर्यम् । अजभर्तन ॥ ७ ॥

**संस्कृतान्वयार्थः**—( यत्-यथा यतयः-देवाः ) यतो यथा परस्परं सङ्गच्छमाना मेघाः "यतते गतिकर्मा" [ निघ० २ । १४ ] ( भुवनानि-अपिन्वत ) लोकान् जलवर्षणेन सिञ्चन्ति तथा ( अत्र समुद्रे ) अस्मिन्-अन्तरिक्षे "समुद्रः-अन्तरिक्षनाम" [ निघ० १ । ३ ] ( सूर्यम्:आगूळम् ) समन्तात् सृष्टेरारम्भे तमसा गूढं सूर्यम् ( अजभर्तन ) प्रकटयन्ति ॥ ७ ॥

**भाषान्वयार्थ**—( यत्-यथा यतयः-देवाः ) जबकि जैसे परस्पर संगत होते हुए मेघ ( भुवनानि-अपिन्वत ) जल वर्षा ने के द्वारा लोकों को सींचते हैं वैसे ( अत्र समुद्रे ) इस अन्तरिक्ष में ( सूर्यम्-आगूळम् ) सृष्टि के आरम्भ में अन्धकार से आच्छादित सूर्य को सूर्य की किरणें पृथक् कर प्रकट करती हैं ॥ ७ ॥

भावार्थ—मेघ परस्पर मिलकर वर्षा से लोकों को सींचते हैं सूर्य की किरणें सूर्य को प्रकाशित करतीं हैं ॥ ७ ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्व१स्परि ।
देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत् ॥ ८ ॥

अष्टौ । पुत्रासः । अदितेः । ये । जाताः । तन्वः । परि । देवान् । उप । प्र । ऐत् । सप्तऽभिः । परा । मार्ताण्डम् । आस्यत् ॥ ८ ॥

संस्कृतान्वयार्थः—( अदितेः-अष्टौ पुत्रासः ) अखण्डाग्नेरादिसृष्टौ वर्तमानस्याग्नेः-पुत्रा मित्रादयो यद्वा-उषसोऽष्टौ प्रहरनामानः ( तन्वः-परि जाताः ) तताया अनन्तरमेव प्रकटीभूताः ( सप्तभिः-देवान्-उपप्रैत् ) सप्तभिस्तु द्युलोकस्थान् गोलान् "देवो द्युस्थानो भवतीति वा" [ निरु० ७ । १ । १५ ] उपयोजयति ( मार्तण्डं परा-आस्यत् ) मार्तण्ड नामकं सूर्यं प्रहरं वाऽष्टमं प्रकटयति ॥ ८ ॥

भाषान्वयार्थ—( अदितेः ) आरम्भ सृष्टि में वर्तमान अखण्ड अग्नि के ( अष्टौ पुत्रासः ) मित्रादि आठपुत्र अथवा अदिति–उषा के आठप्रहर हैं ( तन्वः-परि जाता ) उस फैली हुई अग्नि या उषा के पश्चात् प्रकट हुए ( सप्तभिः-देवान्-उपप्रैत् ) सात लोकों या प्रहरों को उपयुक्त करती है ( मार्तण्डं परा-आस्यत् ) आठवें मार्तण्ड नामक सूर्य या प्रहर को प्रधान रूप से प्रकाशित करती है प्रकट करती है ॥ ८ ॥

भावार्थ—सृष्टि के आरम्भ में अखण्ड अग्नि से सूर्यादि खण्डरूप गोले उत्पन्न होते हैं प्रधान गोला मार्तण्ड नाम का है एवं प्रातःकाल की उषा से प्रहरों का विकास होता है ॥ ८ ॥

सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगम् ।
प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत् ॥ ९ ॥

सप्तऽभिः । पुत्रैः । अदितिः । उप । प्र । ऐत् । पूर्व्यम् । युगम् । प्रऽजायै । मृत्यवे । त्वत् । पुनः । मार्ताण्डम् । आ । अभरत् ॥ ९ ॥

संस्कृतान्वयार्थः—( सप्तभिः पुत्रैः-अदितिः ) सप्तभिः पुत्रैर्मित्रादिभिः, प्रहरैर्वाऽऽरम्भसृष्टौ भवोऽखण्डोऽग्निः प्रातस्तनी पुरातनी खलूषा वा ( पूर्व्यं युगम्-उपप्रैत् ) आरम्भसृष्टिकालं प्रातः-कालं वा–उपगच्छति उपगता भवति ( प्रजायै मृत्यवे त्वत् ) प्राणीमात्राय प्राणीमात्रस्य "षष्ठ्यर्थे चतुर्थी बहुलमित्यपि" मृत्यवे च अथापि समुच्चयार्थे त्वत् "पर्याय इव त्वदाश्विनं च" [ निरु० १।१० ] कालगणनया ( पुनः-मार्तण्डम्-आभरत् ) पुनः पुनरुदयमानं सूर्यं प्रातः कालकं प्रहरं वा धारयति ॥ ९ ॥

**भाषान्वयार्थ**—( सप्तभिः पुत्रैः-अदितिः ) सात पुत्रों मित्रादि सूर्यनामक या प्रहरों के द्वारा प्रारम्भ सृष्टि में होने वाले अखण्ड अग्नि या प्रातःकाल की उषा ( पूर्व्यं युगम-उपप्रैत् ) आरम्भ सृष्टि के समय को वा प्रातःकाल को उपगत होती है ( प्रजायै मृत्यवे त्वत् ) प्राणीमात्र के और मृत्यु के लिये ( पुनः-मार्तण्डम्-आभरत् ) पुनः पुनः उदय होते हुए सूर्य को या प्रातःकाल वाले प्रहर को धारण करती है ॥ ९ ॥

**भावार्थ**—आरम्भसृष्टि में अखण्ड अग्नि खण्डरूप मित्रादिनामक सूर्यभेदों से अथवा प्रातःकाल की उषा प्रहरों के साथ आती है प्रथम प्रथम सूर्य या प्रहरों को प्रकट करती है ॥ ९ ॥



# त्रिसप्ततितमं सूक्तम्

ऋषिः—गौरिवीतिः ।

देवता—इन्द्रः ।

छन्दः—१, २, ५ त्रिष्टुप् ३, ४, ८, १० पादनिचृत्त्रिष्टुप् ६ विराट् त्रिष्टुप् ७ आर्ची स्वराट् त्रिष्टुप् ९ आर्ची भुरिक् त्रिष्टुप् ११ निचृत् त्रिष्टुप् ।

विषयः—सूक्ते अस्मिन् राजधर्म उच्यते, राजा कथं राष्ट्रं चालयेत्-कथं च सभावर्गेण सेना वर्गेण च सह प्रजारक्षणं कुर्या-दित्यादयो विषयाः सन्ति ।

इस सूक्त में राजधर्म कहा गया है, राजा कैसे राष्ट्र चलावे और कैसे सभावर्ग से सेनावर्ग के साथ प्रजारक्षण करे इत्यादि विषय हैं ।

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ १ ॥

जनिष्ठाः । उग्रः । सहसे । तुराय । मन्द्रः । ओजिष्ठः । बहुलऽअभिमानः । अवर्धन् । इन्द्रम् । मरुतः । चित् । अत्र । माता । यत् । वीरम् । दधनत् । धनिष्ठा ॥ १ ॥

संस्कृतान्वयार्थः—( उग्रः ) उद्गूर्णबलः प्रतापी (मन्द्रः) हर्षप्रदः-आनन्ददाता ( ओजिष्ठः ) अतिशयेनौजस्वी बली ( बहुलाभिमानः ) बहुप्रकारेणात्मानमभिमन्यमानः-प्रतिष्ठावान् ( सहसे तुराय ) स्वसैन्यबलरक्षणाय तथा शत्रुबलस्य नाशाय ( जनिष्ठाः ) हे-इन्द्र राजन् ! त्वं जायसे ( इन्द्रं मरुतः-चित्-अवर्धन् ) त्वां राजानं सैनिकाः-अपि "असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना । तांविध्यत तमसापव्रतेन यथैषामन्यो अन्यं न जानात् ।" [ अथर्व ३ । २ । ६ ] महासेनाध्यक्षादय "मरुतः सेनाध्य-क्षादयः" [ ऋ० १ । ३७ । ११ दयानन्दः ] वर्धयन्ति ( अत्र माता यत्-वीरं दधनत्-धनिष्ठा ) अत्र राष्ट्रनिमित्तं यतस्त्वां वीरं धारयति सामाता राष्ट्रभूमिर्वा साऽतिधन्या "धनिष्ठा अतिशयेन धनिनी" [ यजु० ३। ६४ दयानन्दः ]॥ १ ॥

३

भाषान्वयार्थ—( उग्रः ) उभरे हुए बलवाला-प्रतापी ( मन्द्रः ) हर्षप्रद-आनन्ददाता ( ओजिष्ठः ) अत्यन्त ओजस्वी ( बहुलाभिमानः ) बहुत प्रकार से आत्म गौरव वाला-प्रतिष्ठावान् ( सहसे तुराय ) अपने सैन्यबल के रक्षण के लिये और शत्रुबल का नाश करने के लिये (जनिष्ठाः) हे राजन् ! तू उत्पन्न हुआ है ( इन्द्रं मरुतः-चित्-अवर्धन् ) तुझ राजा को सैनिक अथवा सेनाध्यक्षादि भी बढ़ाते हैं-बढ़ावा देते हैं ( अत्रमाता ) यहाँ राष्ट्र निमित्त तेरी माता या राष्ट्रभूमि ( यत्-वीरं-दधनत् ) जिससे कि तुझ वीर को धारण करती है ( धनिष्ठा ) वह अतिधन्य है या अतिधनी है ॥ १ ॥

भावार्थ—राजा प्रतापी स्वात्मगौरववाला अत्यन्त ओजस्वी अपने बल की रक्षा और शत्रुबल का नाश करने वाला उत्तम सैनिक और सेनाध्यक्षों से युक्त होना चाहिए ॥ १ ॥

द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इन्द्रम् ।
अभीवृतेव ता महापदेन ध्वान्तात्प्रपित्वादुदरन्त गर्भाः ॥ २ ॥

द्रुहः । निऽसत्ता । पृशनी । चित् । एवैः । पुरु । शंसेन । वृवृधुः । ते । इन्द्रम् । अभिवृताऽइव । ता । महाऽपदेन । ध्वान्तात् । प्रऽपित्वात् । उत् । अरन्त । गर्भाः ॥ २ ॥

संस्कृतान्वयार्थः—( द्रुहः-पृशनीनिषत्ताचित् ) शत्रूणां द्रोग्धूराज्ञः स्पर्शयित्री-सम्पृक्ता सेना नियताऽपि तथा ( एवैः ) तत्रसेनायां एवाः "विभक्तिव्यत्ययः" युद्धे गमन समर्थाः सैनिकाः ( ते-इन्द्रं पुरु शंसेन वावृधुः ) ते खलु राजानं बहुप्रकारेण प्रशंसनेन वर्धयन्ति ( ता-गर्भाः ) ताः 'जसो लुक्-लिङ्गव्यत्ययश्च' 'प्रजावैः पशवोगर्भः' [ श० १३ । २ । ८ । ५ ] ( प्रपित्वात्-ध्वान्तात्-उदरन्त ) प्राप्ताद्-आध्वस्तात् संकटात् "ध्वान्तमाध्वस्तम्" [ निरु० ४ । ३ ] खलूद्गमयन्ति अन्तर्गतोणिजर्थः (महापदेन-अभीवृता-इव) महदाश्रयेणाभिरक्षिता सती-इव पदपूरणे 'इवोऽपिदृश्यते' [ निरु० १ । १० ] ॥ २ ॥

भाषान्वयार्थ—( द्रुहः ) शत्रुओं के प्रति द्रोह करने वाले राजा की ( पृशनी ) स्पर्श करने वाली-संपृक्त सेना ( निषत्ताचित् ) नियत हुई भी, तथा ( एवैः ) उसमें, युद्ध में गमन समर्थ सैनिक ( ते ) वे ( इन्द्रम् ) राजा को ( पुरुशंसेन ) बहुतप्रशंसन से गुणगान से ( वावृधुः ) बढ़ाते हैं ( ता गर्भाः ) उन गर्भधारण करनेवाली प्रजाओं को ( प्रपित्वात्-ध्वान्तात् ) प्राप्त आध्वस्त-नष्ट करने वाले संकट से ( उदरन्त ) उठाते हैं ( महापदेन ) महान् आशय के द्वारा ( अभिवृता-इव ) अभिरक्षित रहती है ॥ २ ॥

भावार्थ—राजा की सेना में सैनिक जन युद्ध में सैनिक जन युद्ध में प्रगति शील शत्रुनाशक होवें। राजा की प्रजा को संकट से बचाने के लिये तत्पर रहे इस प्रकार महान् आश्रय पाने से प्रजा सुख से रहती है ॥ २ ॥

ऋष्वा ते पादा प्र यज्जिगास्यवर्धन्वाजा उत ये चिदत्र।
त्वमिन्द्र सालावृकान्त्सहस्रमासन्दधिषे अश्विना ववृत्याः ॥ ३ ॥

ऋष्वा। ते। पादा। प्र। यत्। जिगासि। अवर्धन्। वाजाः। उत। ये। चित्। अत्र। त्वम्। इन्द्र। सालावृकान्। सहस्रम्। आसन्। दधिषे। अश्विना। आ। ववृत्याः ॥ ३ ॥

संस्कृतान्वयार्थः—( इन्द्र ) हे राजन्! ( ते-ऋष्वा पादा ) तव सभावर्गः सेनावर्गश्च महान्तौ पादौ ( यत् ) यतः-याभ्यां ( जिगासि ) त्वंगच्छसि-राष्ट्रकार्ये प्रगतिं करोषि ( वाजाः-अवर्धन् ) त्वां ज्ञानबलवन्तो ज्ञानिनो बलवन्तश्च वर्धयन्ति ( उत-ये चित्-अत्र ) अत्रपादयोः-सभा सेनावर्गयोर्येऽपि सन्ति ( त्वम् ) त्वं खलु ( सहस्रं साला-वृकान्-आसन्-दधिषे ) बहून् शालायां वर्तमानान् कुक्कुरानिव 'शकारस्य सकारश्छान्दसः' यद्वा गतिस्थानेषु मार्गेषु शुन इव "षल गतौ" [ भ्वादि० ] स्वसुखे धारयसि ( अश्विना-आ-ववृत्याः ) स्वकीयौ-अश्ववन्तौ तौ वर्गौ-आवर्त्तय ॥ ३ ॥

भाषान्वयार्थ—( इन्द्र ) हे राजन्! ( ते-ऋष्वा पादा ) तेरे सभा वर्ग और सेना वर्ग दो महान् पैर हैं ( यत् ) जिनके द्वारा तू ( जिगासि ) राष्ट्र कार्य में प्रगति करता है ( वाजाः-अवर्धन् ) ये ज्ञानी और बलवान् हुए तुझे बढ़ाते हैं ( उत-ये चित्-अत्र ) और सभावर्ग तथा सेना वर्ग में जो भी जन हैं ( त्वम् ) तू ( सहस्रं सालावृकान् ) बहुत शाला में वर्तमान रक्षक कुत्तों के समान या गतिस्थान मार्गों में कुत्तों के समान अपने सुख के निमित्त तू धारण करता है ( अश्विना-आ-ववृत्याः ) अपने घोड़ों वाले दोनों वर्गों को भली-भांति कार्य में ले ॥ ३ ॥

भावार्थ—सभावर्ग और सेनावर्ग राष्ट्रपति के राष्ट्र में प्रगति करने के महान् साधन हैं इनके अन्दर जो सभासद् या सैनिक होते हैं वह घर के रक्षक प्रहरी कुत्तों के समान या मार्ग में रक्षक सुख के निमित्त होते हैं उनसे लाभ लेना चाहिए ॥ ३ ॥

समना तूर्णिरुप यासि यज्ञमा नासत्या सख्याय वक्षि।
वसाव्यामिन्द्र धारयः सहस्राश्विना शूर ददतुर्मघानि ॥ ४ ॥

समना। तूर्णिः। उप। यासि। यज्ञम्। आ। नासत्या। सख्याय। वक्षि। वसाव्याम्। इन्द्र। धारयः। सहस्रा। अश्विना। शूर। ददतुः। मघानि ॥ ४ ॥

संस्कृतान्वयार्थः—( इन्द्र ) राजन्! ( समना ) सङ्ग्रामे "समनं सङ्ग्राम नाम" [ निघ० २। १७ ] आकारादेशश्छान्दसः ( तूर्णिः ) त्वरमाणः सन् ( यज्ञम्-उप-

आयासि ) सेना सङ्गतिं प्राप्नोषि ( सख्याय नासत्या वक्षि ) सखिभावाय सहयोगाय-असत्य व्यवहाररहितौ सभासेनावर्गौप्रापयसि ( वसाव्यां धारयः ) अतिशयेन वसु प्राप्तौ विजयप्राप्तौ निर्धारय निश्चिनुहि ( अश्विना सहस्रा मघानि ददतुः ) यथा तौ त्वयासह व्याप्नुवन्तौ बहूनि धनानि प्रयच्छतः ॥ ४ ॥

भाषान्वयार्थ—( इन्द्र ) हे राजन् ! ( समना ) संग्राम में ( तूर्णिः ) शीघ्रकारी होता हुआ ( यज्ञम्-उप-आयासि ) सेना के सङ्गम को प्राप्त हो ( सख्याय नासत्या वक्षि ) मित्र भाव के लिये-सहयोग के लिये असत्य व्यवहार रहितों सभावर्ग, सेनावर्गों को तू प्राप्त होता है ( वसाव्यां धारयः ) अत्यन्त धन प्राप्ति-विजय प्राप्ति के सम्बन्ध में निश्चय कर ( अश्विना ) जैसे वे सभा वर्ग और सेना वर्ग दोनों तेरे साथ व्याप्त प्राप्त होने वाले (सहस्रा मघानि) बहुत धनों को (ददतुः) देते हैं ॥ ४ ॥

भावार्थ—राजा के संग्राम के लिये सभावर्ग और सेना वर्गों के साथ सहमति और संगति प्राप्त करके विजय पाता है ॥ ४ ॥

मन्दमान ऋतादधि प्रजायै सखिभिरिन्द्र इषिरेभिरर्थम् ।
आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत्तमांसि ॥ ५ ॥

मन्दमानः । ऋतात् । अधि । प्रजायै । सखिऽभिः । इन्द्रः । इषिरेभिः । अर्थम् । आ । आभिः । हि । मायाः । उप । दस्युम् । आ । अगात् । मिहः । प्र । तम्राः । अपवत् । तमांसि ॥ ५ ॥

संस्कृतान्वयार्थः—( इन्द्रः ) राजा ( मन्दमानः ) स राजा मन्दयमानो हर्षयन्-हर्षण हेतोः ( ऋतात्-अधि ) सत्य शासने ( प्रजायै ) प्रजाकल्याणाय ( इषिरेभिः ) प्रगतिशीलैरधिकारिभिः ( अर्थम् ) अर्थनीयं कल्याणं साधयति ( आभिः ) प्रजाभिः सह ( मायाः ) बुद्धीः "माया प्रज्ञानाम्" [ निघ० ३ । ६ ] ( उप ) उपमन्त्रय ( दस्युम्-आगात् ) क्षयकर्त्तारंशत्रुम्-आगच्छति-आक्राम्यति ( तम्राः-मिहः प्र ) कांक्षणीयाः सुखसेचनीवृष्टीः प्रक्रमते ( तमांसि-अवपत् ) दुःखाज्ञानानि नाशयति ॥ ५ ॥

भाषान्वयार्थ—( इन्द्रः ) राजा ( मन्दमानः ) हर्षित होता हुआ-हर्ष के हेतु ( ऋतात्-अधि ) सत्यशासन के निमित्त ( प्रजायै ) प्रजा कल्याणार्थ ( इषिरेभिः ) प्रगतिशील अधिकारियों के द्वारा ( अर्थम् ) अर्थनीय कल्याण को साधता है ( आभिः ) इन प्रजाओं के सहयोग से (मायाः) कार्य बुद्धियों को ( उप ) उपमन्त्रित करके-विचार कर ( दस्युम्-आगात् ) क्षयकर्त्ता शत्रु पर आक्रमण करता है ( तम्राः-मिहः प्र ) काङ्क्षणीय सुख सींचने वाली वृष्टियों को प्रारम्भ करता है प्रवाहित करता है ( तमांसि-अवपत् ) दुःखाज्ञान को नष्ट करता है ॥ ५ ॥

भावार्थ—राजा को अच्छा शासन करने के लिये राज्य के उच्चाधिकारियों के साथ प्रजा

के हितार्थं तथा प्रजाओं के साथ भी मन्त्रणा-विचार कर शत्रुपर आक्रमण करना चाहिए तथा अभीष्ट सुख वृष्टि करता हुआ दुःखाऽज्ञानादि को नष्ट करे ॥ ५ ॥

सनामाना चिद् ध्वसयो न्यस्मा अवाहन्निन्द्र उषसो यथानः ।
ऋष्वैरगच्छः सखिभिर्निकामैः साकं प्रतिष्ठा हृद्या जघन्थ ॥ ६ ॥

सऽनामाना । चित् । ध्वसयः । नि । अस्मै । अव । अहन् । इन्द्रः । उषसः । यथा । अनः । ऋष्वैः । आगच्छः । सखिऽभिः । निऽकामैः । साकम् । प्रतिऽस्था । हृद्या । जघन्थ ॥ ६ ॥

**संस्कृतान्वयार्थः**—( इन्द्रः ) राजा ( सनामाना चित् ) समाननामकैः '-आकारादेशश्छान्दसः" खल्वपि शासकैः सह ( निध्वसयः ) शत्रुं नियमयति स्वाधीनी करोति ( अस्मै ) इमं शत्रुम् "द्वितीयार्थे चतुर्थीव्यत्ययेन ( अवहन् ) अवहन्ति ( उषसः-यथा-अनः ) सूर्यो यथा ह्युषसः शकटं विस्तारं स्वाधीनौ करोति पुनश्च नाशयति ( ऋष्वैः सखिभिः-निकामैः-साकम्-आगच्छः ) महद्भिः शासकैः सेनाध्यक्ष्यैः सह स्वार्थहीनैः प्रजाकामैः राष्ट्रकामैः शासकैः सह गच्छ शत्रुंप्रति ( प्रतिष्ठा हृद्या जगन्थ ) हृद्यानि हृदिभवानि प्रतिष्ठनानि सुखफलानि प्राप्नुयाः '·जगन्थागच्छ" [यजु० १८ । ७१ दयानन्द] "अन्येषामपि दृश्यते" [ अष्टा० ६ । ३ । १३५ ] इति दीर्घः ॥ ६ ॥

**भाषान्वयार्थ**—( इन्द्रः ) राजा ( सनामाना चित ) समान नाम वाले शासकों के साथ ( निध्वसयः ) शत्रु को नियन्त्रित करता है-स्वाधीन करता है ( अस्मै ) इस शत्रु को ( अवहन् ) हिंसित करता है ( उषसः-यथा अनः सूर्य ) जैसे उषा के विस्तार को स्वाधीन करता है फिर नष्ट करता है ( ऋष्वैः सखिभिः ) महान् सहयोगी शासकों सेनाध्यक्षों-( निकामैः- साकम् ) स्वार्थहीन प्रजा की कामना तथा राष्ट्र की कामना करने वालों के साथ ( अगच्छः ) शत्रु के प्रति जा-आक्रमण कर ( प्रतिष्ठा हृद्या जगन्थ ) हृदय में होने वाले सुखफलों को प्राप्त कर ॥ ६ ॥

**भावार्थ**—राजा को चाहिए अपने ऊंचे अधिकारियों की सहायता से शत्रुओं को नियन्त्रित तथा शासित करे, जो अधिकारी स्वार्थ रहित तथा प्रजाहित राष्ट्र हित रखते हों उनके साथ अपने हार्दिक भावों को सफल करे ॥ ६ ॥

त्वं जघन्थ नमुचिं मखस्युं दासं कृण्वान ऋषये विमायम् ।
त्वं चकर्थ मनवे स्योनान्पथो देवत्राञ्जसेव यानान् ॥ ७ ॥

त्वम् । जघन्थ । नमुचिम् । मखस्युम् । दासम् । कृण्वानः । ऋषये । विऽमायम् । त्वम् । चकर्थ । मनवे । स्योनान् । पथः । देवऽत्रा । अञ्जसाऽइव । यानान् ॥७॥

**संस्कृतान्वयार्थः**—( त्वम् ) त्वं हे राजन् ! ( मखस्युं नमुचिम् ) परस्य मखं यज्ञं नाशयितुमिच्छन्तं "मखं यज्ञनाम" [ निघ० २ । १७ [ नमुचिं पापिनम् "पाप्मा वै नमुचिः" [ श० १२ । ७ । ३ । १ ] ( मन्यवे ऋषये विमायं दासं कृण्वानः-त्वं-जगन्थ ) मननीयाय द्रष्ट्र उपास्याय मायारहितं छलरहितं त्वं भृत्यमिव कुर्वन् त्वं यस्तं हंसि ( स्योनान् पथः-देवत्रा यानान्-अञ्जसा चकर्थ ) सुखमयान् देवेषु गन्तव्यान् मार्गान् देवयानान् तत्त्वतः "अञ्जसा तत्त्वशीघ्रार्थयोः" [ अव्ययार्थनिबन्धनम् ] करोषि ॥ ७ ॥

**भाषान्वयार्थ**—( त्वम् ) हे राजन् ! तू ( मखस्युम् ) यज्ञ को नष्ट करने के इच्छुक ( नमुचिम् ) पापीजन को तथा ( मनवे ऋषये ) तेरे मननीय द्रष्टा उपास्य ( विमायम् ) माया-रहित छलरहित तुझ को ( दासं ) भृत्य के समान ( कृण्वानः ) करता हुआ है उसे तू (त्वं जगन्थ) हनन करता है ( स्योनान् पथः ) सुखकारक मार्गों को ( देवत्रा ) देवों में-विद्वानों में ( अञ्जसा-चकर्थ ) यथार्थरूप से करता है बनाता है ॥ ७ ॥

**भावार्थ**—मननीय उपास्य द्रष्टा परमात्मा के लिए तुझ छलरहित के प्रति दासभावना करता है हीनभाव रखता है इस श्रेष्ठकर्म को नष्ट करने वाले को तू दण्ड देता है तथा विद्वानों का मार्ग परिष्कृत करता है ॥ ७ ॥

**त्वमेतानि पप्रिषे वि नामेशान इन्द्र दधिषे गभस्तौ ।**
**अनु त्वा देवाः शवसा मदन्त्युपरिबुध्नान्वनिनश्चकर्थ ॥ ८ ॥**

त्वम् । एतानि । पप्रिषे । वि । नाम । ईशानः । इन्द्र । दधिषे । गभस्तौ । अनु । त्वा । देवाः । शवसा । मदन्ति । उपरिऽबुध्नान् । वनिनः । चकर्थ ॥ ८ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे राजन् ! ( त्वम् ) त्वं खलु ( एतानि नाम ) इमानि शत्रून् नम्री कुर्वाणानि स्वसैन्यबलानि ( वि पप्रिषे ) विशिष्टतया पिपर्षि रक्षसि ( ईशानः-गभस्तौ दधिषे ) समर्थः स्वामी सन् स्वहस्तेऽपि वज्रं धारयसि ( देवाः ) विद्वांसो विजय कांक्षिणः ( शवसा ) स्वबलेन वर्तमानम् ( त्वा-अनुमदन्ति ) त्वामनु-हर्षन्ति ( उपरिबुध्नान् वनिनः-चकर्थ ) उत्कृष्टमूलान् बलवतोऽपि हिंसकान् शत्रून् नाशय ॥ ८ ॥

**भाषान्वयार्थ**—( इन्द्र ) हे राजन् ! ( त्वम् ) तू ( एतानि नाम ) इन शत्रुओं को नमाने वाली अपने सैन्य बलों को ( वि पप्रिषे ) विशेष रूप से सुरक्षित रखता है-रख ( ईशानः ) इनका स्वामी समर्थ होता हुआ ( गभस्तौ ) अपने हाथ में भी वज्र को ( दधिषे ) धारण करता है ( देवाः ) विजय चाहने वाले विद्वान् ( शवसा ) अपने बल से वर्तमान ( त्वा ) मुझे (अनुमदन्ति) हर्षित करते हैं ( उपरि बुध्नान् ) उत्कृष्ट दृढ़मूल वाले-बलवानों ( वनिनः ) हिंसकों को ( चकर्थ ) तू नष्ट करता है ॥ ८ ॥

भावार्थ—राजा शत्रुओं को नमाने वाले अपने सैन्य बलों की रक्षा करे तथा अपने हाथ में भी शस्त्र अस्त्र धारण करता है तो विजयाकांक्षी विद्वान् भी उसका साथ देते है फिर वह अति-बलवान् शत्रुओं को भी नष्ट करता हैं ॥ ८ ॥

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ९ ॥

चक्रम् । यत् । अस्य । अप्ऽसु । आ । निऽसत्तम् । उतो इति । तत् । अस्मै । मधु । इत् । चच्छद्यात् । पृथिव्याम् । अतिऽसितम् । यत् । ऊधः । पयः । गोषु । अदधाः । ओषधीषु ॥ ९ ॥

संस्कृतान्वयार्थः—( अस्य चक्रम् ) अस्य राज्ञो राष्ट्रम् "चक्रवद्वर्तमानं राज्यम्" [ ऋ० ४ । ३० । ४ दयानन्दः ] ( अप्सुआनिषत्तम् ) जलेषु-समन्तात् स्थितं भवतु ( उत-उ-अस्मै ) अपि तु खल्वस्मै राष्ट्राय ( तत्-मधु ) तत्रस्थं जलम् "मधु उदकनाम" [ निघ० १ । १२ ] ( इत्-चच्छद्यात ) अवश्यं राष्ट्रे बलम् प्रयच्छति "छदयत् बलयति" [ ऋ० ६ । ४९ । ५ दयानन्दः ] ( पृथिव्याम्-अतिषितम् ) भूमौ खलूद्घाटितमुत्पादितम् ( यत्-ऊधः ) यज्जलबन्धनम् "ऊधः-जलस्थानम्" [ ऋ० १ । १४६ । २ दयानन्दः ] ( पयः-गोषु-ओषधीषु-अदधाः ) तत्रत्यंजलम् "पयः-उदकनाम" [ निघ० १ । १२ ] क्षेत्रभक्तिषु तत्रौषधिषु धारय ॥ ९ ॥

भाषान्वयार्थ—( अस्य चक्रम् ) इस राजा का राष्ट्र ( अप्सु-आनिषत्तम् ) जलों में-नदी कुल्याओं के मध्य स्थित हो ( उत-उ-अस्मै ) अपितु इस राष्ट्र के लिए ( तत्-मधु ) वहां जल ( इत-चच्छद्यात् ) अवश्य राष्ट्र में बल देता है ( पृथिव्याम्-अतिषितम् ) भूमि में उद्घाटित तथा सींचा हुआ ( यत्-ऊधः ) जो जलबान्ध है ( पयः ) वहाँ का जल ( गोषु ओषधीषु ) खेत की क्यारियों में और वहाँ की ओषधियों में ( अदधाः ) धारण करे-पहुंचावे ॥ ९ ॥

भावार्थ—राजा का राष्ट्र नदियों नहरों से युक्त हो इससे राष्ट्र को बल मिलता है। राष्ट्र भूमि में जल को एकत्र तथा बान्ध बनाकर खेतों और ओषधियो में सींचे ॥ ९ ॥

अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।
मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥ १० ॥

अश्वात् । इयाय । इति । यत् । वदन्ति । ओजसः । जातम् । उत । मन्ये । एनम् । मन्योः । इयाय । हर्म्येषु । तस्थौ । यतः । प्रऽजज्ञे । इन्द्रः । अस्य । वेद ॥ १० ॥

**संस्कृतान्वयार्थः**—( अश्वात्-इयाय-इति यत्-वदन्ति ) अश्वमेधात्-राष्ट्रात् "राष्ट्रमश्वमेधः"[श० १३ । १ । ६ । ३]"अश्वस्य प्राप्तुमर्हस्य" राज्यस्य :[ऋ० १ । १२१-। २ दयानन्दः ] इति यतः सर्वे प्रजाजनाः-वदन्ति ( उत-ओजसः-जातम्-एनं मन्ये) आत्मबलेन एनं जातं राजपदं मन्येऽहं पुरोहितः ( मन्योः-इयाय ) अन्यान् मानयितुः प्रतापात् खलु राजपदं प्राप्नोति ( यतः-अस्य प्रजज्ञे ) यस्मात् कारणात् खल्वस्य राज्ञः राजपदं प्रजायते तत्कारणं तु ( इन्द्रः-हर्म्येषु तस्थौ वेद ) राजा राजप्रासादेषु स्थितोऽस्ति सः-जानीयात्-जानाति, जितेन्द्रियत्वात् प्रजाहित कारणाद वेदितव्यम् ॥ १० ॥

**भाषान्वयार्थ**—( अश्वात् ) अश्वमेध से राष्ट्र से राजा ( इयाय ) राजपद को-राज्याधिकार को प्राप्त करता है ( इतियत्-वदन्ति ) यह ऐसा प्रजाजन कहते हैं ( उत-ओजसः-जातम् ) और आत्मबल से प्राप्त ( एनं-मन्ये ) इसे मैं पुरोहित निर्धारित करता हूँ ( मन्योः-इयाय ) अन्यों को मानने वाले प्रताप से राजपद को प्राप्त होता है ( यतः-अस्य प्रजज्ञे ) जिस कारण से इस राजा का राजपद प्रसिद्ध हुआ है इस बात को ( इन्द्रः ) राजा ( हर्म्येषु तस्थौ वेद ) राजप्रसादों में स्थित हुआ जितेन्द्रिय होने से प्रजा का हित करने से जानता है यह समझना चाहिए ॥ १० ॥

**भावार्थ**—अश्वमेध अर्थात् राष्ट्र सञ्चालन के लिए राजा राजपद पर विराजमान होता है वह अपने प्रताप से और गुणप्रभाव से राजा बनता है। जितेन्द्रिय और प्रजा हित साधने के लिये ॥ १० ॥

**वयः॑ सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः ।**
**अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒॑स्मान्नि॒धये॑व ब॒द्धान् ॥ ११ ॥**

वयः॑ । सु॒ऽप॒र्णाः । उप॑ । से॒दुः॒ । इन्द्र॑म् । प्रि॒यऽमे॑धाः । ऋष॑यः । नाध॑मानाः । अप॑ । ध्वा॒न्तम् । ऊ॒र्णु॒हि । पू॒र्धि । चक्षुः॑ । मु॒मु॒ग्धि । अ॒स्मान् । नि॒धया॑ऽइव । ब॒द्धान् ॥ ११ ॥

**संस्कृतान्वयार्थः**—( वयः सुपर्णाः-प्रियमेधाः-ऋषयः-नाधमानाः ) गन्तारो भ्रमणशीलाः शोभनपालनधर्माणः प्रियोमेधोऽश्वमेधो राष्ट्रप्रदेशो येषां ते हितद्रष्टारो ज्ञानिनः प्रार्थयमानाः ( इन्द्रम्-उपसेदुः ) राजानमुपगतवन्तः-उपगच्छन्ति वा ( ध्वान्तम्-अप-ऊर्णुहि ) आध्वस्तम्-ध्वान्तम् प्रजायाः-अज्ञानान्धकारं दूरीकुरु ( चक्षुः पूर्धि ) ज्ञानदृष्टिः सर्वत्र पूरय ( अस्मान्-निधया-इव बद्धान् मुमुग्धि ) अस्मान् ज्ञानदाने समर्थान् एकत्रनियुक्तान् पाशेन बद्धानिव ज्ञानप्रकाशनाय राष्ट्रेऽवसृज। निरुक्ते सूर्य इन्द्रोवयः सुपर्णा रश्मयः आधिदैविक दृष्ट्या व्याख्यातो मन्त्रः ॥ ११ ॥

**भाषान्वयार्थ**—( वय, सुपर्णाः ) भ्रमणशील शोभनपालन धर्मवाले ( प्रियमेधाः ) प्रिय है राष्ट्र जिनको ऐसे राष्ट्र हितैषी ( ऋषयः ) ज्ञानीजन ( नाधमानाः ) प्रार्थना करते हुए ( इन्द्रम्-

उपसेदुः ) राजा या शासक के पास जाते है ( ध्वान्तम्-अप-ऊर्णु हि ) प्रजा के अज्ञानान्धकार को दूर कर ( चक्षुः पूर्धि ) ज्ञानदृष्टि को सर्वत्रभर-फैला ( अस्मान् ) हमें ( निधया-इव-बद्धान् ) ज्ञान देने के निमित्त पाश में बन्धे हुए जैसे एक स्थान पर पड़े हुओं को ( मुमुग्धि ) राष्ट्र के अन्दर छोड़ दे ॥ ११ ॥

**भावार्थ**—रष्ट्रहितैषी विद्वान् जन शासक से प्रेरणा पाये हुए सर्वत्र ज्ञान का प्रकाश करें। जिससे कि अज्ञानान्धकार दूर हो जावे ॥ ११ ॥



# चतुः सप्ततितमं सूक्तम्

ऋषिः—पूर्ववत् ।

देवता—पूर्ववत् ।

छन्दः—१, ४ पादनिचृत्, त्रिष्टुप्, २, ५ निचृत् त्रिष्टुप् ३ आर्ची भुरिक् त्रिष्टुप्, ६ विराट् त्रिष्टुप् ।

विषयः—अत्र सूक्तेऽपि पूर्ववद्राजधर्म उपदिश्यते, विशेषतः प्रजाहितम् साधनं शत्रुनाशनं चोपदिश्यते । उच्चाधिकारिभ्यः पुरस्कारो दातव्यश्चेत्यपि वर्ण्यते ।
इस सूक्त में भी पूर्व की भाँति राजधर्म कहा है, विशेषतः प्रजारक्षण, शत्रु वध, उच्च अधिकारियों के लिए पुरस्कार प्रदान करना आदि विषय है ॥

वसूनां वा चर्कृष इयक्षन्धिया वा यज्ञैर्वा रोदस्योः ।
अर्वन्तो वा ये रयिमन्तः सातौ वनुं वा ये सुश्रुणं सुश्रुतो धुः ॥ १ ॥

वसूनाम् । वा । चर्कृषे । इयक्षन् । धिया । वा । यज्ञैः । वा । रोदस्योः । अर्वन्तः । वा । ये । रयिऽमन्तः । सातौ । वनुम् । वा । ये । सुऽश्रुणम् । सुऽश्रुतः । धुरिति धुः ॥ १ ॥

संस्कृतान्वयार्थः—( रोदस्योः ) राजप्रजाव्यवहारयोः प्रसिद्धा अधिकारिणः "रोदसी राजप्रजा व्यवहारौ" [ ऋ० ३ । ३८ । ८ दयानन्दः ] ( वसूनाम्-इयक्षन् ) वसूनि 'व्यत्ययेन द्वितीयास्थाने षष्ठी' दातुमिच्छन् तथा तैः सः ( चर्कृषे ) स्वसेवाकार्यं निमित्ती कृत्य च स्वाभिमुखमाकृष्यते वा ( धिया वा यज्ञैः-वा ) तथाऽन्यैर्जनैश्च स्वप्रज्ञानेन ज्ञानप्रकाशेन "धीः प्रज्ञाननाम" [ निघ० ३ । ६ ] ज्ञानप्रकाशं निमित्तीकृत्य तथा जनहितदानादिभिः स्वाभिमुखमाकृष्यते ( अर्वन्तः-वा ये रयिमन्तः ) अर्वन्तः सैनिकाश्च "अर्वता अश्वादियुक्तेन सैन्येन" [ ऋ० २ । २ । १० दयानन्दः ] 'मतुब्लोपश्छान्दसः' ये वीर्यवन्तः "वीर्यं वै रयिः" [ श० १३ । ४ । २ । १३ ] ( सातौ ) संग्रामे "सातौ युद्धे" [ ऋ० १ । ३६ । १७ दयानन्दः ] ( ये सुश्रुतः ये सुश्रूयन्ते राष्ट्रे ते प्रसिद्धा योद्धारः ( सुश्रुणं वनुं धुः ) सुप्रसिद्धं हिंसकं शत्रुसैन्यं धूनयन्ति तैरपि स्वशौर्यं निमित्तीकृत्याकृष्यते पुरस्कारार्थाय ॥ १ ॥

भाषान्वयार्थ—( रोदस्योः ) राजा और प्रजा के व्यवहारों में प्रसिद्ध अधिकारीजन ( वसूनाम्-इयक्षन् ) धनों को देने की इच्छा रखता हुआ तथा उन अधिकारियों के साथ वह ( चर्कृषे ) स्वसेना के कार्य को निमित्त बनाकर अपनी ओर खींचता है ( धिया वा यज्ञैः-वा ) तथा अन्य जनों के साथ ज्ञानप्रकाश द्वारा-अपने प्रज्ञान से या ( ज्ञानप्रकाश को ) निमित्त बनाकर तथा जनहित दानादि क्रिया को सामने रखकर आकृष्ट करता है ( अर्वन्तः-वा ) घोड़े वाले सैनिक या ( ये रयिमन्तः ) वीर्यवान् पराक्रमी ( सातौ ) संग्राम में ( ये सुश्रुतः ) राष्ट्र में जो प्रसिद्ध योद्धा हैं ( संश्रुणं वनुं धुः ) सुप्रसिद्ध हिंसक शत्रु सैन्य को धुनते हैं नष्ट करते हैं। उनके द्वारा तथा अपने शौर्य को लक्ष्य करके पुरस्कारार्थ खींचता है ॥ १ ॥

भावार्थ—राजा प्रजा के व्यवहारों में प्रसिद्ध अधिकारियों को तथा संग्राम में बढ़ने वाले सैनिकों को जो शत्रु पर विजय पाते हैं उनको पुरस्कार प्रदान कर शासक सम्मानित करें ॥ १ ॥

**हवं एषामसुरो नक्षत द्यां श्रवस्यता मनसा निंसत क्षाम् ।**
**चक्षाणा यत्र सुवितायं देवा द्यौर्न वारेभिः कृणवन्त स्वैः ॥ २ ॥**

हवः । एषाम् । असुरः । नक्षत । द्याम् । श्रवस्यता । मनसा । निंसत । क्षाम् ।
चक्षाणाः । यत्र । सुवितायं । देवाः । द्यौः । न । वारेभिः । कृणवन्त । स्वैः ॥ २ ॥

**संस्कृतान्वयार्थः**—( एषाम्-हवः-असुरः ) एषां सैनिकानां घोषशब्दः-राज्ञ-प्रेरकः ( द्यां नक्षत ) आकाशं व्याप्नोति ( श्रवस्यता मनसा क्षां निंसत ) राज्ञोयशः कांक्षमाणेन मनसा पृथिवीं चुम्बति स्पृशति "निंसते चुम्बति" [ ऋ० १ । १४४ । १ दयानन्दः ] ( यत्र देवाः-चक्षाणाः-सुविताय ) यस्मिन् राष्ट्रे राजनि वा तन्निमित्तं कल्याण साधनाय विद्वांसो ज्ञानेन प्रकाशमानाः संवर्तन्ते ( द्यौः-न स्वैः-वारेभिः कृणवन्त ) यथा सूर्यः स्वकीयैरन्धकार निवारकैरश्मिभिः प्रकाशं करोति तथा ते ज्ञान प्रकाशंकुर्वन्ति, ॥ २ ॥

भाषान्वयार्थ—( एषाम् ) इन सैनिकों का ( हवः-असुरः ) घोषशब्द राजा का प्रेरक है ( द्यां नक्षत ) आकाश को व्यापता है ( श्रवस्यता मनसा ) राजा के यश को चाहते हुए मनसे ( क्षां निंसत ) पृथिवी को चूमता है-स्पर्श करता है ( यत्र देवाः ) जिस राष्ट्र में या राजा के होने पर उसके निमित्त कल्याण साधने के लिए विद्वान् ( चक्षाणाः-सुविताय ) ज्ञान से प्रकाशमान विद्वान् वर्तमान रहते हैं ( द्यौः-न ) जैसे सूर्य ( स्वैः-वारेभिः ) अपनी अन्धकारनाशक किरणों से ( कृणवन्त ) प्रकाश करता है, वैसे वे विद्वान् ज्ञान का प्रकाश करते हैं ॥ २ ॥

भावार्थ—राष्ट्र में सैनिकों का घोष शासक को प्रेरित करने वाला है वह आकाश में व्यापने वाला और पृथिवी को छूने वाला होना चाहिए तथा विद्वान् लोग राष्ट्र में ज्ञान का प्रकाश ऐसे फैला दें जैसे सूर्य अपनी किरणों से प्रकाश फैलाता है ॥ २ ॥

इयमेषाममृतानां गीः सर्वताता ये कृपणन्त रत्नम् ।
धियं च यज्ञं च साधन्तस्ते नो धान्तु वसव्य१मसामि ॥ ३ ॥

इयम् । एषाम् । अमृतानाम् । गीः । सर्वऽताता । ये । कृपणन्त । रत्नम् । धियम् । च । यज्ञम् । च । साधन्तः । ते । नः । धान्तु । । वसव्यम् । असामि ॥ ३ ॥

**संस्कृतान्वयार्थः**—( एषाम्-अमृतानां गीःसर्वताता ) एतेषां जीवन्मुक्तानां विदुषामुपदिष्टा वेदवाक् सर्वसुखद कर्मविस्तारिका "सर्वताता सर्वासु कर्मततिषु" [ नि० ११ । २४ ] अस्ति भवतु ( ये रत्नं कृपणन्त ) ये विद्वांसो रमणीयं मोक्षं प्राप्तुमस्मान् समर्थमस्ति "कृपते समर्थयतु" [ ऋ० १ । ११२ । १० दयानन्दः ] 'कृपू सामर्थ्ये' [ भ्वादि० ] ततः शप् श्ना च 'विकरणद्वयं छान्दसम्' ( धियं च यज्ञं च साधन्तः ) ते प्रज्ञानं चाध्यात्मयज्ञं साधयन्तः 'अन्तर्गतोणिजर्थ.' ( असामि-वसव्यं नः धान्तु ) पूर्णं वसुषु भवं श्रेष्ठं ज्ञानधनमस्मासु धारयन्तु "धा धातोः श्लुविकरण औत्सर्गिको बहुल ग्रहणान्न भवति ""बहुलं छन्दसि" [ अष्टा० २ । ४ । ७६ ] ॥ ३ ॥

**भाषान्वयार्थ**—( एषाम्-अमृतानाम् ) इन जीवनमुक्त विद्वानों की ( गीः सर्वताता ) उपदेश की हुई वेदवाणी सर्वसुखद कर्मों के विस्तार करने वाली है या हो ( ये रत्नं कृपणन्त ) जो विद्वान् रमणीय मोक्ष प्राप्त करने को हमें समर्थ करते हैं ( धियं च यज्ञं च साधन्त ) वे प्रज्ञान को और अध्यात्म यज्ञ को साधते हुए ( असामि वसव्यम् नः-धान्तु ) पूर्ण धनों में श्रेष्ठ ज्ञान धन को हमारे लिए धारण करावें ॥ ३ ॥

**भावार्थ**—जीवन्मुक्त विद्वान् अपनी वाणी से सब सुखों को सिद्ध करने का उपदेश करें और मोक्ष प्राप्ति के लिए समर्थ बनावें जो सब धनों में श्रेष्ठ धन है ॥ ३ ॥

आ तत्त इन्द्रायवः पनन्ताभि य ऊर्वं गोमन्तं तितृत्सान् ।
सकृत्स्वं१ये पुरुपुत्रां महीं सहस्रधारां बृहतीं दुदुक्षन् ॥ ४ ॥

आ । तत् । ते । इन्द्र । आयवः । पनन्त । अभि । ये । ऊर्वम् । गोऽमन्तम् । तितृत्सान् । सकृत्ऽस्वम् । ये । पुरुऽपुत्राम् । महीम् । सहस्रऽधाराम् । बृहतीम् । दुधुक्षन् ॥ ४ ॥

**संस्कृतान्वयार्थः**—( इन्द्र ) हे राजन् ! ( ते ) तव ( आयवः ) प्रजाजनाः "आयवः-मनुष्यनाम" [ निघ० २ । ३ ] ( तत्-आ-अभिपनन्त ) तदा समन्तात्-अभिस्तुवन्ति प्रशंसन्ति 'पनस्तुतौ' [ भ्वादि० ] ( ये गोमन्तम्-ऊर्वं तितृत्सान् ) पृथिवीमन्तं भूमिमन्तं भूमेराच्छादकं धान्यम् "ऊर्वम्-आच्छादकम्" [ ऋ० ४ । २८ । ५ दयानन्दः ] छेदयितुमिच्छन्ति, एवं ते प्रसन्नतामनुभवन्तः ( ये सकृत्स्वं पुरुपुत्राम् ) ये हि सकृदेवो-

त्पादयित्री बहुधान्यादि पुत्रवतीम् ( सहस्रधारां बृहतीं महीं दुधुक्षन् ) सहस्रजलधारावतीं महतीं महत्त्वपूर्णां पृथिवीं दुहन्ति ततो धान्यफलरसादिकं गृह्णन्ति ॥ ४ ॥

भाषान्वयार्थ—( इन्द्र ) हे राजन् ! ( ते ) तेरे ( आयवः ) प्रजाजन ( तत्-आ-अभिपनन्त ) तब भलीभांति प्रशंसा करते हुए ( ये गोमन्तम् ) जो पृथिवीवाले भूमिवाले ( ऊर्वं-तितृत्सान् ) भूमि के आच्छादक धान्य को काटना चाहते हैं एवं तेरी प्रसन्नता को अनुभव करते हुए ( ये सकृत्स्वम् ) जो एक बार ही उत्पन्न करने वाली ( पुरुपुत्राम् ) बहुत धान्यादि पुत्र वाली को ( सहस्र धाराम् ) सहस्रजल धारावाली ( बृहतीं महीं दुधुक्षन् ) महत्वपूर्ण पृथिवी को दोहते हैं, तो उससे धान्य फलादि ग्रहण करते हैं ॥ ४ ॥

भावार्थ—राजा के राज्य में पृथिवी जल धाराओं से युक्त अन्नफलादि उत्पन्न करने वाली होवे तो प्रजाजन सुख पाते हुए शासक को प्रसन्न करते हैं और गुण गाते हैं ॥ ४ ॥

**शचीव इन्द्रमवसे कृणुध्वमनानतं दमयन्तं पृतन्यून् ।**
**ऋभुक्षणं मघवानं सुवृक्तिं भर्त्ता यो वज्रं नर्यं पुरुक्षुः ॥ ५ ॥**

शचीऽवः । इन्द्रम् । अवसे । कृणुध्वम् । अनानतम् । दमयन्तम् । पृतन्यून् । ऋभुक्षणम् । मघऽवानम् । सुऽवृक्तिम् । भर्ता । यः । वज्रम् । नर्यम् । पुरुऽक्षुः ॥ ५ ॥

संस्कृतान्वयार्थः—( शचीवः ) हे कर्मवन्तः कर्मकर्त्तारः ! "शची कर्म नाम" [ निघ० २ । १ ] व्यत्ययेनैकवचनम् ( अवसे ) रक्षणाय ( पृतन्यून् दमयन्तम् ) संग्राममिच्छतः शत्रून् स्ववशे नयन्तम् (अनानतम्) यः केनापि न–आनतीकर्त्तुं वशीकर्त्तुं शक्यस्तं महान्तं महच्छक्तिमन्तम् "अनानतस्य महतः" [ निरु० १२ । २० ] ( ऋभुक्षणं मघवानं सुवृक्तिम् ) ऋभूनां मेधाविनां शिल्पिनां निवासकम्-"ऋभवः-मेधाविनः" [ निघ० ५ । १५ ] "ऋभूरथस्येवाङ्गानि सन्दधत् परुषापरुः" [ अथर्व० ४ । १२ । ७ ] प्रशस्तधनवन्तं सुष्ठु दुःखवर्जनकर्त्तारम् ( इन्द्रं कृणुध्वम् ) स्वकीयं राजानं कुरुत ( यः पुरुक्षुः ) यो हि बहु भोजनीयान्नादिमान् "पुरुक्षुः पुरुंषि क्षुन्यन्नानि यस्य स [ ऋ० १ । ६५ । ५ दयानन्दः ] ( नर्यं वज्रं भर्त्ता) नरेभ्यः प्रजाजनेभ्यो हितकरमोजो धारयिता "वज्रो वा ओजः" [ श० ८ । ४ । १ । २० ] ॥ ५ ॥

भाषान्वयार्थ—( शचीवः ) हे कर्मवाले–कर्मकर्त्ता जनो ! ( अवसे ) रक्षा के लिये ( पृतन्यून् दमयन्तम् ) संग्राम करने के इच्छुक शत्रुओं को अपने वश में लेने वाले ( अनानतम् ) जो किसी से भी वश न किया जा सके उस महान् शक्तिमान् को ( ऋभुक्षणम् ) ऋभुओं मेधावी शिल्पियों के वसाने वाले ( मघवानम् ) धनवाले ( सुवृक्तिम् ) भली प्रकार दुःख से वर्जित करने वाले हटाने वाले ( इन्द्रं कृणुध्वम् ) अपना राजा बनाओ ( यः पुरुक्षुः ) जो बहुत भोजनीय अन्न वाला ( नर्यं वज्रं भर्त्ता ) प्रजाजनों के लिये हितकर ओज का धारण करने वाला है ॥ ५ ॥

  

**भावार्थ**—कर्मकर्त्ता राष्ट्र के कर्मठ जन संग्राम के इच्छुक शत्रुओं के दमन करने वाले अन्य के वश में न आने वाले विद्वानों और शिल्पियों को राष्ट्र में बसाने वाले प्रजाजनों के लिये अन्नादि की व्यवस्था करने वाले को राजा बनाना चाहिए ॥ ५ ॥

**यद्वावानं पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः ।**
**अचेति प्रासहस्पतिस्तुविष्मान् यदीमुश्मसि कर्तवे करत्तत् ॥ ६ ॥**

यत् । ववानं । पुरुऽतमम् । पुराषाट् । आ । वृत्रऽहा । इन्द्रः । नामानि । अप्राः । अचेति । प्रऽसहः । पतिः । तुविष्मान् । यत् । ईम् । उश्मसि । कर्त्तवे । करत् । तत् ॥ ६ ॥

**संस्कृतान्वयार्थः**—( यत् ) यतः ( पुरुतमं ववान ) बहुप्रसिद्धतमं बलवन्तं शत्रुं वनति हिनस्ति "वनुष्यति हन्ति कर्मा" [ निरु० ५ । २ ] ( पुराषाट् ) शत्रुपुराणामभिभविता ( वृत्रहा ) आवरकाणामाक्रमकारिणां हन्ता ( इन्द्रः ) राजा ( नामानि-अप्राः ) यो जलानीव शत्रुसैन्यानि संग्रामभूमौ पूरयति प्रसारयति ( अचेति ) इति प्रसिध्यति ( प्रसहः-पतिः ) प्रकृष्टबलस्य स्वामी ( तुविष्मान् ) स्वयं बहुबलवान् "तुविष्मान् बहुबलाकर्षणयुक्तः" [ ऋ० २ । १२ । १२ दयानन्दः ] ( यत्-ईम् कर्त्तवे-उश्मसि ) यदेव वयं कर्त्तुं कामयामहे ( तत् करत् ) तत् करोति सः ॥ ६ ॥

**भाषान्वयार्थ**—( यत् ) जिससे ( पुरुतमं ववान ) बहुत प्रसिद्ध बलवान् शत्रु को हिंसित करता है ( पुराषाट् ) शत्रु के पुरों—नगरों को—मण्डलियों को भी स्वाधीन करता है ( वृत्रहा ) आक्रमणकारियों का नाशक ( इन्द्रः ) राजा ( नामानि-अप्राः ) जो जलों के समान शत्रु के सैन्य बलों को संग्राम भूमि में फैला देता है ( अचेति ) ऐसा प्रसिद्ध है ( प्रसहः-पति ) प्रकृष्टबल का स्वामी ( तुविष्मान् ) स्वयं बहुत बलवान् ( यत्-ईम् कर्तवे-उश्मसि ) जो हम करना चाहते हैं ( तत् करत् ) उसे वह करता है ॥ ६ ॥

**भावार्थ**—राजा स्वयं बहुत बलवान् और सैन्य बलों का स्वामी शत्रु के बलों का संहार करने वाला उनके नगरों पर अधिकार करने वाला होना चाहिए ॥ ६ ॥



# पञ्चसप्ततितमं सूक्तम्

ऋषिः—प्रैयमेधः सिन्धुक्षित् ।

देवता—नद्यः ।

छन्दः—१ निचृज्जगती, २, ३ विराड् जगती ४ जगती, ५, ७ आर्ची स्वराड् जगती ६ आर्ची भुरिग् जगती ८, ९ पाद निचृज्जगती

विषयः—अस्मिन् सूक्ते त्रिषुलोकेषु अप्तत्त्व प्रवर्तनं पृथिव्यां तु जलरूपेण नद्यः प्रवहन्ति तासामुपयोगश्च जनैर्ग्राह्य इत्येवमादयो विषया विस्तरेण प्रदर्शिताः सन्ति। ता नद्यश्च विविधरूपाः सन्ति ।

इस सूक्त में तीनो लोकों अप्तत्त्व, पृथिवी पर जल रूप में नदियां भिन्न भिन्न रूपवाली उन से लाभ लेना आदि कहा है ।

वक्तव्यम्—केचिन्मन्यन्तेऽत्र सूक्ते गङ्गाद्योनद्यः शरीरस्थनाड्यः सन्ति न पृथिवीपृष्ठगा नद्य इति न सम्यक् तासामाधिदैविकक्षेत्रस्य वस्तुत्वात् । निघुण्टुक्रमोऽपि साक्ष्यं यतो 'नद्यः' इति कथनानन्तरम् 'आपः' पुनः 'ओषधयः' । यास्काभिमतिश्च नदीकथने पृथिवीस्थानदेवतानां स्तवनप्रसङ्गात् तथा 'सरस्वती सर इत्युदकनाम सर्तेस्तद्वती' तथा "सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः ॥ वेदस्य च स्वतः साक्ष्यं गङ्गाद्या नद्यो भवन्ति तद्यथा (१) "सत्य मित्त्वामहे नदि पुरुष्ण्यवं देदिशम् । नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥" (ऋ० ८ । ७४ । १५) अत्र महे नदि ! परुष्णि ! सम्बोधनं पुनश्च सा हि 'आपः' इति नाम्ना सम्बोध्यते । (२) "मध्वा पृञ्चे नद्यः पर्वता गिरयो मधु । मधु परुष्णी शीपाला शमास्ने अस्तु शं हृदे ॥" (अथर्व० ६ । १२ । ३) इति सर्पविषचिकित्सायां 'नद्यः पर्वता गिरयः परुष्णी' कथनेन नाडी किन्तु नदी हि स्पष्टा । (३) "यत् सिन्धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः । यत् पर्वतेषु भेषजम् ॥" (ऋ० ३ । ३३ । १) इत्यत्र "विपाट् या विविधं प्रटति गच्छति विपाटयति–वा सा, शुतुद्री शु शीघ्रं तुदति, व्यथति सा पयसा जलेन

जवेते" [ पदार्थे ] "अश्वे इव विषेते हासमाने गावेव शुभ्रे रिहाणे पयसा विपाट् शुतुद्री प्रजवेते इव भवेताम्" [ अन्वये ] "यथा पर्वतानां मध्ये वर्तमाना नद्योऽश्वा इव धावन्ति गाव इव शब्दायन्ते" [ भावार्थे ] अत्र दयानन्दमते विपाट् शुतुद्री नद्यौ स्तः, इति स्पष्टम्। एवं तर्हि गङ्गादिनामभिर्वेदे न भवितव्यं तस्येश्वरज्ञानात्मकत्वात् सृष्टेरारम्भे प्रकाश्यमानत्वात् ? उच्यते मनुष्यरचितानां वस्तूनां रथादीनि नामानि यथा वेदे सन्ति तथा गङ्गादिनामान्यपि निरवद्यानि-अशङ्कनीयानि, इदं कथं मनुष्यरचितानां वस्तूनां नामानि तु स्युः स्वरचितानामीश्वरचितानां नामानि न स्युरिति मतिर्नयुक्ता। ननु गङ्गाद्या नद्यस्तु खल्वार्यावर्ते [ भारते ] सन्ति तेन-आर्यावर्तस्य देशस्येतिहासो भविष्यति वेदः। उच्यते-आर्यावर्ते देशे गङ्गाद्याः प्रवहन्तीति न वाच्यं किन्तु पृथिवीपृष्ठे प्रवहन्तीति वक्तव्यम्, तदा पृथिवीपृष्ठे या या नदी यथा यथा गुणयुक्ता दृष्टा पुरातनैर्वैदिकैर्ऋषिभिस्तत्तद्गुणवशात् तस्यास्तस्यास्तत्तन्नामकरणं कृतं वेदाद् दृष्ट्वा, मनुना खलूक्तं यथा "सर्वेषां स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥" ( मनु० १। २१ ) यास्केन गुणा दर्शिता हि 'गङ्गा गमनात्' इति यौगिक नामानि न रूढिनामानि पुनश्च खागोलिकेन भौगोलिकेन चेतिहासेन वेदेऽवश्यं भवितव्यमेव। यथा 'सूर्यः-चन्द्रमाः' इत्येवमादीनां खागोलिकानां पदार्थानां वर्णनं वेदे तथा गङ्गादीनां भौगोलिकानां वस्तूनामपि वर्णनेन भवितव्यम्। अपि तु नदीनां वैदिकनाम्नां क्षेत्रं केवलं पृथिवी हि नास्ति किंतु पृथिव्यन्तरिक्षद्युलोकास्त्रयोऽपि क्षेत्राणि सन्ति, एतत्सूक्तस्य प्रथममन्त्रे ह्युक्तमस्ति प्र सप्त सप्त त्रेधा हि चक्रमुः" ( ऋ० १०। ७५। १ ) पृथिवीस्थानपदार्थेषु नद्योऽपि देवतात्वस्य भागिन्यः सन्ति, कस्याश्चिज्जलपाने भेषजं कस्याश्चित् स्नाने महौषधं तथाऽन्नोत्पादनाय क्षेत्रसेचनाय तु सर्वा नद्य उपकारिण्यः सन्ति ता एताः स्तोतव्याः प्रशंसनीया उपयोज्याः।

प्र सु वं आपो महिमानंमुत्तमं कारुर्वोचाति सदंने विवस्वंतः।
प्र सप्त संप्त त्रेधा हि चंक्रमुः प्र सृत्वंरीणामति सिन्धु रोजंसा॥ १॥

प्र। सु। वः। आपः। महिमानंम्। उत्ऽतमम्। कारुः। वोचाति। सदंने। विवस्वंतः। प्र। सप्तऽसंप्त। त्रेधा। हि। चक्रमुः। प्र। सृत्वंरीणाम्। अति। सिन्धुः। ओजसा॥ १॥

**संस्कृतान्वयार्थः**—( आपः ) हे आप्ता व्याप्ता प्रवाहाः ( वः ) युष्माकम् ( उत्तमं महिमानम् ) उत्तमं महत्त्वम् ( कारुः सु प्रवोचाति ) स्तुतिकर्त्ता शिल्पी "स्तुत्यानां शिल्पकर्मणां कर्त्ता [ ऋ० १। ८३। ६ दयानन्दः ] सीम्नां कर्त्ता "स्तोमानां कर्त्ता [ निरु० ६। ६ ] "स्तोमा आसन् प्रतिधमः" [ ऋ० १०। ८५। ८ ] प्रवक्ति प्रब्रवीति ( विवस्वतः सदने ) यो शिविष्टतया राष्ट्रे विज्ञानस्थले वसति तस्य राज्ञो वैज्ञानिकस्य राजभवने विज्ञानभवने वा ( सप्त सप्त त्रेधा हि प्रचक्रमुः ) सप्त सप्त त्रिषु

स्थानेषु, एकैकस्थाने सप्त सप्त भूत्वा प्रक्रामन्ति प्रवहन्ति, 'आपस्त्रिपुस्थानेषु सन्ति' पृथिव्यामन्तरिक्षेदिवि च, यथोक्तम् "द्यौर्वा अपां सदनम्" [ श० ७ । ५ । २ । ५६ ] "अन्तरिक्षं वा अपां सधस्थम्" [ श० ७ । ५ । २ । ५७ ] "इयं पृथिवी वा अपामयनमस्यां ह्यापो वहन्ति" [ श० ७ । ५ । २ । ५० ] दिवि कथमित्युच्यते "अमूर्या उपसूर्ये याभिर्वा सूर्यः सह [ अथर्व० १ । ४ ।२ । ] ता आपः अप्तत्त्वपदार्थाः, दिवि सप्तरङ्गवन्तः सूर्य-रश्मयः, अन्तरिक्षे सप्तरङ्गा विद्युत्तरङ्गाः, पृथिव्यां सप्त जलप्रवाहाः । ( प्रसृत्वरीणाम् ) तासामपां व्याप्तधाराणाम् ( सिन्धुः ) स्यन्दमानः प्रवाहः ( ओजसा-अति ) बलेन वेगेन-अतिवहति ॥ १ ॥

**भाषान्वयार्थ**—( आपः ) हे आप्त व्याप्त प्रवाहो ! ( वः ) तुम्हारे ( उत्तमं महिमानम् ) उत्तम महत्त्व को ( कारुः सु प्रवोचाति ) स्तुतिकर्त्ता शिल्पी–सीमाओं का कर्त्ता प्रकृष्टरूप से कहता है ( विवस्वतः सदने ) विशिष्टता से राष्ट्र में विज्ञान स्थल में जो बसता है ऐसे वैज्ञानिक राजा के राजभवन में या विज्ञान भवन में ( सप्त सप्त त्रेधा हि प्रचक्रमुः ) सात सात करके तीनों स्थानों में अर्थात् एक एक स्थान में सात सात होकर वहते हैं (प्रसृत्वरीणाम्) उन व्याप्त धाराओं का (सिन्धुः) वहने वाला ( ओजसा-अति ) अति वेग से वहता है वह अप् तत्त्व पदार्थ द्युलोक में सातरङ्ग की सूर्य की किरणे हैं, अन्तरिक्ष में सातरंग की विद्युत् की धारायें हैं और पृथिवी पर सात जल धारायें हैं ॥ १ ॥

**भावार्थ**—अप्तत्त्व पदार्थ तीनों लोकों में सात सात करके प्रवाहित होते हैं। द्युलोक में सूर्य की किरणें, अन्तरिक्ष में विद्युद्धारायें, पृथिवी पर जल प्रवाह इनका जानने वाला वैज्ञानिक शिल्पी राजा के राज भवन में या विज्ञान भवन में इनका प्रवचन करे, इनसे लाभ लेने के लिये ॥ १ ॥

**प्र तेऽरदद्वरुणो यातवे पथः सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम् ।**
**भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥ २ ॥**

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् । वाजान् । अभि । अद्रवः । त्वम् । भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥ २ ॥

**संस्कृतान्वयार्थः**—( सिन्धो ) हे स्यन्दनशील जलप्रवाह ! ( वरुणः ) सर्वेषां वरणीयः "आवरको वा परमात्मा" [ ऋ० १ । ६८ । ३ दयानन्दः ] ( ते यातवे ) तव गमनाय प्रवहणाय ( पथः-प्र-अरदत् ) मार्गान् प्ररचयति ( त्वं यत्-वाजान्-अभ्यद्रवः ) यतस्त्वं-अन्नौषध्यादिपदार्थान्-अभिलक्ष्य द्रवसि-वहसि, ( सानुना प्रवता भूम्याः-अधि-यासि ) पृथिव्याः-अधि, पृथिव्याः-उपरि, पृथिव्यामित्यर्थः, अधि सप्तम्यार्थाभिधायी, समुद्धृतेन-समुच्छ्रुतात्-मेघात् पतिता सती "सानुमेघस्य शिखरः" [ ऋ० १ । ५८ । २

दयानन्दः ] निम्नस्थान क्रमेण "प्रवत्सु निम्नासु" [ ऋ० ६ । ४७ । ४ दयानन्दः ] गच्छसि ( एषां जगताम्-अग्रं यत्-इरज्यसि ) एषां जङ्गमानां यद्वा जङ्गमादीनां प्रथमं सुखं साधयितुं परिचरसि "इरज्यति परिचरणकर्मा" [ निघ० ३ । ५ ] ॥ २ ॥

भाषान्वयार्थ—( सिन्धो ) हे स्यन्दनशील अन्तरिक्षस्थ जल प्रवाह ! ( वरुणः ) सबका वरण करने योग्य या आवरक परमात्मा ( ते यातवे ) तेरे गमन—वहने के लिये ( पथः प्र-अरदत् ) मार्गों को बनाता है ( त्वं यत् ) तू जो ( वाजान्-अभ्यद्रवः ) अन्नौषधी आदि पदार्थों को अभिलक्षित करके वहता है ( सानुना प्रवता ) पृथिवी के ऊपरी भाग से नीचे को ( भूम्याः-अधि यासि ) भूमि के नीचे जाता है ( एषां-जगताम्-अग्रम् ) जङ्गमादि के प्रथम सुखसाधने को ( यत्-इरज्यसि ) जो परिचरण करता है—घूमता है ॥ २ ॥

भावार्थ—परमात्मा की शक्ति से जल प्रवाह पृथिवी के ऊपरी भाग से नीचे को वहते हैं अन्न औषधि आदि के उत्पत्यर्थ तथा मनुष्यादि प्राणियों के सुख साधनार्थ गति करते हैं ॥ २ ॥

दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना ।
अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥ ३ ॥

दिवि । स्वनः । यतते । भूम्या । उपरि । अनन्तम् । शुष्मम् । उत् । इयर्ति । भानुना । अभ्रात्ऽइव । प्र । स्तनयन्ति । वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥ ३ ॥

संस्कृतान्वयार्थः—( भानुना शुष्मम्-उदियर्ति ) सिन्धुः—अन्तरिक्षस्थजलसमूहो यदा अर्चिषा विद्युता "अजस्रेण भानुना-अजस्रेणार्चिषा" [ श० ६ । ४ । १ । २ ] बलं वेगं प्रेरयति ( दिवि स्वनः-यतते ) तदाऽस्य शब्दः—आकाशे गच्छति "यततेगतिकर्मा" [ निघ० २ । १४ ] ( भूम्या-उपरि-अनन्तम् ) भूम्याः उपरि—अनन्तं दूरपर्यन्तं गच्छतीत्यर्थः "भूम्या" षष्ठ्यर्थे तृतीया व्यत्ययेन ( अभ्रात्-इव वृष्टयः स्तनयन्ति ) मेघात् 'इवोऽपि दृश्यते पदपूरणः" [ निरु० १ । ११ ] खलु वृष्टयः शब्दयन्ति ( वृषभः-न-रोरुवत् सिन्धुः-यत्-एति ) वृषभ इव भृशं शब्दं कुर्वन् यदा स्यन्दनशीलोऽन्तरिक्षस्थो जलसमूहो नीचैरागच्छति ॥ ३ ॥

भाषान्वयार्थ—( भानुना ) अन्तरिक्षस्थ जल समूह जब विद्युत् के द्वारा ( शुष्मम् ) बल को—वेग को ( उदियर्ति ) प्रेरित करता है ( दिविः स्वनः-यतते ) तब आकाश में इसका शब्द प्राप्त होता है ( भूम्या-उपरि ) भूमि के ऊपर ( अनन्तम् ) दूर तक जाता है ( अभ्रात्-इव ) मेघ से ( वृष्टयः स्तनयन्ति ) वृष्टियां—वर्षायें शब्द करतीं हैं ( वृषभः-न ) वृषभ की भांति ( रोरुवद् ) बहुत शब्द करता हुआ ( सिन्धुः-यत्-एति ) स्यन्दनशील अन्तिरक्षस्थ जलसमूह नीचे आ जाता है ॥ ३ ॥

भावार्थ—विद्युत् से ताड़ित मेघ का जल शब्द करता हुआ भूमि पर आता है और निम्न स्थान पर दूर तक पहुंचता है उससे कृषि आदि का लाभ लेना चाहिए ॥ ३ ॥

अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥ ४ ॥

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः । वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः । राजाऽइव । युध्वा । नयसि । त्वम् । इत् । सिचौ । यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥ ४ ॥

संस्कृतान्वयार्थः—( सिन्धो ) हे स्यन्दनशीलजलसमूह ! ( वाश्राः-मातरः पयसा-इव धेनवः त्वा शिशुम्-अभि-अर्षन्ति ) कामयमानाः-मातरः-नद्यः पयोहेतुना त्वां प्रशंसनीयं जलदातारम् "शिशुः शिशीतेर्दानकर्मणः" [ निरु० १० । ३६ ] गाव इव "आपो वै धेनवः" [ कौ० १ । १२१ ] अभिगच्छन्ति-प्रवहन्ति यद्वा निस्सरन्ति "अर्षन्ति निस्सरन्ति" [ १७ । ६३ दयानन्दः ] ( त्वं राजा-इव युध्वा नयसि ) यथा योद्धाराजा स्वसैनिकान् नयसि तथा त्वं नदीर्नयसि पृथिवीपृष्ठे ( आसां प्रवताम्-अग्रं सिचौइनक्षसि ) आसां गच्छताम् "प्रवतां गच्छताम्" [ ऋ० २ । १३ । २ दयानन्दः ] अपामग्रगमनं सेचनमार्गे [ षिच् क्षरणे [ तुदादि० ] ततः किन् प्रत्यय औणादिको बाहुलकात्" व्याप्नोषि प्रेरयसि ॥ ४ ॥

भाषान्वयार्थ—( सिन्धो ) हे स्यन्दनशील अन्तरिक्षस्थ जल समूह ! ( वाश्रा मातरः ) कामना करती हुई माताओं ( धेनवः-इव ) गौओं की भांति नदियाँ ( पयसा ) जल हेतु से ( त्वा शिशुम्) तुझ जलदाता को आश्रित करके बहती हैं ( त्वं राजा-इव युध्वा नयसि ) जैसे योद्धा राजा अपने सैनिकों को लेता जाता है ऐसे तू नदियों को पृथिवी पृष्ठ पर ले जाता है ( आसां प्रवताम्-अग्रम् ) इन नदियों के आगे वहने को ( सिचौ-इनक्षसि) सींचने के स्थान पर प्रेरित करता है ॥४॥

भावार्थ—नदियां पृथिवी पर वहती हैं पृथिवी पृष्ठ को सींचने के लिये, अन्तरिक्ष का जलसमूह इनका प्रेरक है ॥ ४ ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ५ ॥

इमम् । मे । गङ्गे । यमुने । सरस्वति । शुतुद्रि । स्तोमम् । सचत । परुष्णि । आ । असिक्न्या । मरुतऽवृधे । वितस्तया । आर्जीकीये । शृणुहि । आ । सुऽसोमया ॥५॥

संस्कृतान्वयार्थः—( गङ्गे ) हे गमनशीले नदि ! "गङ्गा गमनात्" [ निरु० ६ । २५ ] गच्छति हि यावद्गमनाय मार्गो भवेत् समुद्रान्तं न पुनर्मार्गः' तथाभूते नदि ! ( यमुने ) हे यमुने नदि ! प्रकृष्टं मिश्रयन्ती सती खल्वन्यां नदीम् "यु मिश्रणे" [अदादि०]

तथा भूते नदि ! "यमुना प्रयुवती" [ निरु० ६ । २५ ] ( सरस्वति ) प्रचुर जलवति "सरस्वती सर उदकनाम तद्वती" [ निरु० ६ । २५ ] ( शुतुद्रि ) शुद्राविणी क्षिप्रद्राविण्याशुतुन्नेव द्रवतीति वा [ निरु० ६ । २५ ] तथाभूते नदि ( परुष्ण्या ) इरावत्या भासवत्या नद्या सह भास्वति कुटिल गामिनि नदी "इरावती परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी" [ निरु० ६ । २५ ] ( असिक्न्या ) अशुक्लया "असिक्न्यशुक्ला ऽसिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितम्" [ नि० ६ । २५ ] ( मरुद्वृधे ) मरुद्वर्धिते मरुतो वृधाः-वर्धका यासां ताः सर्वा नद्यः, तथाभूते "मरुत एना वर्धयन्ति" [ नि० ६ । २५ ] ( वितस्तया ) अविदग्धयाऽतिग्रीष्म कालेऽपि या दग्धा शुष्का न भवति तथा भूतया नद्या सह ( आर्जीकीये ) विपाडाख्ये नदि "आर्जीकीयां विपाडित्याहुः" [ निरु० ६ । २५ ] ( सुषोमया ) सिन्धुना पार्थिवसमुद्रेण सह "सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्य" [ निरु० ६ । २५ ] ( मे स्तोमं सचत आ-शृणुहि ) ममाभिप्रायं यद्वा मह्यं प्रतिधिं स्वस्वस्तरं सेवयत तथाहि मदर्थं जल प्रदानं स्वीकुरु-इति प्रत्येकम् ॥ ५ ॥

भाषान्वयार्थ—( गङ्गे ) हे गमनशील समुद्र तक जाने वाली नदी ! ( यमुने ) हे अन्य नदी में मिलने वाली नदी ! ( सरस्वति ) हे प्रचुर जलवाली नदी ! ( शुतुद्रि ) हे शीघ्र गमन करने वाली या विखर विखर कर चलने वाली नदी ! ( परुष्णि ) हे परुष्णि—पर्ववाली भास वाली—दीप्ति वाली इरावती कुटिलगामिनी ( असिक्न्या ) कृष्णरंग वाली नदी के स्थल ( मरुद्वृधे ) हे मरुतों, वायुओं के द्वारा बढ़ने वाली फैलने वाली नदी ( वितस्तया ) अविदग्धा अर्थात् अत्यन्त ग्रीष्म काल में भी दग्ध शुष्क न होने वाली नदी के साथ ( आर्जीकीये ) हे विपाट्—किनारों को तोड़ फोड़ने वाली नदी ( सुषोमया ) पार्थिव समुद्र के साथ ( मे स्तोमं सचत-आ-शृणुहि ) मेरे अभिप्राय को या मेरे लिये अपने अपने स्तर को सेवन कराओ तथा मेरे लिये जलदान करो ॥ ५ ॥

भावार्थ—पृथिवी पृष्ठ पर भिन्न भिन्न रूप और गति से बहने वाली नदियां मानव को लाभ पहुंचाने वाली हैं, उनसे लाभ होना चाहिए ॥ ५ ॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥ ६ ॥

तृष्टऽअमया । प्रथमम् । यातवे । सऽजूः । सुऽसर्त्वा । रसया । श्वेत्या । त्या । त्वम् । सिन्धो इति । कुभया । गोऽमतीम् । क्रुमुम् । मेहत्न्वा । सऽरथम् । याभिः । ईयसे ॥ ६ ॥

संस्कृतान्वयार्थः—( प्रथमं यातवे ) प्रथमं गन्तुम् ( तृष्टामया ) तृष्टं तृष्णागतमल्पं गृहं यस्या साऽत्यन्ताल्पजलाशयया "अमा गृहं नाम" [ निघ० ३ । ४ ] ( सुसर्त्वा रसया सजूः ) सुष्ठुसरणशीलया नद्या सह गमनया ( त्या श्वेत्या ) तया श्वेतवर्णं भूतया नद्या ( कुभया ) कुत्सितभया-अस्पृश्ययेव "कुभा कुत्सितप्रकाशा"

[ ऋ० ५ । ५३ । ६ दयानन्दः ] ( गोमतीम् ) बहुपृथिवीमतीं नदीम् ( क्रुमुम् ) दूरंगताम् "क्रुमुः क्रामिता" [ ऋ० ५ । ५३ । ६ दयानन्दः ] ( मेहत्न्वा ) सिञ्चन्त्या नद्या सह ( सिन्धो ) हे सिन्धो स्यन्दनशीलजलाशय ! ( त्वं याभिः सरथम्-ईयसे ) याभिः पूर्वोक्ताभिर्नदीभिः सह रमणस्थानं प्राप्नोषि ॥ ६ ॥

भाषान्वयार्थ—( प्रथमं यातवे ) प्रबलरूप से गति करने को ( तृष्टामया ) तृष्णा को प्राप्त थोड़े जलवाला घर–स्थान जिसका है ऐसे अत्यन्त थोड़े जलवाली नदी से ( सुसर्त्वा रसया सजूः ) अच्छी सरणशील साथ जाने वाली नदी के द्वारा ( त्या श्वेत्या ) उस श्वेतरंग के जलवाली नदी के द्वारा ( कुभया ) कुत्सित भय देने वाली के साथ ( गोमतीम् ) बहुत पृथिवी वाली अर्थात् विस्तार वाली ( क्रुमुम् ) दूर गई हुई नदी को ( मेहत्न्वा ) सींचने वाली के साथ ( सिन्धो ) हे स्यन्दनशील जलाशय ( त्वं याभिः सरथम्-ईयसे ) जिन पूर्व नदियों के साथ रमण स्थान को प्राप्त होता है ॥ ६ ॥

भावार्थ—थोड़े जलवाली नदी बहुत जल वाली नदी के साथ मिल जाती है तीव्र गति से बहने वाली नदी निर्मल–श्वेत जल वाली होती है वह भयङ्कर गहरी होती है तथा फैलने वाली नदी और दूर तक जाने वाली नदी भूमि को सींचती हुई बहती हैं इन सब का आश्रय पार्थिव समुद्र है ॥ ६ ॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि ।
अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥ ७ ॥

ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि । भरते । रजांसि । अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा । अश्वा । न । चित्रा । वपुषीऽइव । दर्शता ॥ ७ ॥

संस्कृतान्वयार्थः—( ऋजीती ) ऋजुगामिनी सरला ( एनी ) श्वेता ( रुशती ) शुभ्रा ( अदब्धा ) अहिंसिता ( अपसाम्-अपस्तमा ) कर्मवतीनां वेगवतीनां कर्मवत्तया वेगवत्तया ( अश्वा न ) बडवेव ( चित्रा ) चायनीया ( वपुषी ) रूपवतीव ( दर्शता ) दर्शनीया ( सिन्धुः ) अन्तरिक्षस्थरजलसमूहः "सिन्धुः-अन्तरिक्षस्थ जलसमूहः" [ ऋ० १ । ६८ । ३ दयानन्दः ] समुद्ररूपा नदी ( महित्वा ) महत्त्वेन ( ज्रयांसि रजांसि ) वेगयुक्तानि जलानि ( परि भरते ) परितो धारयति ॥ ७ ॥

भाषान्वयार्थ—( ऋजीती ) ऋजुगामी सरल ( एनी ) श्वेत ( रुशती ) शुभ्र ( अदब्धा ) अहिंसित ( अपसाम्-अपस्तमा ) वेग वालियों में अत्यन्त वेग वाली ( अश्वा न ) घोड़ी के समान ( चित्रा ) चायनीय–( वपुषी-इव ) रूपवती की भांति ( दर्शता ) दर्शनीय ( सिन्धुः ) अन्तरिक्षस्थ समुद्ररूप ( महित्वा ) महत्त्व से ( ज्रयांसि रजांसि ) वेगयुक्त जलों को ( परि भरते ) सब ओर से धारण करता है ॥ ७ ॥

भावार्थ—भांति भांति की जल धाराओं को अन्तरिक्षस्थ जलसमूह धारण करता है जो पृथिवी पर बरस कर लाभ पहुँचाता है ॥ ७ ॥

  

**स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सकृता वाजिनीवती ।**
**ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम् ॥ ८ ॥**

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता । वाजिनीऽवती । ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

**संस्कृतान्वयार्थः**—( सिन्धुः ) सा समुद्ररूपा समुद्रसदृशीमहती नदी "सिन्धुः-विस्तीर्णा नदी" [ ऋ० १ । ९२ । १२ दयानन्दः ] ( स्वश्वा ) शोभनाश्वतीव ( सुरथा ) शोभनरथवतीव ( सुवासा ) शोभनवस्त्रवतीव ( हिरण्ययी ) सुवर्णवतीव ( सुकृता ) शोभनं कृत्यं यस्याः तथाभूता ( वाजिनीवती ) प्रशस्तक्रियावती ( ऊर्णावती ) ऊर्णाप्रदेशवती ( युवतिः ) मिश्रण धर्मवती ( सीलमावती ) "सीरं कृषि साधकं हलादिकम्" [ यजु० १८ । ७ दयानन्दः ] रेफस्यलकारश्छान्दसः सीलं मिमीते सीलमा रज्जूभूता या ह्योशधिस्तद्वती ( सुभगा ) सुभाग्यकरी ( उत ) अपि च ( मधुवृधम्-अधिवस्ते ) जलेनवर्धनीयं स्थानमध्याच्छादयति ॥ ८ ॥

**भाषान्वयार्थ**—(सिन्धुः ) वह समुद्र-सदृश महती नदी है ( स्वश्वा ) शोभन अश्ववाली जैसी ( सुरथा ) शोभन रथवाली जैसी ( सुवासा ) शोभन वस्त्रवाली जैसी ( हिरण्ययी ) सुनहरी जैसी ( सुकृता ) शोभन कर्म वाली ( वाजिनीवती ) प्रशस्त क्रियावाली ( ऊर्णावती ) ऊर्ण प्रदेश वाली ( युवति, ) मिश्रण धर्म वाली ( सीलमावती ) कृषि साधनवाली ( सुभगा ) सुभाग्यकरी ( उत ) और ( मधुवृधम्-अधिवस्ते ) जल से वर्धनीय स्थान को आच्छादित करती है ॥ ८ ॥

**भावार्थ**—अन्तरिक्षस्थ जलसमूह एक बड़ी भारी नदी है सारी पृथिवी की नदियों का आधार है वह पृथिवी पर बरस कर आती है बड़े वेग से घोड़ों की गति की भांति, बड़े सुन्दरयान की भांति आती है और पृथिवी पर वस्त्रसाधन कपास अन्य सुनहरी वस्तुओं बल क्रियाओं, खेती के उपयोगी धान्य को देती हुई और बढ़ाती हुई आती है ॥ ८ ॥

**सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।**
**महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ९ ॥**

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् । तेन । वाजम् । सनिषत् । अस्मिन् । आजौ । महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः विऽरप्शिनः ॥ ९ ॥

**संस्कृतान्वयार्थः**—( सिन्धुः ) यः स्यन्दते "सिन्धुः-यः स्यन्दते प्रस्रुवति सुखानि सः परमात्मा" [ ऋ० १ । ११ । ६ दयानन्दः ] ( अश्विनं सुखं रथं युयुजे ) व्यापनवन्तं

सुखं रथं मोक्षं जगद्वा युनक्ति ( तेन-अस्मिन्-आजौ वाजं सनिषत् ) तेन खल्वस्मिन् प्राप्तव्ये-आनन्द भोगं-अन्नादिभोग स्थाने सम्भाजयति ( अस्य-अदब्धस्य स्वयशसः-विरप्शिनः ) अस्याहिंसनीयस्य स्वाधार यशस्विनो महतः ( महान् हि महिमा पनस्यते ) महान् हि महिमा प्रशस्यते ॥ ६ ॥

भाषान्वयार्थ—( सिन्धुः ) जो सुखों को वहाता है वह परमात्मा ( अश्विनं सुखं रथं-युयुजे ) व्यापनेवाले सुखसाधक रमणीय मोक्ष या जगत् को हमारे लिए युक्त करता है ( तेन-अस्मिन्-आजौ) उससे इस प्राप्तव्य भोग स्थान में ( वाजंसनिषत् ) आनन्दभोग को सम्भाजित करता है ( अस्य-अदब्धस्य ) इस अहिंसित ( स्वयशसः-विरप्शिनः ) स्वाधार यश वाले महान् परमात्मा की ( महान् हि महिमा पनस्यते ) ऊंची ही महिमा प्रशस्त की जाती है-गाई जाती है ॥ ९ ॥

भावार्थ—परमात्मा सुखों को प्रवाहित करने वाला महान् सिन्धु है। वह हमारे लिए मोक्षानन्द तथा जगत् के सुख को प्रदान करता है, उसकी महिमा महान् है, हमें उसके यश का और गुणों का गान करना चाहिए ॥ ९ ॥



# षट्सप्ततितमं सूक्तम्

ऋषिः—ऐरावतोजरत्कर्णः सर्पः ।

देवता—ग्रावाणः ।

छन्दः—१, ६, ८ पादनिचृज्जगती २, ३ आर्ची स्वराड्जगती
४, ७ निचृज्जगती ५ असुरी स्वराडार्ची निचृज्जगती ।

विषयः—अत्र सूक्ते वेदे मोक्षप्राप्तेरुपायः संसारसुखस्य चोपदेशाः सन्ति सदाचरणेन जीवनसाफल्यं विदुषां समागमः करणीय इत्येवमादयो विषयाः प्रदर्श्यन्ते ।

इस सूक्त में मोक्ष प्राप्ति का उपाय, संसार सुख के उपदेश सदाचरण से जीवन की सफलता विद्वानों का समागम करना चाहिए इत्यादि विषय हैं ।

आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन ।
उभे यथा नो अहनी सचाभुवा सदः सदो वरिवस्यात उद्भिदा ॥ १ ॥

आ । व । ऋञ्जसे । ऊर्जाम् । विऽउष्टिषु । इन्द्रम् । मरुतः । रोदसी इति । अनक्तन । उभे इति । यथा । नः । अहनी इति । सचाऽभुवा । सदःऽसदः । वरिवस्यातः । उत्ऽभिदा ॥ १ ॥

संस्कृतान्वयार्थः—( वः ) युष्मान् विदुषः ( आ-ऋञ्जसे ) समन्तात् प्रसाधयामि प्रार्थयेऽनुकूलान् सेवे यद् यूयम् (ऊर्जां व्युष्टिषु) अन्नादि-वस्तूनां कमनीयप्रवृत्तिषु "व्युष्टिषु विविधा उष्टयः कामनाश्च तासु" [ ऋ० १ । ४४ । ३ दयानन्दः ] ( इन्द्रं मरुतः-रोदसी-अनक्तन ) ऐश्वर्यवन्तं परमात्मानं रोदसी रोधसी पापाद् रोधयितारौ मित्रसम्बन्धिनौ जीवन्मुक्तान् "मरुतो वै देवविशः" [ कौ० ७ । ८ ] "रोदसी रोधसी" [ निरु० ६ । १ ] सम्पादयत भावयत ( यथा नः-उभे सचाभुवा-अहनी ) यथा हि तया कृपया अस्मभ्यम्-उभौ सहभुवौ-अहोरात्रौ ( सदः सदः ) गृहे गृहे "ङि प्रत्ययस्य लुक्" सुपां सुलुक्० [ अष्टा० ७ । १ । ३९ ] ( उद्भिदा ) दुःखनिवारकत्वेन "उद्भिदाः-दुःखनिवारकाः" [ ऋ० १ । ८९ । १ दयानन्दः ] ( वरिवस्यातः ) सेवेताम्-दुखनिवारकौ भवेताम् ॥ १ ॥

भाषान्वयार्थ—( वः ) तुम विद्वानों को ( आ ऋञ्जसे ) भलीभांति अपने अनुकूल बनाता हूँ, कि तुम ( उर्जां व्युष्टिषु ) अन्नादि को विविध कामनाओं में ( इन्द्रं मरुतः-रोदसी ) ऐश्वर्यवान् परमात्मा को, जीवन्मुक्तों को, पाप से रोकने वाले मित्र सम्बन्धियों को ( अनक्तन ) सुखरूप भावित करो ( यथा नः ) जैसे उस कृपा से हमारे लिये ( उभे सचा भुवा-अहनी ) दोनों साथ होने वाले दिन रात ( सदःसदः ) घर घर में ( उद्भिदा ) दुःखनिवारक रूप से ( वरिवस्यातः ) सेवन में आवें-दुख निवारक होवें ॥ १ ॥

भावार्थ—विद्वानों के अनुकूल आचरण करने से अन्नादि प्राप्ति होती है परमात्मा जीवन्मुक्त मित्र सम्बधी जन भी अपनाते हैं, दिन रात भी प्रत्येक घर में सुखदायक व्यतीत होते हैं ॥ १ ॥

तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि ।
विदद्ध्यर्यो अभिभूति पौंस्यं महो राये चित्तरुते यदर्वतः ॥ २ ॥

तत् । ऊँ इति । श्रेष्ठम् । सवनम् । सुनोतन । अत्यः । न । हस्तऽयतः । अद्रिः । सोतरि । विदत् । हि । अर्यः । अभिऽभूति । पौंस्यम् । महः । राये । चित् । तरुते । यत् । अर्वतः ॥ २ ॥

संस्कृतान्वयार्थः—(तत्-उ श्रेष्ठं सवनं सुनोतन) तत् खलु श्रेष्ठमवसरं सम्पादयत ( हस्तयतः-अत्यः-न ) हस्तयोर्यतो नियन्त्रितोऽश्वो यथा भवति तथा "अत्योऽश्व नाम" [ निघ० १ । १४ ] ( सोतरि-अद्रिः ) प्रेरयितरिपरमात्मनि श्लोककर्त्ता प्रशंसको भूयासम् "अद्रिरसि श्लोककृत्" [ कठ० १ । ५ ] ( अर्यः-अभिभूति पौंस्यं विदत् ) स्वामी परमात्मा अभिभूतिकरं पौरुषमात्मबलं प्रापयेत् ( महः-राये चित् ) महते मोक्षैश्वर्याय खल्वपि ( यत्-अर्वतः-तरुते ) प्राप्तव्यान् प्राप्तान् वा पदार्थान् प्रयच्छति प्रवर्धयति तथाभूतं पौरुषं प्रापयेत् ॥ २ ॥

भाषान्वयार्थ—( तत्-उ ) उस ( श्रेष्ठं सवनम् ) श्रेष्ठ अवसर को ( सुनोतन ) सम्पन्न करो ( हस्तयतः ) हाथों में नियंत्रित ( अत्यः-न ) घोड़े के समान—जैसे घोड़ा होता है ( सोतरि ) प्रेरयिता परमात्मा में ( अद्रिः ) मैं प्रशंसक होऊँ ( अर्यः ) वह स्वामी परमात्मा ( अभिभूति पौंस्यम् ) अभिभवकारी पौरुष-आत्मबल को ( विदत् ) प्राप्त करावे ( यत्-अर्वतः ) प्राप्तव्य या प्राप्त पदार्थों को ( तरुते ) प्रदान करता है—बढ़ाता है ॥ २ ॥

भावार्थ—परमात्मा की स्तुति में इतना बंध जाऊं जैसे घोड़ा बंध जाता है, इस ऐसे श्रेष्ठ अवसर को हम बनावें, वह स्वामी परमात्मा आत्मबल प्रदान करे, जिससे कि प्राप्तव्य पदार्थों को हम प्राप्त कर सकें ॥ २ ॥

तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥ ३ ॥

तत् । इत् । हि । अस्य । सवनम् । विवेः । अपः । यथा । पुरा । मनवे । गातुम् । अश्रेत् । गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्निजि । प्र । ईम् । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अस्य ) अस्यात्मनः ( तत्-इत्-हि ) तदेव ( सवनम्-अपः-विवेः ) अवसरं कर्म विवृणोति ( यथा मनवे पुरागातुम्-अश्रेत् ) यथा पुरा काले मननशीलाय-अस्मैजनाय गमनं प्राप्तमभूत् ( त्वाष्ट्रे गो-अर्णसि ) त्वष्टुः परमात्मनः सम्बन्धिनि स्तुतिभिः प्राप्तव्यानन्दरसे मोक्षे ( अश्वनिर्णिजि ) इन्द्रियाश्वानां शोधनेन लभ्ये ( अध्वरेषु-अध्वरान्-ईं प्र-अशिश्रयुः ) अध्यात्मयज्ञेषु—अध्वरवन्तोऽध्यात्मयाजिनः "अकारोमत्वर्थीयोऽत्र छान्दसः" आश्रिता भवन्ति ॥३ ॥

**भाषान्वयार्थ**—( अस्य ) इस आत्मा के ( तत्-इत्-हि ) उस ( सवनम् ) अवसर ( अपः ) तथा, कर्म को ( विवेः ) विकसित करता है ( यथा पुरा ) जैसे पूर्व ( मनवे ) मननशील जन के लिए ( गातुम्-अश्रेत् ) गमन को प्राप्त हुआ है ( त्वाष्ट्रे ) त्वष्टा—परमात्मा सम्बन्धी—( गो-अर्णसि ) स्तुतियों से प्राप्तव्य आनन्दरसरूप मोक्ष में ( अश्वनिर्णिजि ) इन्द्रिय घोड़ों के शोधन से प्राप्त होने योग्य में ( अध्वरेषु ) अध्यात्म यज्ञों में ( अध्वरान् ) अध्यात्मयाजी ( अशिश्रयुः ) आश्रित होवें ॥ ३ ॥

**भावार्थ**—आत्मा के लिए परमात्मा यह अवसर और कर्म विधान प्रदर्शित करता हैं कि आनन्द रसपूर्ण मोक्ष कैसे प्राप्त होता है, जो परम्परा से स्तुति करने वाला प्राप्त करता था । उस ऐसे अभीष्ट आनन्द का अध्यात्मयाजी आश्रय लिया करते हैं ॥ ३ ॥

**अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।**
**आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ४ ॥**

अप । हत । रक्षसः । भङ्गुरऽवतः । स्कभायत । निःऽऋतिम् । सेधत । अमतिम् । आ । नः । रयिम् । सर्वऽवीरम् । सुनोतन । देवऽअव्यम् । भरत । श्लोकम् । अद्रयः ॥ ४ ॥

**संस्कृतान्वयार्थः**— ( अद्रयः-भङ्गुरावतः-रक्षसः-अपहत ) हेमन्त्रोपदेष्टारः प्रहारकप्रवृत्तिमतो दुष्टान् विचारान् नाशयत ( निर्ऋतिं स्कभायत ) नीरमणीयां प्रवृत्तिं स्तम्भयत—नियन्त्रयत ( अमतिम्-अपसेधत ) अज्ञतां दूरी कुरुत ( नः-सर्ववीरं-रयिम्-आसुनोतन) अस्मभ्यं सर्वप्राणयुक्तम् "प्राणा वै दशवीराः [ श० १२ । ८ । १ । २३] पोषं पोषणम् "रयिं देहि पोषं देहि" [ काठ० १ । ७ ] सम्पादयत ( देवाव्यं श्लोकं भरत ) परमात्मदेवः प्राप्यो येन भवति तथाविधं वचनमस्मासु धारयत ॥ ४ ॥

**भाषान्वयार्थ**—( अद्रयः ) हे मंत्रोपदेश करने वाले विद्वानो ! तुम ( भङ्गुरावतः ) प्रहारक प्रवृत्ति वाले—( रक्षसः ) दुष्ट विचारों को ( अपहत ) नष्ट करो ( निर्ऋतिं स्कभायत ) रमणता रहित या अरमणीय प्रवृति को नियंत्रित करो—रोको ( अमतिम्-अपसेधत ) अज्ञता को दूर करो ( नः ) हमारे लिए ( सर्ववीरं रयिम् ) समस्त प्राणों से युक्त पोषण को ( आसुनोतन ) सम्पादित करो ( देवाव्यं श्लोकं-भरत ) परमात्मदेव जिससे प्राप्त हो ऐसे वचन को हमारे अन्दर धारण करो ॥ ४ ॥

**भावार्थ**—विद्वान् जन जनता को ऐसा उपदेश करें जिस से कि उसके अन्दर से दुष्ट विचार, अस्थिरता, अज्ञान दूर होकर स्वास्थ्य और परमात्मा की प्राप्ति कर सकें ॥ ४ ॥

**दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।**
**वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥ ५ ॥**

दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् । आश्वपःऽतरेभ्यः । वायोः । चित् । आ । सोमरभःऽतरेभ्यः । अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( वः ) हे अद्रयो मन्त्रवचनोपदेष्टारः ! युष्मभ्यम् ( दिवः-चित्-अमवत्तरेभ्यः ) सूर्यादपि खलुबलवत्तरेभ्यः प्रतापवत्तरेभ्यातीवप्रतापवद्भ्यः "अमो बलम्" [ निरु० १० । २१ ] ( विभ्वना चित् आश्वपस्तरेभ्यः ) विभोः-आकाशादपि "विभुः-व्यापकः-आकाशः" [ यजु० ५ । ३१ दयानन्द ] 'टादेशः पञ्चमीस्थाने व्यत्ययेन' शीघ्रं विद्यासु अतिव्यापकेभ्यः ( वायोः-चित्-सोमरभस्तरेभ्यः ) वायोरपि शान्तज्ञान-रूप वेगवत्तरेभ्यः ( अग्नेः-चित्-पितुकृत्तरेभ्यः ) अग्नेरपि सर्वंस्वान्न कर्तृतरेभ्यः सर्वान्न-स्यातिभक्षकेभ्यः ( आ-अर्च ) अहमर्चामि प्रशंसामि "पुरुष व्यत्ययेन मध्यमः पुरुषः" ॥ ५ ॥

**भाषान्वयार्थ**—( वः ) हे मन्त्र वचन के उपदेष्टा जनो ! तुम्हारे लिए ( दिवः-चित्-अमवत्तरेभ्यः ) सूर्य से भी बलवत्तरो—अति प्रताप वालों के लिए ( विभ्वना चित् ) आकाश से भी ( आश्वपस्तरेभ्यः ) विद्याओं में शीघ्र अति व्यापकों के लिए ( वायोः-चित् ) वायु से भी ( सोमरभस्तरेभ्यः ) शान्त ज्ञानरूप अतिवेगवालों के लिए ( अग्नेः-चित् ) अग्नि से भी ( पितु-कृत्तरेभ्यः ) सब अपना अन्न अत्यन्त करने वालों के लिए—सब अन्न के अत्यन्त भक्षकों के लिए ( आअर्च ) मैं प्रशंसा करता हूँ ॥ ५ ॥

**भावार्थ**—मन्त्रोपदेष्टा जन सूर्य से भी अधिक प्रतापी, तेजस्वी, आकाश से भी अधिक विद्याओं में व्यापक, वायु से भी अधिक शान्त प्रवाह वाले, अग्नि से भी अधिक ज्ञानान्न के पचाने वाले होने चाहिएं और उनकी अर्चना करनी चाहिए ॥ ५ ॥

भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरः ॥ ६ ॥

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा । दिविता । दिवित्मता । नरः । यत्र । दुहते । काम्यम् । मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥६॥

**संस्कृतान्वयार्थः**—( यशसः-ग्रावाणः ) यशस्विनः 'अकारोमत्वर्थीयः' विद्वांसः "विद्वांसो ग्रावाण." [ श० ३ । ६ । ३ । १४ ] ( नः-अन्धसः-सोतु-भुरन्तु ) अस्मभ्य-माध्यानी यस्य परमात्मनः स्तोतव्यमुपासनीयं स्वरूपं भरन्तु "उकारश्छान्दसः" ( दिवित्मता दिविता वाचा ) दीप्तिमत्या दीव्यया वेदवाचा धारयन्तु–उपदिशन्तु ( यत्र ) यस्यां स्थितम् ( काम्यं मधु नरः-दुहते ) कमनीयं ज्ञानमधु जीवन्मुक्ता पुरुषाः "नरो ह वै देव विशः" [ जै० १ । ८६ ] दुहन्ति-निः सारयन्ति ( मिथस्तुरः-अभितः-आघोषयन्तः ) परस्परं शीघ्रतां कुर्वन्तः सर्वतो घोषयन्तः प्रसिद्धं कुर्वन्तो वर्त्तन्ते ॥ ६ ॥

**भाषान्वयार्थ**—( यशसः-ग्रावाणः ) यशस्वी विद्वान् ( नः ) हमारे लिए ( अन्धसः सोतु ) आध्यानीय–भलीभांति ध्यान करने योग्य परमात्मा के उपासनीय स्वरूप को ( भुरन्तु ) उपदिष्ट करें ( दिवित्मता ) दीप्ति वाली–( दिविता) दिव्य ( वाचा ) वेदवाणी के द्वारा उपदेश करें (यत्र) जिसमें स्थित ( काम्यं मधु ) कमनीय ज्ञानमधु को ( नरः ) जीवन्मुक्त पुरुष ( दुहते ) दुहते हैं–निकालते हैं ( मिथस्तुरः ) परस्पर शीघ्रता करते हुए ( आघोषयन्तः ) सर्वतः घोषित करते हुए, प्रसिद्ध करते हुए वर्तते हैं ॥ ६ ॥

**भावार्थ**—जीवन्मुक्त जन ध्यान करने योग्य परमात्मा के स्वरूप को दिव्यवाणी वेद के द्वारा समझाते हैं, जिस वेदवाणी में ज्ञानमधु भरा हुआ है, यह घोषित करते हुए उसे प्रकट करते हैं ॥६ ॥

सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् । गोऽइषः । दुहन्ति । ते दुहन्ति ऊधः । उपसेचनाय । कम् । नरः । हव्या । न । मर्जयन्ते । आसभिः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( गविषः ) स्तुतिवाचमिच्छन्तः ( रथिरासः ) रमणीय-मोक्षलक्ष्यवन्तः "रथिरः प्रशस्ता रथा विद्यन्ते यस्य सः" [ऋ० ३ । १ । १७ दयानन्दः ] ( अद्रयः ) श्लोककृतो मन्त्रवचनस्याध्यापकाः "अद्रिरसि श्लोककृत्" [ काठ० १ । ५ ] ( सोमं सुन्वन्ति ) शान्तस्वरूपं परमात्मानं स्वात्मनि साक्षात् कुर्वन्ति ( अस्य ) परमात्मनः ( रसं-निः-दुहन्ति ) आनन्दमन्तरात्मनि गृह्णन्ति "आनन्दो वै रसः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" [ ] तथा ( उपसेचनाय ऊधः-दुहन्ति )

अन्येभ्योऽपित्पपरिवेशनाय तमूधोरूपंपरमात्मानं दुहन्ति ( नरः कं हव्या न आसभिः मर्जयन्तः ) हे जीवन्मुक्ताः खलु हव्यानि प्रार्थनीयवचनानि सम्प्रति "नकारः सम्प्रत्यर्थे [ निरु० ६ । ८ ] मुखैः प्रेरयन्तः सन्तः "मार्ष्टि गतिकर्मा" [ निघ० २ । १४ ] ॥ ७ ॥

भाषान्वयार्थ—स्तुति को चाहते हुए ( रथिरासः ) रमणीय मोक्ष लक्ष्य वाले ( अद्रयः ) मन्त्र वचन के अध्यापक ( सोमं सुन्वन्ति ) शान्तस्वरूप परमात्मा को अपनी आत्मा में साक्षात् करते हैं ( अस्य ) इस परमात्मा के ( रसं निः-दुहन्ति ) आनन्द को आत्मा में ग्रहण करते हैं तथा ( उपसेचनाय ) अन्यों के लिए भी देने के लिए ( ऊधः ) उस ऊधो रूप-आनन्दाधार परमात्मा को ( दुहन्ति ) दोहते हैं ( नरः ) वे जीवन्मुक्त ( कं हव्या ) प्रार्थनीय वचनों को ( न ) सम्प्रति ( आसभिः ) मुखों से ( मर्जयन्तः ) प्रेरित करते हुए वर्तमान रहते हैं ॥ ७ ॥

भावार्थ—जीवन्मुक्त महानुभाव स्तुतियों के द्वारा अपनी आत्मा में परमात्मा को साक्षात् करते हैं और अन्यों के लिए भी अपने प्रवचनों से उन्हें परमात्मा की ओर प्रेरित करते हैं ॥ ७ ॥

एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामं वामं वो दिव्याय धाम्ने वसु वसु वः पार्थिवाय सुन्वते ॥ ८ ॥

एते । नरः । सुऽअपसः । अभूतन । ये । इन्द्राय । सुनुथ । सोमम् । अद्रयः । वामम्ऽवामम् । वः । दिव्याय । धाम्ने । वसुवसु । वः । पार्थिवाय । सुन्वते ॥८॥

संस्कृतान्वयार्थः—( एते-अद्रयः-नरः ) एते ये मन्त्रवचनपाठका जीवन्मुक्ताः ( स्वपसः ) शोभनकर्माणो यूयं ( अभूतन ) भवथ ( मे-इन्द्राय सोमं सुनुथ ) मह्य परमात्मने खलूपासनारसं सम्पादयथ ( वः-वामं वामं दिव्याय धाम्ने ) युष्माकं श्रेष्ठं श्रेष्ठं स्तुति वचनं दिव्य धाम्ने मोक्षाय मोक्ष प्राप्तये भवति ( वसु वसु पार्थिवाय सुन्वते ) सामान्यं धनं धनं प्रत्येकं धनं पार्थिव शरीराय सुखसम्पादनाय यूयं समर्थाः स्थ ॥ ८ ॥

भाषान्वयार्थ—( एते ) ये ( अद्रयः ) मन्त्र वचन पढ़ने वाले ( नरः ) जीवन्मुक्त ( स्वपसः ) शोभन कर्म वाले ( अभूतन ) तुम हो ( ये ) जो ( इन्द्राय परमात्मा के लिए (सोमम्) उपासना रस को ( सुनुथ ) सम्पादित करते हो ( वः ) तुम्हारा ( वामं वामम् ) श्रेष्ठ श्रेष्ठ स्तुति वचन ( दिव्याय धाम्ने ) मोक्षधाम के लिए मोक्ष प्राप्ति के लिए है ( वसु वसु ) प्रत्येक सामान्य धन ( पार्थिवाय ) पार्थिव शरीर के लिए ( सुन्वते ) सुख सम्पादन के लिए तुम समर्थ हो ॥ ८ ॥

भावार्थ—जीवन्मुक्त महानुभावों के प्रवचन मोक्षानन्द के लिए तथा सांसारिक सुख के लिए भी होते हैं, उन का सत्संग करना आवश्यक है ॥ ८ ॥



# सप्तसप्ततितमं सूक्तम्

ऋषिः—भार्गवः स्यूमरश्मिः ।

देवता—मरुतः ।

छन्दः—१, ३ निचृत् त्रिष्टुप् २, ४ त्रिष्टुप्, ६-८ विराट् त्रिष्टुप् ५ पादनिचृज्जगती ।

विषयः—अस्मिन् सूक्ते जीवन्मुक्तेभ्यो ज्ञानं गृहीत्वा जनाः सांसारिक सुखस्य मोक्षानन्दस्य च अधिकारिणो भवन्तीत्येवमादयो विषयाः सन्ति ।

इस सूक्त में जीवन्मुक्त विद्वानों से ज्ञान ग्रहण करके सांसारिक सुख और मोक्षानन्द के अधिकारी बनते है इत्यादि विषय कहा है।

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मन्तो न यज्ञा विजानुषः ।
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥ १ ॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मन्तः । न । यज्ञाः । विजानुषः । सुऽमारुतम् । न । ब्रह्माणम् । अर्हसे । गणम् । अस्तोषि । एषाम् । न । शोभसे ॥ १ ॥

संस्कृतान्वयार्थः—( अभ्रप्रुषः-न ) यथा मेघात् सिच्यमाना जलबिन्दवः "प्रुषायत् सिञ्चत्" [ ऋ० १ । १२१ । २ दयानन्दः ] प्राप्यन्ते तथा ( वाचा ) स्तुत्या प्रसन्नाः सन्तो जीवन्मुक्ता विद्वांसः ( वसुप्रुष ) वसूनि ज्ञानधनानि सिञ्चन्ति 'व्यत्ययेन बहुवचने-एकवचनम्' ( हविष्मन्तः-यज्ञाः न-विजानुषः ) आहुतिमन्तो यजमानाः "यज्ञो वै यजमानः" [ जै० १ । २५६ ] सुखस्य विशेषेण जनयितारो लोकेभ्यो भवन्ति तथा यूयं सुखयत ( ब्रह्माणं सुमारुतं गणं न-अर्हसे ) एतेषां जीवन्मुक्तानां महान्तं व्यवस्थितं गणं "मरुतो ह वै-देवविशः ( कौ० ७ । ८ ] सम्प्रति "नकारः सम्प्रत्यर्थे" [ निरुक्त ६ । ८ ] तेषां सत्काराय ( न शोभसे ) तथा च भाषणाय "शुभभाषणे" [ भ्वादि० ] ( अस्तोषि ) प्रशंसय "स्तुहि प्रशंसय" [ ऋ० १ । २२ । ६ दयानन्दः ] ॥ १ ॥

भाषान्वयार्थ—( अभ्रप्रुषः-न ) मेघ से सींचे जाते हुए जल बिन्दु जैसे प्राप्त होते हैं वैसे ( वाचा ) स्तुति से प्रसन्न हुए जीवन्मुक्त विद्वान् ( वसुप्रुष ) ज्ञान-धनों को सींचते हैं ( हविष्मन्तः)

आहुति वाले ( यज्ञाः ) यजमान लोग ( न विजानुषः ) सुख के विशेषरूप से उत्पन्न करने वाले लोगों के लिए जैसे होते हैं वैसे तुम सुख देओ ( एषाम् ) इन जीवन्मुक्तों को ( ब्रह्मरणाम् ) महान् ( सुमारुतम् ) व्यवस्थित ( गणम् ) मण्डल की ( न अर्हसे ) सम्प्रति प्रशंसा कर, उनके सत्कार के लिए ( न शोभसे ) सम्प्रति भाषण के लिए ( अस्तोषि ) प्रशंसा कर ॥ १ ॥

**भावार्थ**—जीवन्मुक्त महानुभावों की प्रशंसा करनी चाहिए, वे अपने अमृतभाषण को बरसाते हैं जैसे मेघ से जल बरसाते हैं ॥ १ ॥

**श्रिये मर्यासो अञ्जीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।**
**दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥ २ ॥**

श्रिये । मर्यासः अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः । अति । क्षपः । दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । वावृधुः ॥ २ ॥

**संस्कृतान्वयार्थः**—( मर्यासः ) मनुष्याः ( श्रिये-अञ्जीन्-अकृण्वत ) भद्राय "श्रीर्वै भद्रम्" [ जै० ३ । १७२ ] तान् जीवन्मुक्तान् व्यक्तान् कुर्वन्ति ( सुमारुतम् ) व्यवस्थित मरुद्गणं विद्वन्मण्डलं यथा ( पूर्वीः-अतिक्षपः ) पुरातनीः क्षेपयित्रीःप्रेरयित्री प्रवृत्तीरतीत्याग्रे गच्छेम ( दिवः-पुत्रासः ) प्रकाशमानस्य परमात्मनः पुत्रा जीवन्मुक्ताः ( एताः-न येतिरे ) एताः सुप्रवृत्तीः खलु न यातयन्ति नाशयन्ति ( ते-आदित्यासः-अक्राः-न वावृधुः ) ते साधारणाः पृथिव्यां भवा शरीरस्था वा आक्रमणकारिणो दोषा न वर्धरन् ॥ २ ॥

**भाषान्वयार्थ**—( मर्यासः ) मनुष्य ( श्रिये ) भद्र कल्याण के लिए ( अञ्जीन् अकृण्वत ) उन जीवन्मुक्तों को प्रसिद्ध करते हैं ( सुमारुतम् ) जिनका सुव्यवस्थित विद्वन्मण्डल है ( पूर्वीः-अतिक्षिपः ) प्राचीन प्रेरणा करने वाली प्रवृत्तियों को हम आगे-आगे प्राप्त करें ( दिवः-पुत्रासः ) वे प्रकाशमान परमात्मा के पुत्र जीवन्मुक्त ( एताः-न येतिरे ) इन सुप्रवृतियों को नष्ट नहीं करते है ( ते-आदित्यासः ) वे अदिति-पृथिवी पर होने वाले या शरीरस्थ ( अक्राः ) आक्रमणकारी दोष ( न वावृधुः ) न बढ़ें ॥ २ ॥

**भावार्थ**—जीवन्मुक्त महानुभावों को आदर देना चाहिए, इनके द्वारा प्राप्त प्रवृत्तियां या प्रेरणाएँ मनुष्य को आगे ले जाती हैं, उनसे पार्थिव एवं शारीरिक दोष नहीं बढ़ते हैं ॥ २ ॥

**प्र ये दिवः पृथिव्या न बर्हणात्मना रिरिच्रे अभ्रान्न सूर्यः ।**
**पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥ ३ ॥**

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिच्रे । अभ्रात् । न । सूर्यः । पाजस्वन्तः । न । वीराः । पनस्यवः । रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

संस्कृतान्वयार्थः—( ये बर्हणा त्मना ) ये जीवन्मुक्ता विद्वांसः खलु प्रवृद्धेनात्मबलेन ( दिवः-पृथिव्याः ) द्युलोकान्-द्युलोक ज्ञानात् पृथिवीलोकात्-पृथिवीलोकज्ञानात् ( अभ्रात्-न ) अभ्रादभ्रवतोऽन्तरिक्षादन्तरिक्षलोक ज्ञानात् "अभ्र शब्दादकारो मत्वर्थीयश्छान्दसः" ( न प्र रिरिच्रे ) नहि प्रिक्ताः परिवर्जिताः सन्ति, किन्तु ( सूर्यः-न ) सूर्य इव सन्ति, यथा सूर्यो द्युलोकेन पृथिव्या-अभ्रमयेनान्तरिक्षेण सहच न वियुक्तोऽस्ति ( पाजस्वन्तः-वीराः-न पनस्यवः ) बलवन्तो वीरा इव ज्ञानवन्तः स्वप्रशंसायोग्याः ( रिशादसः-न ) हिंसाभाव प्रक्षेप्तार इव ( अभिद्यवः-मर्याः ) ज्ञानेनाभिद्योतमाना मनुष्याः सन्ति तेषां सङ्गतिः कार्येति शेषः ॥ ३ ॥

भाषान्वयार्थ—( ये ) जो जीवन्मुक्त विद्वान् ( बर्हणा ) प्रवृद्ध-( त्मना ) आत्मबल से ( दिवः ) द्युलोक-ज्ञान से ( पृथिव्याः ) पृथिवीलोक ज्ञान से ( अभ्रात् ) मेघवाले अन्तरिक्ष ज्ञान से ( न प्ररिरिच्रे ) नहीं परिवर्जित हैं किन्तु ( सूर्यः-न ) सूर्य के समान, जैसे सूर्य द्युलोक से पृथिवी लोक से और अन्तरिक्ष लोक से वियुक्त नहीं है (पाजस्वन्तः) बल वाले (वीराः-न) वीरों के समान ज्ञान वाले ( पनस्यवः ) अपनी प्रशंसा के योग्य ( रिशादसः-न ) हिंसा भाव से दूर करने वालों के समान ( अभिद्यवः ) ज्ञान से द्योतमान ( मर्याः ) मनुष्य हैं उनकी सङ्गति करनी चाहिए ॥ ३ ॥

भावार्थ—जो जीवन्मुक्त महानुभाव भारी आत्मबल से युक्त हो तीनो लोकों के ज्ञान से युक्त हों वे प्रशंसा के योग्य हैं उनकी सङ्गति अपने कल्याण के लिए मनुष्य करें ॥ ३ ॥

**युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति ।**
**विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आ गत ॥ ४ ॥**

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न । मही । श्रथर्यति । विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् । सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥ ४ ॥

संस्कृतान्वयार्थः—( युष्माकं बुध्ने ) हे जीवन्मुक्ता विद्वांसः ! युष्माकं बोधने वेदज्ञाने "बुध्नः-यो बोधयति सर्वान् पदार्थान्" [ ऋ० १ । ६६ । ६ दयानन्दः ] ( अपां न यामनि मही न विथुर्यति न श्रथर्यति ) यथा जलानां गमने पृथिवी न व्यथां गच्छति "विथुराव्यथनानि" [ ऋ४ ६ । २५ । ३ दयानन्दः ] न हिंसिता भवति "व्यथ वधकर्मसु" [ निघ० २ । १९ ] तथाऽस्माकमन्तः स्थली न व्यथते हिंस्यते ( वः-अयं-यज्ञः-विश्वप्सुः-अर्वाक् ) एष युष्माकं विश्वव्यापी विविधरूपो वा "विश्वप्सुविविधरुपम्" [ ऋ० ६ । २५ । ३ दयानन्दः ] ज्ञानयज्ञोऽस्मदभिमुखं सुष्ठु भवतु ( प्रयस्वन्तःसत्राचः-आगत ) प्रशस्तज्ञानवन्तः "प्रयस्वन्तः प्रशस्तानि प्रयांसि प्रज्ञानानि विद्यन्ते येषां ते [ ऋ० १ । ६० । ३ दयानन्दः ] "सत्रा सत्यनाम" [ निघं० ३ । १० ] सत्यमञ्चन्ति प्राप्नुवन्ति च सत्यं ब्रह्म प्राप्ता आगच्छत ॥ ४ ॥

भाषान्वयार्थ—( युष्माकम् ) हे जीवन्मुक्त विद्वानो तुम्हारे ( बुध्ने ) बोधन कराने वाले वेदज्ञान में ( अपांन ) जलों के जैसे ( यामनि मही ) गमन में युक्त पृथिवी ( न विथुर्यति ) व्यथा को प्राप्त नहीं होती-हिंसित नहीं होती है वैसे हमारो अन्तः स्थली व्यथित नहीं होती है ( वः ) तुम्हारा ( अयं यज्ञः ) यह ज्ञानयज्ञ ( विश्वप्सुः-अर्वाक् ) विश्व व्यापी या विविधरूप भलीभांति हमारे अभिमुख हो-हमें प्राप्त हो (प्रयस्वन्तः-न) प्रशस्तज्ञान वालों के समान (सत्राचः-आगत) सत्य को प्राप्त होने वाले आवें ॥ ४ ॥

भावार्थ—जीवन्मुक्त विद्वानों के द्वारा उनका ज्ञान बोधन प्रवाह हमें प्राप्त होवे जैसे जलों के प्रवाह से पृथिवी की कोई हानि नहीं होती ऐसे ही हमारी अन्त स्थली की कोई हानि नहीं होती वह तो निर्मल होती चली जाती है वह विश्व व्यापी ज्ञानयज्ञ हमें प्राप्त होता रहे एतदर्थ तुम भी प्राप्त होते रहो ॥ ४ ॥

**यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मन्तो न भासा व्युष्टिषु ।**
**श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥५॥**

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न । भासा । विऽउष्टिषु । श्येनासः । न । स्वऽयशसः । रिशादसः । प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥

संस्कृतान्वयार्थः—( यूयम् ) हे विद्वांसः ! यूयं ( धूर्षु-प्रयुजः ) धारणीयेषु ज्ञानप्रबन्धेषु "धूर्वते धूर्धारयतेर्वा-अस्मान् [ निरु० ३ । ६ ] प्रयोक्तारः प्रकृष्टेन नियोक्तारः सन्तः ( रश्मिभिः-न ) यथा प्रग्रहैरश्वान् प्रयोजयन्ति तथाऽस्मान् प्रयोजयितारः सन्तः ( भासा-ज्योतिष्मन्तः-न ) यथा वा ज्योतिषा ज्ञान ज्योतिषा ज्ञानप्रकाशवन्तः ( व्युष्टिषु ) विशिष्टज्ञानस्थलीषु जनेभ्यो ज्ञानज्योतिः प्रयच्छन्ति, तद्वत्, ( श्येनासः-न स्वयशसः ) यद्वा यथा शंसनीयाः स्वाधार यशस्विनो महात्मानस्तथा किं वा ( रिशादसः प्रवासः-न ) हिंसकान् दोषान् क्षेप्तारः प्रवसन्तोऽतिथयः प्रवक्तारः ( प्रसितासः परिप्रुषः ) प्रकृष्टनिर्मलाः पवित्राचरणा जनान् स्वोपदेशेनामृतेन परितः सिञ्चन्ति ये तथाभूता अस्माननुगृह्णन्तु ॥ ५ ॥

भाषान्वयार्थ—( यूयम् ) हे विद्वानों ! तुम ( धूर्षु प्रयुजः ) धारणीय ज्ञान प्रबन्धों में प्रकृष्ट रूप से नियुक्त करने वाले होते हुए ( रश्मिभिः-न ) जैसे लगामों से घोड़ों को नियोजित करते हैं वैसे हमें नियुक्त करो ( भासा ज्योतिष्मन्तः-न ) जैसे ज्ञान ज्योति ज्ञान का प्रकाश करते हुए ( व्युष्टिषु ) विशिष्ट ज्ञान-स्थलियों में मनुष्यों के लिए ज्ञान ज्योति प्रदान करते हो उसी भांति ( श्येनासः-न ) अथवा प्रशंसनीय ( स्वयशसः ) स्वाधार यश वाले महात्मा अथवा ( रिशादसः-प्रवासः-न ) हिंसक दोषों को फेंकने वाले प्रवास करते हुए अतिथि प्रवक्ता जन (प्रसितासः परिप्रुषः) प्रकृष्ट निर्मल पवित्राचरण अपने उपदेश अमृत से मनुष्यों को सब ओर से सींचते हैं वैसे हम पर अनुग्रह करें ॥ ५ ॥

भावार्थ—विद्वान् जन अपनी ज्ञान स्थलियों में हमें नियुक्त करें, ज्ञान से और शुभाचरण से हमें प्रसाधित करें, जैसे वे यशस्वी हैं वैसे हमें उपदेश अमृत देकर निर्दोष बनायें ॥ ५ ॥

**प्र यद्वहध्वे मरुतः पराकाद्यूयं महः संवरणस्य वस्वः ।**
**विदानासो वसवो राध्यस्याराच्चिद्द्वेषः सनुतर्युयोत ॥ ६ ॥**

प्र । यत् । वहध्वे । मरुतः । पराकात् । यूयम् । महः । सम्ऽवरणस्य । वस्वः । विदानासः । वसवः । राध्यस्य । आरात् । चित् । द्वेषः । सनुतः । युयोत ॥ ६ ॥

**संस्कृतान्वयार्थः**—( वसवः-मरुतः-यूयम् ) हे वासयितारो विद्वांसः ! यूयम् ( यत् ) यदा ( पराकात् ) परात्-प्रकृष्टान्मोक्षधाम्नः ( महः संवरणस्य वस्वः राध्यस्य ) महत् संवरणीयं ग्रहणीयं वसुमोक्षानन्दधनं 'राध्यं संसेव्यम्" द्वितीयास्थाने षष्ठी व्यत्ययेन ( वहध्वे ) प्रापयत निजाध्यात्मप्रवचनेन, तदा ( आरात्-चित् ) अन्तः स्थानात्-अस्माकमन्तरात् खलु ( सनुतः-द्वेषः-युयोत ) अन्तर्हिताः ["सनुतः-निर्णीतान्तर्हितनाम निघ० ३ । २५"] द्वेषभावनाः पृथक् कुरुतेति युष्माकं महती कृपा ॥ ६ ॥

**भाषान्वयार्थ**—( वसवः ) हे बसाने वाले-( मरुतः ) विद्वानो ( यूयम् ) तुम ( यत् ) जब ( पराकात् ) प्रकृष्ट मोक्षधाम से ( महः ) महान् ( संवरणस्य ) सम्यक् वरण करने योग्य-( वस्वः-राध्यस्य ) आनन्द धन सेवन करने योग्यको ( वहध्वे ) अपने अध्यात्म प्रवचन से प्राप्त कराते हो, तब ( अरात्-चित् ) हमारे पास से ( सनुतः ) अन्तर्हित-अन्दर छिपी हुई ( द्वेषः ) द्वेष भावनाओं को ( युयोत ) पृथक् करो, यह आपकी कृपा होगी ॥ ६ ॥

भावार्थ—विद्वान् जन अपने अध्यात्म उपदेश से मनुष्य को इस योग्य बना देते हैं कि उसके अन्दर की द्वेष भावनाएँ समाप्त हो जाती हैं और मोक्षानन्द का अधिकारी बन जाता है ॥ ६ ॥

**य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत् ।**
**रेवत्स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु ॥ ७ ॥**

यः । उत्ऽऋचि । यज्ञे । अध्वरेऽस्थाः । मरुत्ऽभ्यः । न । मानुषः । ददाशत् । रेवत् । सः । वयः । दधते । सुऽवीरम् । सः देवानाम् । अपि । गोऽपीथे । अस्तु ॥ ७ ॥

**संस्कृतान्वयार्थः**—( यः-अध्वरेष्ठाः-मानुषः ) योऽध्यात्ममार्गवति योग समाधौ स्थितो जनः ( उदृचि ) उत्कृष्ट स्तुतिमति यज्ञे-ज्ञानयज्ञे ( मरुद्भ्यः-सुवीरं-रेवत्-वयः-दधते ) स शोभनप्राणयुक्तं मोक्षैश्वर्य्यवज्जीवनं धारयति "दध धारणे" [ भ्वादि ] तथा ( सः-गोपीथे-देवानाम्-अस्तु ) स खलु सोमपाने "गोपीथाय सोमपानाय" [ निरु० १० । ३६ ] शान्तपरमान्दरस पाने जीवन्मुक्तानां मध्ये भवतु ॥ ७ ॥

**भाषान्वयार्थ**—( यः ) जो ( अध्वरेष्ठाः ) अध्यात्म मार्ग वाले योग में स्थित (मानुषः) मनुष्य तथा ( उद्दचि ) उत्कृष्ट स्तुति वाले ज्ञान यज्ञ के निमित्त ( मरुद्भ्यः ) जीवन्मुक्तों के लिए ( न ) सम्प्रति ( ददाशत् ) अपने आत्मा को दे देता है, समर्पित करता है ( सः ) वह (सुवीरम्) शोभन प्राणों से युक्त ( रेवत् ) मोक्षैश्वर्य वाले ( वयः ) जीवन को ( दधते ) धारण करता है, तथा ( सः ) वह ( गोपीथे ) सोमपान-शान्त परमानन्दरसपान के निमित्त ( देवानाम्-अस्तु ) जीवन्मुक्तों के मध्य में-उनकी श्रेणी में हो जाता है ॥ ७ ॥

**भावार्थ**—अध्यात्ममार्ग वाले योगाभ्यास तथा परमात्मा की स्तुति के निमित्त जो जीवन्मुक्त विद्वानों की संगति से मोक्षानन्द पान करने का अधिकारी उत्कृष्ट जीवन वाला बन जाता है ॥ ७ ॥

ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः ।
ते नोऽवन्तु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः ॥ ८ ॥

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । आदित्येन । नाम्ना । शम्ऽभविष्ठाः । ते । नः । अवन्तु । रथऽतूः । मनीषाम् । महः । च । यामन् । अध्वरे । चकानाः ॥८॥

**संस्कृतान्वयार्थः**—( ते हि ) ते मरुता जीवन्मुक्ता विद्वांसः ( यज्ञेषु यज्ञियाः-ऊमाः ) ज्ञानयज्ञेषु यजनार्हा पूजार्हाः सत्कारयोग्याः पालकाः (आदित्येन नाम्नाशंभविष्ठाः) अदितिरखण्ड सुखं सम्पत्तिरूपमुक्तौभवेनानन्दरसेन जनानामतिशयितकल्याणकारकाः सन्ति ( ते रथतूः ) ते ये रमणीयं मोक्षम्प्रति गमयितारः प्रेरयितारः ( अध्वरे यामन् ) अध्यात्मयज्ञरूपे मार्गे वर्तमानानां ( नः मनीषां महः-च चकानाः ) अस्माकं प्रज्ञां यज्ज्ञानं च कामयमानाः ( अवन्तु ) अस्मान् शिष्यत्वेन रक्षन्तु श्रावयन्तु ॥ ८ ॥

**भाषान्वयार्थ**—( ते ) वे जीवन्मुक्त विद्वान् ( यज्ञेषु ) ज्ञानयज्ञों में ( यज्ञियासः ) पूजा के योग्य-सत्कार योग्य ( ऊमाः ) रक्षक ( आदित्येन ) अखण्ड सुख सम्पत्ति-मुक्ति में होने वाले आनन्दरस से मनुष्यों के अत्यन्त कल्याणकारक हैं ( ते ) षे ( रथतूः ) रमणीय मोक्ष के प्रति प्रेरित करने वाले ( अध्वरे यामन् ) अध्यात्म यज्ञरूप मार्ग में वर्तमान हुओं के ( नः ) हमारी ( मनीषां ) प्रज्ञा को ( महः च ) और महान् ज्ञान को ( चकानाः ) कामना करते हुए ( अषन्तु ) हमें शिष्यभाव से रखें और श्रवण करावें ॥ ८ ॥

**भावार्थ**—जीवन्मुक्त विद्वान् ज्ञान यज्ञ में सत्कार करने योग्य हैं, वे मोक्षानन्द के लिए मनुष्यों को प्रेरित करते हैं और अपनी शरण में लेकर बुद्धि तथा ज्ञान को बढ़ाते हैं ॥ ८ ॥



# अष्टासप्ततितमं सूक्तम्

ऋषिः—भार्गवः स्यूमरश्मिः ।

देवता—मरुतः ।

छन्दः—१ आर्ची त्रिष्टुप् ३, ४ त्रिष्टुप् ८ त्रिष्टुप्, २, ५, ६ विराड् जगती ७ पादनिचृज्जगती ।

विषयः—अत्र सूक्ते ये जीवन्मुक्ताः सर्वत्र विचरणं कृत्वा जनान् पापान्निवारयन्ति ज्ञानोपदेशं कुर्वन्ति तेषां सङ्गति सत्कारौ कार्यावित्येवमादयो विषयाः सन्ति ।

इस सूक्त में जो जीवन्मुक्त सर्वत्र विचरकर मनुष्यों को पाप से बचाते ज्ञान का उपदेश करते हैं उनकी सङ्गति तथा सत्कार करना चाहिए आदि विषय है ।

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो३न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः ॥ १ ॥

विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न । यज्ञैः । सुऽअप्नसः ।
राजानः । न । चित्राः । सुऽसंदृशः । क्षितीनाम् । न मर्याः । अरेपसः ॥ १ ॥

संस्कृतान्वयार्थः—( मन्मभिः-स्वाध्यः-विप्रासः-न) हे मरुतः जीवन्मुक्ता जनाः ! यूयं मननीयैर्मन्त्रैः सुखसम्पत्तिमन्तो विशिष्टकामना पूरका इव ( यज्ञैः-स्वप्नसः-देवाव्यः-न ) यज्ञैः शोभनकर्माणः "अप्नः कर्मनाम" [ निघ० २ । १ ] परमात्मदेवोपासका इव ( सुसंदृशः-चित्राः-राजानः-न ) सुखस्य सन्दर्शयितारः सुखस्यानुभावयितारश्चायनीयाः पूज्या राजान इव ( क्षितीनां अरेपसः-मर्याः-नः ) मनुष्याणां मध्ये निष्पापाः मनुष्या इवास्मभ्यं भवत ॥ १ ॥

भाषान्वयार्थ—( मन्मभिः ) हे जीवन्मुक्त विद्वानों ! तुम मननीय मन्त्रों द्वारा (स्वाध्यः) सुख सम्पत्ति वाले ( विप्रासः-न ) विशेष कामना पूरी करने वाले जैसे ( यज्ञैः ) ज्ञान यज्ञों के द्वारा ( स्वप्नसः ) सुन्दर कर्म वाले ( देवाव्यः-न ) परमात्मदेव की उपासना करने वाले जैसे ( सुसंदृशः ) सुख के सम्यक् दिखाने वाले-सुख का अनुभव कराने वाले ( चित्राः ) चायनीय-पूजनीय ( राजानः-न ) राजाओं के समान ( क्षितीनाम् ) मनुष्यों के मध्य ( अरेपसः ) निष्पाप ( मर्याः-न ) मनुष्यों के समान हमारे लिए होवो ॥ १ ॥

  

भावार्थ—जीवन्मुक्त विद्वान् अपने ज्ञानों से लोगों की कामनाओं को पूरा करने वाले तथा उत्तम कर्मों के द्वारा सुख का अनुभव कराने वाले मनुष्यों के अन्दर विचरण करते रहें॥ १ ॥

अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्य ऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥ २ ॥

अग्निः । न । ये । भ्राजसा । रुक्मऽवक्षसः । वातासः । न । स्वऽयुजः । सद्यःऽऊतयः । प्रऽज्ञातारः । न । ज्येष्ठाः । सुऽनीतयः । सुऽशर्माणः । न । सोमाः । ऋतम् । यते ॥ २ ॥

संस्कृतान्वयार्थः—( अग्निः-न ये भ्राजसा ) अग्निरिव ये मरुतस्तेजसा ( रुक्मवक्षसः-न-स्वयुजः-सद्यः-ऊतयः ) तेजोवक्षा बाहुमन्त इव स्वयोग्यतावन्तः सद्यः रक्षकाः सन्ति ( प्रज्ञातारः-न ज्येष्ठाः सुनीतयः ) प्रकृष्ट ज्ञातार इव प्रमुखाः सुनयनकर्तारः ( सुशर्माणः-न सोमाः-ऋतं यते ) सुप्रतिष्ठानाः "सुशर्मा सुप्रतिष्ठाना" ( श० ४।४।१-१४ ] इव शान्तसुखकराः अध्यात्मयज्ञं गतवते जनाय "यतते गतिकर्मा" [ निघ०-१।१४ ] 'यत् क्विप् प्रत्ययो बाहुलकात्' उपदेशं कुर्वन्ति ॥ २॥

भाषान्वयार्थ—( अग्निः-न ) अग्नि के समान ( ये भ्राजसा ) जो जीवन्मुक्त विद्वान् तेज से ( रुक्मवक्षसः-न) तेजोरूप वक्ष-बाहु जिनके हैं उन जैसे (स्वयुजः) स्व योग्यता वाले (सद्यः-ऊतयः ) तत्काल रक्षक हैं ( प्रज्ञातारः-न ) प्रकृष्ट जानने वालों के समान ( ज्येष्ठाः सुनीतयः ) प्रमुख सुनयन कर्ता-अच्छे नेता सुशर्माणः-न ) सुप्रतिष्ठित जैसे ( सोमाः ) शान्त सुखप्रद (ऋतंयते) अध्यात्म यज्ञ को प्राप्त हुए जन के लिए उपदेश करते हैं ॥ २ ॥

भावार्थ—जो तेजस्वी ज्ञानवान् मनुष्यों के नेता सुप्रतिष्ठित शान्त सुखप्रद जीवन्मुक्त महानुभाव हैं उनसे अध्यात्ममार्ग का उपदेश लेना चाहिए ॥ २ ॥

वातासो न ये धुनयो जिगत्नवोऽग्नीनां न जिह्वा विरोकिणः ।
वर्मण्वन्तो न योधाः शिमीवन्तः पितॄणां न शंसाः सुरातयः ॥ ३ ॥

वातासः । न । ये । धुनयः । जिगत्नवः । अग्नीनाम् । न । जिह्वाः । विऽरोकिणः । वर्मण्ऽवन्तः । न । योधाः । शिमीऽवन्तः । पितॄणाम् । न । शंसाः । सुऽरातयः । ॥ ३ ॥

संस्कृतान्वयार्थः—( वातासः-न ये धुनयः-जिगत्नवः ) प्रबलवायव इव ये मरुतो जीवन्मुक्ता विद्वांसः पापानां कम्पयितारोऽग्रे गन्तारः ( अग्नीनां जिह्वाः-विरोकिणः ) ये चाग्नीनां ज्वाला इव तेजस्विनः ( वर्मण्वन्तः-न योधाः ) कवचिनो योद्धार इव कर्मठाः सन्ति पापविजये ( पितॄणां न शंसाः सुरातयः ) वृद्धानां मध्ये प्रशंसनीया ज्ञानदातारः सन्ति ते सङ्गमनीयाः ॥ ३ ॥

**भाषान्वयार्थ—**( वातासः-न ये ) प्रबल वायु के समान जो जीवन्मुक्त विद्वान् हैं ( धुनयः-जिगत्नवः ) पापियों के कंपाने वाले तथा अग्रगन्ता जन ( अग्नीनां जिह्वाः ) अग्नियों की ज्वालाओं के समान ( विरोकिणः ) विशेष तेजस्वी ( वर्मण्वन्तः-न योधाः ) कवच वाले योद्धाओं के समान कर्मठ हैं पापियों के विजय करने में ( पितॄणां न शंसाः ) वृद्धों के मध्य में प्रशंसनीय जैसे ( सुरातयः ) ज्ञान दाता हैं वे सङ्गति करने योग्य है ॥ ३ ॥

**भावार्थ—**जो महानुभाव जीवन देने वाले, पापों को दूर करने वाले आगे बढ़ाने वाले तेजस्वी कर्मठ प्रशंसनीय तथा ज्ञान के देने वाले हैं उनकी सङ्गति करनी चाहिए ॥ ३ ॥

**रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।**
**वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥ ४ ॥**

रथानाम् । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः । वरेऽयवः । न मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कम् । न । सुऽस्तुभः ॥ ४ ॥

**संस्कृतान्वयार्थः—**( ये रथानां न-अराः सनाभयः ) ये जीवन्मुक्ता विद्वांसो रथस्य चक्राणामरा इव समानबन्धनाः-एकोपास्यवन्तः ( जिगीवांसः शूराः न अभि द्यवः ) जयशीलाः शूरा इव तेजस्विनः ( वरेयवः-न मर्याः-घृतप्रुषः ) वरणीये परमात्मनि मिश्रयितारस्सज्जनास्तेजः प्रेरकाः ( अभिस्वर्तारः-अर्कं न सुष्टुभः ) अर्चनीयं परमात्मानं वक्तुमुपदेष्टुं शीलं येषां ते तथाभूता इव सुष्ठुस्तोतारः "सुष्टुभः शोभनस्तोता" [ ऋ० ५ । ७५ । ४ दयानन्दः ] ॥ ४ ॥

**भाषान्वयार्थ—**( ये ) जो जीवन्मुक्त विद्वान् ( रथानाम्-अराः-न ) रथस्य चक्रों की शलाकाओं के समान ( सनाभयः ) एक बन्धन वाले एक उपास्य वाले ( जिगीवांसः ) जयशील ( शूराः-न ) शूर वीरों जैसे ( अभिद्यवः ) तेजस्वी ( वरेयवः-न मर्याः ) वरणीय परमात्मा में मिलनेवालों के समान सज्जन ( घृतप्रुषः ) तेज के प्रेरक ( अभिस्वर्तारः ) वक्ता जन ( अर्कं न-सुष्टुभः ) अर्चनीय परमात्मा की स्तुति करने वालों के समान हैं उनकी सङ्गति करनी चाहिए ॥ ४ ॥

**भावार्थ—**जो जीवन्मुक्त एक उपस्य वाले पापों पर विजय पाने वाले तेजस्वी वक्ता हैं उनकी सङ्गति करनी चाहिए ॥ ४ ॥

**अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।**
**आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ॥५॥**

अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः । आपः । नः । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अङ्गिरसः । न । सामऽभिः ॥ ५ ॥

**संस्कृतान्वयार्थः**—( ये-अश्वासः-न ज्येष्ठासः-आशवः ) ये विद्वांसो विद्यायामाशु प्रवेशशीला ज्येष्ठा अश्वा इव सन्ति ( दिधिषवः-रथ्यः-न सुदानवः ) ध्यानवन्तः स्वशरीररथस्य स्वामिनः शोभनविद्यादातारः ( आपः-न निम्नैः-उदभिः-जिगत्नवः ) नद्य इव निम्नैर्जलैरिव ज्ञानप्रवाहका विद्वांसः सन्ति ( विश्वरूपाः-अङ्गिरसः-न सामभिः ) विश्वं ज्ञानं निरूपयितारः सर्वाङ्गशास्त्रज्ञानस्य प्रेरयितारः शान्तभावैरिव यथा भवितव्यं तथा ॥ ५ ॥

**भाषान्वयार्थ**—( ये ) जो विद्वान् ( अश्वासः ) विद्या में शीघ्र प्रवेशशील ( ज्येष्ठासः:-आशवः-न ) श्रेष्ठ घोड़ों के समान हैं ( दिधिषवः ) ध्यानवान् ( रथ्यः-न ) रथस्वामियों के समान स्वशरीररथ के स्वामी ( सुदानवः ) शोभन विद्यादाता ( आपः-न ) नदियों के समान ( निम्नैः-उदभिः ) नीचे बहने वाले जल समान ( जिगत्नवः ) ज्ञान प्रवाहक हैं ( विश्व-रूपाः-अङ्गिरसः-न ) स्व ज्ञान के निरूपण करने वाले सर्वाङ्गशास्त्र ज्ञान प्रेरकों के समान ( सामभिः ) शान्तभावों से वर्तमान होते हैं ॥ ५ ॥

**भावार्थ**—जो विद्वान् विद्या में प्रवेश शील ध्यानवान् उपासक अपने शरीर रथ के स्वामी अर्थात् संयमी नम्र विद्या का प्रवाह चलाने वाले सब मनुष्यों तक प्रवृत्त होते हैं उनकी सङ्गति करनी चाहिए ॥ ५ ॥

**ग्रावा॑णो॒ न सू॒रय॒ः सिन्धु॑मातर आद॒र्दिरा॑सो॒ अद्र॑यो॒ न वि॒श्वहा॑ ।**
**शि॒शू॒ला न क्री॒ळय॑ः सु॒मा॒तरो॑ महाग्रा॒मो न याम॑न्नु॒त त्वि॒षा ॥ ६ ॥**

ग्रावा॑णः । न । सू॒रय॑ः । सिन्धु॑ऽमातरः । आ॒ऽद॒र्दि॒रास॑ः । अद्र॑यः । न । वि॒श्वहा॑ । शि॒शू॒लाः । न । क्री॒ळय॑ः । सु॒ऽमा॒तरः॑ । म॒हा॒ऽग्रा॒मः । न । याम॑न् । उ॒त । त्वि॒षा ॥ ६ ॥

**संस्कृतान्वयार्थः**—( ग्रावाणः-न सूरयः सिन्धुमातरः ) मेघा इव ज्ञानवृष्टिकरा विद्वांसो ज्ञानसिन्धुनिर्मातारः ( आदर्दिरासः-अद्रयः-न विश्वहा ) समन्तात् पापविदारकाः पाषाणाइव सदावर्तमानाः ( शिशूलाः-न क्रीळयः सुमातरः ) शिशु स्वभावा ज्ञानस्य क्रीडारूपेण प्रचारकाः सुनिर्मातारः ( महाग्रामः-न त्विषा-यामन्-उत ) महासमूहः तथा दीप्त्या यात्रायां वर्तमानाः सन्ति ॥ ६ ॥

**भाषान्वयार्थ**—( ग्रावाणः-न ) मेघों के समान ( सूरयः-सिन्धुमातरः ) ज्ञान वृष्टि करने वाले विद्वान् तथा ज्ञानसिन्धु के निर्माण करने वाले ( आदर्दिरासः ) भली भांति पाप के विदीर्ण करने वाले ( अद्रयः-न विश्वहा ) पाषाणों के समान सदा वर्तमान ( शिशूलाः-न ) शिशु स्वभाव वाले जैसे ( कीळयः-सुमातरः ) ज्ञान का क्रीडा रूप से प्रचार करने वाले, अच्छे निर्माण करने वाले ( महा-ग्रामः-न ) महासमूह जैसे ( त्विषा ) दीप्ति से ( यामन्-उत ) यात्रा में वर्तमान हैं ॥ ६ ॥

भावार्थ—ज्ञान समूह को रखने वाले जनता में उस की वृष्टि करने वाले पापों को सदा विदीर्ण करने वाले संसार में मोक्षमार्ग की यात्रा करने वाले विद्वान् धन्य हैं, उन की संगति करनी चाहिए ॥ ६ ॥

उषसां न केतवोऽध्वरश्रियः शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ॥ ७ ॥

उषसाम् । न । केतवः । अध्वरऽश्रियः । शुभम्ऽयवः । न । अञ्जिभिः । वि । अश्वितन् । सिन्धवः । ययियः । भ्राजत्ऽऋष्टयः । पराऽवतः । न । योजनानि । ममिरे ॥ ७ ॥

संस्कृतान्वयार्थः—( उषसां न केतवः-अध्वरश्रियः ) उषोवेलानां यथा किरणा भवन्ति तद्वत् तेऽध्यात्म यज्ञस्याश्रयीभूता जनेषु सदाध्यात्मयज्ञप्रचारकाः ( शुभं यवः-न-अञ्जिभिः-अश्वितन ) शुभ्रं प्रकाशस्य प्रापयितारो रश्मिभिरिव दीप्यन्ते "श्विता वर्णे" [ भ्वादि ] "लङ्गिरूपम्" ( सिन्धवः-न ययियः ) नद्य इव गन्तारो ज्ञानप्रेरकाः ( भ्राजत्-ऋष्टयः ) दीप्तज्ञानं स्रवन्तः ( परावतः न योजनानि ममिरे ) दूरदेशे अपि यथायोग्यं योजनानि निर्मान्ति ॥ ७ ॥

भाषान्वयार्थ—( उषसां न केतवः ) उषा वेलाओं की किरणें जैसे होती हैं ( अध्वरश्रियः ) अध्यात्म यज्ञ के आश्रयीभूत अर्थात् अध्यात्मयज्ञ प्रचारक ( शुभं यवः-न अञ्जिभिः शुभ्र ज्ञानप्रकाश के प्राप्त कराने वाले रश्मियों के समान ( अश्वितन् ) दीप्त होते हैं ( सिन्धवः-न-ययियः ) नदियों की भांति गति करने वाले ज्ञानप्रेरक ( भ्राजत्ऽऋष्टयः ) दीप्तज्ञान को स्रवित करने वाले (परावतः-न योजनानि ममिरे ) दूर देश में भी यथायोग्य योजनाओं का निर्माण करते हैं ॥ ७ ॥

भावार्थ—जो विद्वान् प्रातर्वेला में किरणों के समान आगे बढ़ने वाले ज्ञान के प्रकाशक, नदियों के समान प्रगतिशील दूर देशों में भी सफल योजनाओं को सफल बनाने वाले हैं, वे धन्य हैं उनकी संगति करनी चाहिए ॥ ७ ॥

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन्मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ॥ ८ ॥

सुऽभागान् । नः । देवाः । कृणुत । सुऽरत्नान् । अस्मान् । स्तोतॄन् । मरुतः । वावृधानाः । अधि । स्तोत्रस्य । सख्यस्य । गात । सनात् । हि । वः । रत्नऽधेयानि । सन्ति ॥ ८ ॥

संस्कृतान्वयार्थः—( मरुतः-देवाः ) हे जीवन्मुक्ता विद्वांसः यूयम् ( नः ) अस्मान् ( सुभागान् कृणुत ) स्वज्ञानैः सुभागवः कुरुत ( अस्मान् स्तोतॄन् वावृधानाः-

सुरत्नान् ) अस्मान् परमात्मस्तुतिकर्तॄन् वर्धयमाना अध्यात्मरमणीयसुखवतः कुरुत ( स्तोत्रस्य सख्यस्य-अधिगात ) स्तुतियोग्यस्य परमात्मना सहसखित्व सम्पादकस्य साधनस्य गातमस्मान् गायत–उपदिशत ( वः-रत्नधेयानि सनात्-हि सन्ति ) युष्माकं अस्मदर्थं रत्नानां धातव्यानि–अन्तः प्रवेष्टव्यानि स्थापनीयानि हि सन्ति ॥ ८ ॥

**भाषान्वयार्थ**—( मरुतः-देवाः ) हे जीवन्मुक्त विद्वानों ! तुम ( नः ) हमें ( सुभागान्-कृणुत ) अपने ज्ञान में सुभाग वाले-उत्तमभागीदार करो ( अस्मात् स्तोतॄन् ) हम स्तुति करने वालों को ( वावृधानाः ) बढ़ाते हुए ( सुरत्नान् ) अध्यात्म रमणीय सुख वाले करो ( स्तोत्रस्य-सख्यस्य अधिगात) स्तुति करने योग्य परमात्मा के साथ सखिभाव के साधन का उपदेश करो ( वः-रत्नधेयानि ) तुम्हारे रत्नों के धातव्य-अन्दर प्रवेष्टव्य-स्थापनीय हैं ॥ ८ ॥

**भावार्थ**—जीवन्मुक्त विद्वानों का सङ्गकर उनसे प्रार्थना करनी चाहिए कि अपने ज्ञान में भाग वाले बनावें परमात्मा के साथ मित्र-भाव हो जावे ऐसा उपदेश करें और अध्यात्मरत्न हमारे अन्दर प्रविष्ट हो जावें ॥ ८ ॥



# एकोनशीतितमं सूक्तम

ऋषिः—सौचिको वैश्वानरो वा अग्निः, वाजम्भरः सप्तिर्वा ।

देवता—अग्निः ।

छन्दः—१ पादनिचृत् त्रिष्टुप् २, ४, ६ विराट् त्रिष्टुप्, ३ निचृत् त्रिष्टुप्, ५ आर्ची विराट् त्रिष्टुप्, ७ त्रिष्टुप् ।

विषयः—अत्र सूक्ते परमात्मा जीवेभ्यो भोगपदार्थान् प्रयच्छति जीवन्मुक्तेभ्यो मोक्षं ददाति, संसारस्योत्पत्ति स्थिति संहारकारणं चेत्येवमादयो विषयाः वर्ण्यन्ते ।

इस सूक्त में परमात्मा जीवों के लिए भोग पदार्थ प्रदान करता है जीवन्मुक्तों के लिये मोक्ष देता है, संसार की उत्पत्ति स्थिति संहार का कारण भी है इत्यादि विषय वर्णित हैं ।

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ १ ॥

अपश्यम् । अस्य । महतः । महिऽत्वम् । अमर्त्यस्य । मर्त्यासु । विक्षु । नाना । हनू इति । विभृते इति विऽभृते । सम् । भरेते इति । असिन्वती इति । बप्सती इति । भूरि । अत्तः ॥ १ ॥

**संस्कृतान्वयार्थः**—(अस्य महतः-अमर्त्यस्य महित्वम्) एतस्य महद्भूतस्याविनश्वरस्य परमात्मनो महत्त्वम् गुणगौरवं स्वरूपं वा (मर्त्यासु विक्षु-अपश्यम्) मरणधर्मिणीषु स्थावर जङ्गम प्रजासु व्याप्तमहं साक्षात् करोमि सम्यक् जानामि वा (नाना हनू विभृते सं भरेते) यस्य भिन्नभिन्न रूपे हनू इवहननसाधने आदान साधने सर्वत्र सर्वं संगृह्णीतः (असिन्वती बप्सती भूरि-अत्तः) ये ते हनू बन्धनरहिते स्वतन्त्रे प्रतिबन्धरहिते भक्षयन्त्यौ भक्षणशीले अपर्याप्तं भक्षयतः "अत्ता चराचरग्रहणात्" [वेदान्त] संहार काले सर्वाः प्रजाः भक्षयति स परमात्मा ॥ १ ॥

**भाषान्वयार्थ**—(अस्य महतः) इस महान्–विभु (अमर्त्यस्य) अविनश्वर परमात्मा के (महित्वम्) महत्त्व–गुण गौरव या स्वरूप को (मर्त्यासु विक्षु) मरणधर्मी स्थावर जङ्गम प्रजाओं में व्याप्त हुए को (अपश्यम्) मैं साक्षात् करता हूँ या जानता हूँ (नाना-हनू) जिस के

भिन्न-भिन्न हनु की भांति हनन साधन-ग्रहण साधन सर्वत्र ( विभृते सम्भरेते ) सब को संगृहीत करते हैं, सम्यक् ले लेते हैं ( असिन्वती ) वे हनन साधन बन्धन रहित ( वप्सती ) भक्षण करने वाले-भक्षणशील ( भूरि-अत्तः ) बहुत भक्षण कर लेते हैं-संहार काल में सारी प्रजाओं को परमात्मा भक्षण कर लेता है ॥ १ ॥

भावार्थ—परमात्मा महान् है विभु है इसका महत्त्व समस्त स्थावर जंगम वस्तुओं में व्याप्त है। संहार काल में सब को अपने अन्दर ले लेता है, इस ऐसे उत्पादक, धारक, संहारक को मानना और उस की उपासना करनी चाहिए ॥ १ ॥

गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ।
अत्राण्यस्मै पड्भिः संभरन्त्युत्तान हस्ता नमसाधि विक्षु ॥ २ ॥

गुहा । शिरः । निऽहितम् । ऋधक् । अक्षी इति । असिन्वन् । अत्ति । जिह्वया । वनानि । अत्राणि । अस्मै । पट्ऽभिः । सम् । भरन्ति । उत्तानऽहस्ताः । नमसा । अधि । विक्षुः ॥ २ ॥

संस्कृतान्वयार्थः—( शिरः-गुहा निहितम् ) अस्य शिरोवदुत्तमं धाम मुक्तानामाश्रयणीयो मोक्षः सूक्ष्मस्थितौ रक्षितम् ( अस्मै ) एतस्मै परमात्मने ( विक्षुः-अधि ) समस्तासु प्रजासु मध्ये ( उत्तानहस्ता ) ये सन्ति खलूत्तानहस्ता उदारहस्ताः सरलभावाः ( नमसा ) स्तुत्या ( पड्भिः ) योगाङ्गैः ( अत्राणि सम्भरन्ति ) स्वकीयानि साधुभोक्तव्यानि कर्माणि सम्पादयन्ति ॥ २ ॥

भाषान्वयार्थ—( शिरः ) इस का सिर के समान उत्तम धाम मोक्षरूप ( गुहा निहितम् ) सूक्ष्म स्थिति में रखा है ( अस्मै ) इस परमात्मा के लिए ( विक्षुः-अधि ) समस्त प्रजाओं के मध्य ( उत्तानहस्ताः ) जो उदार हाथ वाले-सरलभाव वाले ( नमसा ) स्तुति के द्वारा ( पड्भिः ) योगाङ्गों से ( अत्राणि सम्भरन्ति ) स्वकीय अच्छे भोक्तव्य कर्मों का सम्पादन करते हैं ॥ २ ॥

भावार्थ—मुक्तात्माओं का आश्रय योग्य धाम मोक्ष है, जो मनुष्य उदार भावनाओं वाले स्तुति और योगाङ्गों का सेवन करके उत्तम कर्म करते हैं वे मोक्ष के भागी बनते हैं ॥ २ ॥

प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ ३ ॥

प्र । मातुः । प्रऽतरम् । गुह्यम् । इच्छन् । कुमारः । न । वीरुधः । सर्पत् । उर्वीः । ससम् । न । पक्वम् । अविदत् । शुचन्तम् । रिरिह्वांसम् । रिपः । उपऽस्थे । अन्तरिति ॥ ३ ॥

**संस्कृतान्वयार्थः**— ( मातुः प्रतरं गुह्यम्-इच्छन् ) तस्य परमात्मनो मातृभूतस्य प्रकृष्टतरं गुप्तं मोक्षधाम वाञ्छन्-उपासक आत्मा ( कुमारः-न उर्वीः-वीरुधः प्रसर्पत् ) बाल इव बहुविधानि रचनाविशेषेण कार्यकारण द्रव्याणां विरोहणे योग्य भूमिः "वीरुत्सु सत्ता रचनाविशेषेषु निरुद्धेषु कार्यकारणद्रव्येषु" [ ऋ० १ । ६७ । ५ दयानन्दः] प्राप्नोति ( पक्वं शुचन्तं ससम् न ) पक्वं शुभमन्नमिव कर्मफलं ( रिरिह्वांसं रिपः-उपस्थे-अन्तः ) आस्वादयन्तं पृथिव्याः-उपस्थे-शरीरस्थाने-अन्तर्गते प्राप्नोति ॥ ३ ॥

**भाषान्वयार्थ**—( मातुः ) उस माता परमात्मा के ( प्रतरम् ) प्रकृष्टतर–अत्युत्तम ( गुह्यम् ) गुप्त मोक्ष धाम को ( इच्छन् ) चाहता हुआ उपासक आत्मा ( कुमारः-न ) बालक के समान ( उर्वीः-वीरुधः ) बहुविध रचना विशेष से कार्य कारण द्रव्यों की विरोहण करने योग्य भूमियों को ( प्रसर्पत ) प्राप्त होता है ( पक्वं शुचन्तम् ) पके हुए शुभ्र ( ससं न ) अन्न की भांति कर्म फल को ( रिरिह्वांसम् ) आस्वादन करते हुए को ( रिपः-उपस्थे अन्ते ) शरीर स्थान के अन्तर्गत ( अविदत् ) प्राप्त होता है ॥ ३ ॥

**भावार्थ**—उपासक आत्मा माता परमात्मा के आनन्द धाम मोक्ष का आस्वादन करने के लिए ऐसे प्राप्त होता है जैसे कोई बालक कर्मानुसार युवति माता के आश्रय में सुखों को प्राप्त करता है ॥ ३ ॥

**तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति ।**
**नाहं देवस्य मर्त्यश्चिकेताग्निरङ्ग विचेताः स प्रचेताः ॥ ४ ॥**

तत् । वाम् । ऋतम् । रोदसी इति । प्र । ब्रवीमि । जायमानः । मातरा । गर्भः । अत्ति । न । अहम् । देवस्य । मर्त्यः । चिकेत । अग्निः । अङ्ग । विऽचेताः । सः । प्रऽचेताः ॥ ४ ॥

**संस्कृतान्वयार्थः**—( रोदसी मातरा ) हे रोधसी-पापादुरोधयितुमा निरोधयित्र्यौ मातापितरौ ( वाम् ) युवयोः ( तत्-ऋतं प्र ब्रवीमि ) तं सत्यव्यवहारं प्रकथयामि ( जायमानः-गर्भः-अत्ति ) जनिष्यमाणो गर्भभूतो बालो युवां खादति युवाभ्यामेवाहारं गृह्णाति ( अहम्-अग्निः-मर्त्यः-देवस्य न चिकेत ) अहं शरीरनेता जीवात्मा जन्मदातुः परमात्मनः स्वरूपं न वेद ( अङ्ग विचेताः सः प्रचेताः ) अरे स यो विशिष्टतया चेतयिता प्रचेतयिता चास्ति ॥ ४ ॥

**भाषान्वयार्थ**—( रोदसी मातरा ) हे पापों के रोध-निरोध निवारण करने वाले माता-पिताओ ( वाम् ) तुम दोनों के ( तत्-ऋतं प्रब्रवीमि ) उस सत्य व्यवहार को मैं कहता हूँ, कि ( जायमानः-गर्भः-अत्ति ) उत्पन्न होने वाला गर्भरूप बालक तुम दोनों को खाता है तुम दोनों से आहार ग्रहण करता है ( अहम्-अग्निः- मर्त्यः ) मैं शरीर का नेता जीवात्मा ( देवस्य न चिकेत)

जन्मदाता परमात्मा के स्वरूप को नहीं जानता (अङ्ग विचेताः स प्रचेताः ) वह विशेष चेताने वाला तथा प्रकृष्ट चेताने वाला हैं ॥ ४ ॥

भावार्थ—माता पिता बालक को अनेक दोषों से बचावें या बचाया करते हैं। बालक जन्म से ही माता पिता के अङ्गों से बढ़ता है तथा उत्पन्न करने वाला परमात्मा उसे विशेष सावधान करता है संसार में रहने के लिए तथा प्रकृष्ट रूप में प्रबुद्ध करता है मोक्ष प्राप्ति के लिए वह उसे भी नहीं जानता है उसे जानना और मानना चाहिए इसी में कल्याण है ॥ ४ ॥

**यो अस्मा अन्नं तृष्वा३दधात्याज्यैर्घृतैर्जुहोति पुष्यति ।**
**तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वम् ॥ ५॥**

यः । अस्मै । अन्नम् । तृषु । आऽदधाति । आज्यैः । घृतैः । जुहोति । पुष्यति । तस्मै । सहस्रम् । अक्षऽभिः । वि । चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वम् ॥ ५ ॥

संस्कृतान्वयार्थः—( यः ) यः परमात्मा ( अस्मै ) एतस्मै जीवात्मने ( तृषु-अन्नम्-आदधाति ) क्षिप्रं सद्यः "तृषु क्षिप्र नाम" [ निघं० २ । १५ ] अदनीयं पानीयमाहारं दुग्धरूपं मातृस्तने रसं वनस्पतिषु स्थापयति ( आज्यैः-घृतैः-तस्मै जुहोति पुष्यति ) प्राणैः "प्राणो वा आज्यम्" [ तै० ३ । ८ । १५ । २३ ] भिन्न भिन्न तेजोभिश्च तम् विभक्तिव्यत्ययेन चतुर्थी स्वीकरोति वर्धयति पोषयति ( अग्ने ) हे परमात्मन् ! ( सहस्रम्-अक्षभिः ) बहुभिरनन्त व्याप्तदर्शनशक्तिभिः ( विचक्षे ) विशिष्टं पश्यसि जानासि ( त्वं विश्वतः प्रत्यङ्-असि ) सर्वत्र साक्षाद्भूतोऽसि ॥ ५ ॥

भाषान्वयार्थ—( यः ) जो परमात्मा ( अस्मै ) इस जीवात्मा के लिए ( तृषु ) शीघ्र-तत्काल-जन्म समय ही ( अन्नम् ) दुग्धरूप आहार को ( आदधाते ) माता के स्तनों में स्थापित करता है तथा वनस्पतियों में रखता है ( आज्यैः-घृतैः ) प्राणों से और भिन्न-भिन्न तेजों से (तस्य) तम् ( जुहोति पुष्यति ) अपनी शरण देता है और पोषण करता है ( अग्ने ) हे परमात्मन् ( सहस्रम-अक्षभिः ) अनन्त व्याप्त दर्शन शक्तियों से ( विचक्षे ) विषिष्ट रूप से देखता है जानता है ( त्वं विश्वतः प्रत्यङ्-असि ) तू सर्वत्र साक्षात् विराजमान है ॥ ५ ॥

भावार्थ—जैसे जीवात्मा संसार में जन्म लेता है उसी समय से तुरन्त ही परमात्मा उसके आहार की व्यवस्था करता है माता के स्तनों में दूध देता है वनस्पतियों में रस देता है तथा प्राणों और जीवन प्रद तेज प्रभावों से बढ़ाता और पुष्ट करता है तथा अपनी अनन्त ज्ञान दृष्टियों से सब कुछ जानता है और सर्वत्र विराजमान है ॥ ५ ॥

**किं देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान् ।**
**अक्रीळन् क्रीळन् हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥ ६ ॥**

किम् । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु । त्वाम् । अविद्वान् । अक्रीळन् । क्रीळन् । हरिः । अत्तवे । अदन् । वि । पर्वऽशः । गाम्ऽइव । असिः ॥ ६ ॥

**संस्कृतान्वयार्थः**—( अग्ने देवेषु किं त्यजः-एनः-चकर्थ ) हे अग्रणायक परमात्मन् ! देवेषु विद्वत्सु जीवन्मुक्तेषु कथं क्रोधः "त्यजः क्रोधनाम" निघं० ( २ । १३ ] तथा पापं करोषि न कथमपीत्यर्थः ( नु-अविद्वान् त्वां पृच्छामि ) पुनस्त्वामहमविद्वान् पृच्छामि ( अक्रीडन् क्रीडन् हरिः-अत्तवे-अदन् ) अजानन्, जानन् संहर्ता स्वस्मिन् ग्रहणाय गृह्णन् सन् ( असिः पर्वशः-गाम्-इव विचकर्त ) यथा दात्रमन्नतरुम् "अन्नं वै गौः" [ श० ४ । ३ । ४ । २५ ] प्रतिपर्वं छिनत्ति ॥ ६ ॥

**भाषान्वयार्थ**—) अग्ने ) हे अग्रणायक परमात्मन् ! तू ( देवेषु ) जीवन्मुक्त विद्वानों में ( त्यजः-एनः ) क्रोध तथा पाप ( किं चकर्थ ) क्या करता है ? अर्थात् नहीं करता है ( नु-अविद्वान् त्वां पृच्छामि ) अविद्वान् होता हुआ तुझ से पूछता हूँ ( अक्रीडन् क्रीड ( हरिः ) न जानता हुआ या जानता हुआ तू संहर्ता ( अत्तवे-अदन् ) अपने में ग्रहण करने के लिए ग्रहण करता हुआ ( असिः ) द्रांती ( पर्वशः ) टुकड़े टुकड़े कर ( गाम्-इव ) अन्न के पौधे को जैसे ( विचकर्त ) छिन्न-भिन्न कर देती है ॥ ६ ॥

**भावार्थ**—परमात्मा जीवन्मुक्त विद्वानों के निमित्त कोई क्रोध या अहित कार्य नहीं करता है । इस बात को अविद्वान् नहीं जान सकता किन्तु वह जो संसार में जनमा है लीलया उसका संहार करके अपने में ले लेता है प्रत्येक अङ्ग का विभाग करके ॥ ६ ॥

**विषूचो अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान् ।**
**चक्षदे मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥ ७ ॥**

विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः । रशनाभिः । गृभीतान् । चक्षदे । मित्रः । वसुऽभिः । सुऽजातः । सम् । आनृधे । पर्वऽभिः । ववृधानः ॥ ७ ॥

**संस्कृतान्वयार्थः**—( वनेजाः ) सम्भजनीये शरीरे जातोऽयमात्मा ( ऋजीतिभिः-रशनाभिः-गृभीतान् ) सरलाभिरशनयोग्याभिर्भोगप्रवृत्तिभि गृहीतान् ( विषूचः-अश्वान् युयुजे ) भिन्न भिन्न विषयकान्-इन्द्रियाश्वान् योजयति ( मित्रः-वसुभिः सुजातः-चक्षदे ) स स्नेहकर्ता रागी प्राणैः सह प्रसिद्धो ज्ञानी भवति ( पर्वभिः-वावृधानः समावृधे ) काल पर्वभिर्वर्धमानः स्वाङ्गै रपि सम्यगृद्धिमाप्नोति ॥ ७ ॥

**भाषान्वयार्थ**—( वनेजाः ) सम्भजनीय शरीर में उत्पन्न यह आत्मा ( ऋजीतिभिः ) सरल—( रशनाभिः ) अशन योग्य प्रवृत्तियों द्वारा ( गृभीतान् ) गृहीत—( विषूचः-अश्वान् ) भिन्न

भिन्न विषय वाले इन्द्रिय घोड़ों को ( युयुजे ) युक्त करता है–जोड़ता है ( मित्रः ) वह स्नेह कर्ता–रागी ( वसुभिः ) प्राणों के साथ ( सुजातः ) सुप्रसिद्ध हुआ ( चक्षदे ) ज्ञानवान् होता है–चेतन होता है ( पर्वभिः ) काल पर्वों से तथा स्वाङ्ग पर्वों से तथा–अपने शरीर जोड़ों से ( वावृधानः ) बढ़ता हुआ ( समावृधे ) समृद्ध होता है–यौवन को प्राप्त होता हैं ॥ ७ ॥

**भावार्थ**—आत्मा शरीर के अन्दर प्राणों के साथ प्रसिद्ध हो जन्म लेता है और भोग प्रवृत्तियों में इन्द्रियों को लगाता है, धीरे-धीरे समय पाकर तथा अपने अङ्गों से पूर्ण आयु को प्राप्त होता है ॥ ७ ॥



# अशीतितमं सूक्तम्

ऋषिः—सौचिको वैश्वानरो वा-अग्निः ।

देवता—अग्निः ।

छन्दः—१, ५, ६ विराट् त्रिष्टुप्, २-४ पादनिचृत् त्रिष्टुप् ३, ७ निचृत् त्रिष्टुप् ।

विषयः—अस्मिन् सूक्ते परमात्मा स्वस्तुति कर्तारं जनं पापान्निवारयति मोक्षं च तस्मै प्रयच्छतीत्येवमादयो विषयाः सन्ति ।

इस सूक्त में परमात्मा अपने स्तुति करने वाले को पाप से बचाता है मोक्ष प्रदान करता है इत्यादि विषय है ।

अ॒ग्निः सप्ति॑ वाजंभ॒रं द॑दात्य॒ग्निर्वी॒रं श्रुत्यं॑ कर्मनि॒ःष्ठाम् ।
अ॒ग्नी रोद॑सी॒ वि च॑रत्सम॒ञ्जन्न॒ग्निर्नारीं॑ वी॒रकु॑क्षिं पुरं॑धिम् ॥ १ ॥

अ॒ग्निः । सप्ति॑म् । वा॒ज॒म्ऽभ॒रम् । द॒दा॒ति । अ॒ग्निः । वी॒रम् । श्रु॒त्य॑म् । क॒र्म॒नि॒ःऽस्थाम् । अ॒ग्निः । रोद॑सी॒ इति॑ । वि । च॒र॒त् । स॒म्ऽअ॒ञ्जन् । अ॒ग्निः । नारी॑म् । वी॒रऽकु॑क्षिम् । पुर॑म्ऽधिम् ॥ १ ॥

**संस्कृतान्वयार्थः**—( अग्निः ) ज्ञानप्रकाशस्वरूपः परमात्मा ( सप्तिं वाजम्भरं ददाति ) सरणं गमनशीलं प्राणं "सप्तेः सरणस्य" [ निरु० ६ । ३ ] वेगधारकं मनः "वाजम्भरं यो वाजंवेगं विभर्तितम्" [ ऋ० १ । ६० । ५ दयानन्दः ] ( अग्निः ) परमात्मा ( श्रुत्यं कर्मनिष्ठां वीरम् ) श्रोतारं श्रवणशीलमाज्ञाकारिणं कर्मणि श्रद्धावन्तं पुत्रं ददाति ( अग्निः ) परमात्मा ( रोदसी समञ्जन् विचरत् ) रोधसी गृहस्थाश्रमस्य रोधकौ स्त्रीपुरुषौ परस्परं संयोजयन् व्याप्नोति ( वीरकुक्षिं पुरन्धि नारीम् ) वीरः पुत्रः कुक्षौ यस्यास्तथाभूतां पुरं धारयित्रीं स्त्रियं करोति–सम्पादयति ॥ १ ॥

**भाषान्वयार्थ**—( अग्निः ) ज्ञानप्रकाशस्वरूप परमात्मा ( सप्तिम् ) गमनशील प्राण को ( वाजम्भरम् ) वेग धारण करने वाले मन को ( ददाति ) देता है ( अग्निः ) परमात्मा ( श्रुत्यम् ) श्रवणशील आज्ञाकारी ( कर्म निष्ठाम् ) कर्म में श्रद्धा वाले ( वीरम् ) पुत्र को देता है ( अग्निः ) परमात्मा ( रोदसी ) गृहस्थाश्रम के संभालने वाले स्त्रीपुरुषों को ( समञ्जन् )

परस्पर संयुक्त करने को ( विचरत् ) विशेष प्रेरणा देता है ( वीरकुक्षिम् ) पुत्र कुक्षि में जिसकी हो ऐसी ( पुरन्धिं नारीं ) पुर नगर तथा घर को धारण करने वाली स्त्री को सम्पादित करता है ॥ १ ॥

**भावार्थ**—परमात्मा मानव को संसार में कार्य सिद्धि के लिए प्राण और मन प्रदान करता है और आज्ञाकारी पुत्र को भी प्रदान करता है। गृहस्थ आश्रम को धारण करने के लिए स्त्री-पुरुषों को प्रेरित करता है और स्त्री को पुत्र को गर्भ में धारण करने के योग्य बनाता है ॥ १ ॥

**अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आ विवेश।**
**अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥**

अग्नेः। अप्नसः। सम्ऽइत्। अस्तु। भद्रा। अग्निः। मही इति। रोदसी इति। आ। विवेश। अग्निः। एकम्। चोदयत्। समत्ऽसु। अग्निः। वृत्राणि। दयते। पुरूणि ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अप्नसः-अग्नेः समित्-भद्रा अस्तु ) कर्मवतः-संसाररचनं जीवेभ्यः कर्मफलप्रदानं कर्मयस्य तथाभूतस्य परमात्मनः समित्-अपहृतिः पवित्रा स्तुतिर्भवतु ( अग्निः-मही-रोदसी-आविवेश ) परमात्मा महत्यौ द्यावापृथिव्यौ समन्तादाविशति प्रविष्टोऽस्ति ( अग्निः ) स अग्रणायकः परमात्मा आग्नेयास्त्रवेत्तेव ( एकं समत्सु चोदयत् ) एकाकिनमपि संग्रामेषु प्रेरयति बलं प्रयच्छति ( अग्निः पुरुणि वृत्राणि दयते ) परमात्मा बहूनि. पापानि आवरकाणि शत्रुवृन्दानि नाशयति "दयते-दयमानो शत्रून् इतिहिंसा कर्मा" [ निरु० ४ । १७ ] ॥ २ ॥

**भाषान्वयार्थ**—( अप्नसः-अग्नेः ) संसार की रचना और जीवों के लिए कर्मफल प्रदान करना कर्म जिस का है ऐसे परमात्मा की ( समित्-भद्रा-अस्तु ) भेंट पवित्र स्तुति है ( अग्निः ) परमात्मा ( मही-रोदसी ) महान् द्युलोक पृथिवी लोक को ( आविवेश ) आविष्ट प्रविष्ट है ( अग्निः ) वह अग्रणायक परमात्मा आग्नेयास्त्रवेत्ता की भान्ति ( एकं-समत्सु चोदयत् ) अकेले को भी संग्रामों में प्रेरणा करता है-बल प्रदान करता है ( अग्निः ) परमात्मा ( पुरुणि-वृत्राणि ) बहुत पापों या घेरने वाले शत्रुदलों को ( दयते ) नष्ट करता है ॥ २ ॥

**भावार्थ**—संसार के रचयिता तथा जीवों के कर्मफल प्रदाता की भेंट भौतिक वस्तु नहीं है किन्तु आत्मभाव भरी स्तुति है, वह द्यावापृथिवीमय जगत् में व्यापक है, वह अकेले मनुष्य को भी विरोधियों को दबाने के के लिए बल प्रदान करता है ॥ २ ॥

**अग्निर्हत्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम्।**
**अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजयासृजत्सम् ॥ ३ ॥**

अग्निः । ह । त्यम् । जरतः । कर्णम् । आव । अग्निः । अत्ऽभ्यः । निः । अदहत् । जरूथम् । अग्निः । अत्रिम् । घर्मे । उरुष्यत् । अन्तः । अग्निः । नृऽमेधम् । प्रऽजया । असृजत् सम् ॥ ३ ॥

**संस्कृतान्वयार्थः**—( अग्निः ) अग्रणेता परमात्मा ( ह ) निश्चयेन ( जरतः ) स्तुवतः स्तुतिं कुर्वतः-उपासकस्य ( त्यं कर्णम् ) तं कर्णं स्तुतिश्रृण्वन्तम् ( आव ) अवति रक्षति स्व स्तुतौ स्थापयति ( अग्निः ) परमात्मा ( जरूथम् ) गरूथं स्तोतारम् ( अद्भ्यः ) अमृतेभ्यः प्राणेभ्यः "प्राणा वा आपः" [ तै० ३ । २ । २ ] "अमृतो ह्यापः" [ श० ३ । ६-। ४ । १६ ] ( निर्-अदहत् ) निरयच्छत् प्रयच्छति ददाति "दह धातुरत्र दानार्थे" "मातिधक्-मास्मानतिहाय दाः" [ निरु० १ । ७ ] भौतिकाग्निरिव न दहति "निर्-उपसर्गो निषेधे निराकरणे वर्तते" "निर् निषेधे" [ अव्ययार्थनिबन्धनम् ) यथा निःशुल्कः, निष्कामः "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" [ योग० १ । ५१ ] अपितु तद्विपरीतम् "अद्भ्यो जलेभ्यः समर्पयति" ( अग्निः ) परमात्मा ( अत्रिं घर्मे-उरुष्यत् ) जरतः स्तुवतोवाचम् "वागत्रिः" [ श० १४ । ५ । २ । २ । ] यज्ञे 'घर्मो यज्ञनाम' [ निघ० ३ । १७ ] रक्षति "उरुष्यतिरक्षा कर्मा" [ निरु० ५ । २३ ] पुनः ( अग्निः ) परमात्मा ( नृमेधं प्रजया सम्-असृजत ) नृषु प्रजासु "प्रजा वै नरः" [ ऐ० २ । ४ ] मेधा संकल्पः कामो यस्य सनृमेधस्तं प्रजाकामं प्रजया पुत्रादिकया सह संयुक्तं करोति ॥ ३ ॥

**भाषान्वयार्थ**—( अग्निः ) अग्रणेता परमात्मा ( ह ) निश्चय ( जरतः ) स्तुति करते हुए उपासक के ( त्यं कर्णम् ) उस स्तुति सुनते हुए कान की ( आव ) रक्षा करता है–अपनी स्तुति में स्थिर करता है ( अग्निः ) परमात्मा ( जरूथम् ) स्तुति करने वाले को ( अद्भ्यः ) अमृत प्राणों के लिए, 'अमृत प्राणों की प्राप्ति के लिए' ( निर-अदहत् ) देता है अथवा भौतिक अग्नि की भान्ति नहीं जलाता है ( अग्निः ) परमात्मा ( अत्रिम् ) स्तुति करने वाले की वाणी को ( घर्मे ) अध्यात्म यज्ञ में ( उरुष्यत् ) रक्षित करता है ( अग्निः ) परमात्मा ( नृमेधम् ) प्रजा के संकल्प करने वाले को ( प्रजया ) प्रजा से सन्तान से ( सम्-असृजत् ) संयुक्त करता है ॥ ३ ॥

**भावार्थ**—परमात्मा अपनी स्तुति करने वाले के स्तुति सुनते हुए कान की रक्षा करता है और उस की वाणी को सुरक्षित रखता है, संसार में उसे सन्तान वाला मोक्ष में अमृत प्राण प्रदान करता है ॥ ३ ॥

**अग्निर्दाद्द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।**
**अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥ ४ ॥**

अग्निः । दात् । द्रविणम् । वीरऽपेशाः । अग्निः । ऋषिम् । यः । सहस्रा । सनोति । अग्निः । दिवि । हव्यम् । आ । ततान । अग्नेः । धामानि । विऽभृता । पुरुऽत्रा ॥ ४ ॥

**संस्कृतान्वयार्थः**—( वीरपेशाः-अग्निः-ह ) वीरस्वरूपः परमात्मा निश्चयेन ( द्रविणं ऋषिं दात् ) मोक्षैश्वर्यम्-ऋषये "विभक्ति व्यत्ययेन-चतुर्थी स्थाने द्वितीया" स्वकीये द्रष्ट्रे ददाति ( यः सहस्रा सनोति ) यो बहूनि स्तुतिवचनानि तस्मै परमात्मने प्रयच्छति ( अग्निः ) परमात्मा ( दिवि हव्यं आततान ) ऋषिणा दातव्यं स्तुतिवचनं मोक्षधामनि विस्तारयति ( अग्नेः-धामानि पुरुत्रा विभृता ) परमात्मनो व्याप्तानि स्थानानि बहुत्र धृतानि सन्ति ॥ ४ ॥

**भाषान्वयार्थ**—( वीरपेशाः-अग्निः-ह ) वीरस्वरूप परमात्मा निश्चय ( ऋषिं द्रविणं दात् ) अपने द्रष्टा के लिए मोक्षैश्वर्य देता है ( यः सहस्रा सनोति ) जो बहुत स्तुति वचनों को उसके लिए समर्पित करता है ( अग्निः ) परमात्मा ( दिवि ) मोक्ष धाम में ( हव्यं आततान ) स्तुति वचनों का विस्तार करता ( अग्नेः-धामानि ) परमात्मा के व्याप्त धाम ( पुरुत्रा विभृता ) बहुत नियत हैं ॥ ४ ॥

**भावार्थ**—परमात्मा अपने द्रष्टा-दर्शन के इच्छुक के लिए मोक्षैश्वर्य देता है जो उसके लिए बहुत सुखी वचनों को समर्पित करता है उन स्तुतियों का विस्तृत फल मोक्ष प्राप्ति है ॥ ४ ॥

अग्निमुक्थैर्ऋषयो विह्वयन्तेऽग्निं नरो यामनि बाधितासः ।
अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ ५ ॥

अग्निम् । उक्थैः । ऋषयः । वि । ह्वयन्ते । अग्निम् । नरः । यामनि । बाधितासः ।
अग्निम् । वयः । अन्तरिक्षे । पतन्तः । अग्निः । सहस्रा । परि । याति । गोनाम्
॥ ५ ॥

**संस्कृतान्वयार्थः**—( ऋषयः-उक्थैः-अग्निं विह्वयन्ते ) दर्शनशीला उपासकाः वेदवचनैः परमात्मानं विशिष्टतया आमन्त्रयन्ते ( बाधितासः-नरः-अग्निं यामनि ) कामादि दोषैर्बाधिता जना अवसरे परमात्मानं स्मरन्ति ( अन्तरिक्षे पतन्तः-वयः-अग्निम् ) अन्तरिक्षे गच्छन्तः पक्षिण इव उन्नतिपथगा जना उपासन्ते ( अग्निः-गोनां सहस्रा परियाति ) परमात्मा वेदवाचां सहस्राणि प्रयोजनानि परि प्रापयति "अन्तर्गतणिजर्थः" ॥ ५ ॥

**भाषान्वयार्थ**—( ऋषयः ) दर्शनशील उपासकजन ( उक्थैः ) वेदवचनों तथा स्तुति वचनों के द्वारा (अग्निम्) परमात्मा को (विह्वयन्ते) विशेष रूप से आमन्त्रित करते हैं (बाधितासः-नरः ) कामादि दोषों से पीड़ित जन ( यामनि ) अवसर पर ( अग्निम् ) परमात्मा को स्मरण करते हैं ( अन्तरिक्षे पतन्तः-वयः-अग्निम् ) आकाश में उड़ते हुए पक्षियों की भांति उन्नतिपथ की ओर जाते हुए परमात्मा की उपासना करते हैं ( अग्निः ) परमात्मा ( गोनां सहस्रा ) वेदवाणियों के सहस्र प्रयोजनों को ( परियाति ) परिप्राप्त कराता है ॥ ५ ॥

  

**भावार्थ**—कामादि दोषों से पीड़ित जन परमात्मा का स्मरण करें उन्नति की ओर चलने वाले जन उसकी उपासना करें, परमात्म दर्शन के इच्छुक महानुभाव वेदवचनों से उस का आमन्त्रण करें, इस प्रकार उन के सहस्र गुणित प्रयोजनों को परमात्मा प्राप्त कराता है ॥ ५ ॥

**अ॒ग्निं विश॑ ईळते॒ मानु॑षी॒र्या अ॒ग्निं मनु॑षो॒ नहु॑षो॒ वि जा॒ताः ।**
**अ॒ग्निर्गान्ध॑र्वीं प॒थ्या॑मृ॒तस्या॒ग्नेर्गव्यू॑तिर्घृ॒त आ निष॑त्ता ॥ ६ ॥**

अ॒ग्निम् । विशः॑ । ई॒ळ॒ते॒ । मानु॑षीः । याः । अ॒ग्निम् । मनु॑षः । नहु॑षः । वि । जा॒ताः । अ॒ग्निः । गान्ध॑र्वीम् । प॒थ्या॑म् । ऋ॒तस्य॑ । अ॒ग्नेः । गव्यू॑तिः । घृ॒ते । आऽनिस॑त्ता ॥ ६ ॥

**संस्कृतान्वयार्थः**—( मानुषीः-याः-विशः-अग्निम्-ईडते ) मनुष्य सम्बन्धिन्यो याः प्रजाः सन्ति ताः परमात्मानं स्तुवन्ति ( नहुषः-मनुषः-विजाताः ) बन्धन दग्धुः परममननशीलादृषेर्विशिष्टोपदेशात् प्रसिद्धिं प्राप्ता या प्रजाः ( अग्निम् ) परमात्मान-माश्रयन्ति ( अग्निः ) परमात्मा ( ऋतस्य पथ्यां गान्धर्वीम् ) ज्ञानमयस्य वेदस्य हितकरीं वाचमुपदिशति ( अग्नेः-गव्यूतिः-घृते-आनिषत्ता ) परमात्मनस्तेजसि जीवनमार्ग पद्धतिः समन्तात् तत्र नियता भवति ॥ ६ ॥

**भाषान्वयार्थ**—( मानुषीः ) मनुष्यसम्बन्धी ( याः ) जो ( विशः ) प्रजाएं हैं वे (अग्निम्) परमात्मा की ( ईडते ) स्तुति करती हैं ( नहुषः-मनुषः-विजाताः ) बन्धन दग्ध करने वाले परम मननशील ऋषि के विशिष्ट उपदेश से प्रसिद्धि को प्राप्त ( प्रजाः ) प्रजाएं ( अग्निम् ) परमात्मा को आश्रित करती हैं ( अग्निः ) परमात्मा ( ऋतस्य पथ्याम् ) ज्ञानमय वेद की हितकरी ( गान्धर्वीम् ) वाणी का उपदेश करता है ( अग्नेः ) परमात्मा के ( गव्यूतिः ) जीवनमार्ग की पद्धति ( घृते-आनिषत्ता ) उसके तेज में भलिभांति नियत है ॥ ६ ॥

**भावार्थ**—मनुष्य प्रजाएं परमात्मा की स्तुति करें बन्धन के छुड़ाने वाले ऋषि के उपदेश से उत्तम प्रजाएं बनकर परमात्मा को प्राप्त होती है तथा उसकी कल्याणकारी वेद वाणी जीवनमार्ग दर्शाती है ॥ ६ ॥

**अ॒ग्नये॒ ब्रह्म॑ ऋ॒भव॑स्ततक्षुर॒ग्निं म॒हाम॑वोचामा सु॒वृ॒क्तिम् ।**
**अग्ने॒ प्राव॑ जरि॒तारं॑ यवि॒ष्ठाग्ने॒ महि॒ द्रवि॑ण॒मा य॑जस्व ॥ ७ ॥**

अ॒ग्नये॑ । ब्रह्म॑ । ऋ॒भवः॑ । त॒त॒क्षुः॒ । अ॒ग्निम् । म॒हाम् । अ॒वो॒चा॒म॒ । सु॒ऽवृ॒क्तिम् । अग्ने॑ । प्र । अ॒व॒ । ज॒रि॒तार॑म् । य॒वि॒ष्ठ॒ । अग्ने॑ । महि॑ । द्रवि॑णम् । आ । य॒ज ॥ ७ ॥

संस्कृतान्वयार्थः—( ऋभवः ) ज्ञानेन भासमाना ऋषयो मेधाविनः "ऋभुर्मेधाविनाम" [ निघ० ३ । १५ ] ( अग्नये ) परमात्मने ( ब्रह्म ततक्षुः ) महास्तुति समूहं समर्पयन्ति ( महाम्-अग्निम्-सुवृक्तिम्-अवोचाम ) महान्तं परमात्मानं स्तुतिं ब्रूमः "सुवृक्तिभिः स्तुतिभिः" [ निरु० २ । २४ ] ( यविष्ठ-अग्ने जरितारं प्राव ) हे मिश्रण-धर्मन् परमात्मन् ! त्वं स्तोतारं प्रकृष्टं रक्ष ( अग्ने महि द्रविणम्-आयजस्व ) परमात्मन् ! महत्त्वपूर्णं धनं मोक्षैश्वर्यं समन्तात् प्रयच्छ ॥ ७ ॥

भाषान्वयार्थ—( ऋभवः ) ज्ञान से भासमान प्रकाशमान मेधावी जन ( अग्नये ) पर-मात्मा के लिए ( ब्रह्म ) महान् स्तुति समूह को ( ततक्षुः ) सम्पन्न करते हैं–समर्पित करते हैं ( महाम्-अग्निम् ) महान् परमात्मा के प्रति ( सुवृक्तिम्-अवोचाम ) स्तुति को बोलते हैं–करते हैं ( यविष्ठ-अग्ने ) हे मिलने का धर्म रखने वाले परमात्मन् ! ( ज़रितारं प्राव ) स्तुति करने वाले की रक्षा कर ( अग्ने महि द्रविणम् ) हे परमात्मन् ! महत्त्वपूर्ण मोक्ष-ऐश्वर्य को ( आयजस्व ) भलिभांति प्रदान कर ॥ ७ ॥

भावार्थ—ज्ञानी और मेधावी जन परमात्मा की बहुत प्रकार से स्तुति करते हैं वह स्तुति करने वाले को मोक्ष-ऐश्वर्य प्रदान करता है ॥ ७ ॥



